सर्वाङ्गोपदेशो यत्र तत्रैव प्रकृतित्वेन प्रकृते तदभावात् । अत एव च ग्रह- से मेधीयसोमवदन्यतरस्यापूर्वत्वम् । एतेन चक्रसङ्केतमन्त्रसङ्केतविहितोपास्तीनामेव प्रकरणित्वकल्पनयोत्तरत्र विहितपूजाया एतदङ्गत्वमस्त्वित्यपास्तम्, पूर्वं विहितायाः पूजायाः प्रधानभूताया एवेह विभज्याङ्गकथनप्रत्यभिज्ञादिभिरैक्य-सिद्धेर्भाव्यान्तराकाङ्क्षाभावेऽन्याङ्गत्वकल्पनानुदयात्, अत्रत्योपास्तीनां फल-श्रवणाभावेन प्रकरणित्वायोगाच्च, "सद्यः खेचरतां व्रजेत्" इति फलश्रुतेस्तु सङ्केतत्रयोद्देशेन कथिततयात्रत्योपास्तिमात्रस्य प्रधानत्वनिर्णायकत्वाभावात् । तस्मात्पूर्वोत्तरकाण्डभेदेन विभज्य कथितं चक्रार्चनमेकमेव कर्म । तस्य च द्वौ प्रयोगौ—उपास्तिरहित एकस्तत्सहितोऽन्यः । वेदेऽपि त्रय्यां विहितानामेव कर्मणामथर्वणवेदे गोपथब्राह्मणे—"अथातो देवयजनान्यात्मा देवयजनं श्रद्धा देवयजनम्" इत्यादिनाधानादिविश्वसृजामयनान्तकर्मणां प्रत्यङ्गं प्रायेण वास-नानां भूयसीनां कथनेऽपि तेषां कल्पसूत्रकारैरनुपसंहारेण तद्राहित्यसाहित्याभ्या-मेकैकस्य कर्मणो द्वौ द्वौ प्रयोगाविष्टावेव । तौ चाधिकारिभेदेन व्यवस्थितौ । अधिकारस्तु चित्तशुद्धितारतम्यप्रयुक्तो भिन्नो भिन्न इति तु ग्रन्थारम्भ एवोक्तम् । तयोराद्यस्य तु द्वितीयोऽशक्य एव । द्वितीयस्य त्वाद्यः प्रयोगः सुशकत्वा-दैच्छिको न तूत्तराश्रमिणां पूर्वाश्रमधर्म इव निषिद्धः । ततश्च यदि द्वितीया-धिकारवान् प्रथमं द्वितीयं वा प्रयोगं चिकीर्षति तदात्र कथितैरल्पैरेवाङ्गैः कर्म-पूर्तिः । अत एवास्य तन्त्रस्य तादृशाधिकारित्वात्तं प्रति पञ्चपञ्चिकादिपूजा-विस्तारस्यानपेक्षितत्वादिहाकथनम् । प्रथमाधिकारिकतन्त्रेष्वेव तदावश्यकत्व-ध्वननाय तत्कथनम् । अस्य तन्त्रस्य स्वतन्त्रत्वमपि तादृशाधिकारिधौरेय प्रत्येव नोपासकसामान्यं प्रति । तन्त्रराजं त्वाद्याधिकारिणं प्रत्येव स्वतन्त्रम्, द्वितीयाधिकारिणं प्रति त्वेतत्तन्त्रापेक्षमेव । द्वितीयाधिकारिणामपि शक्तितार-तम्येनानेकविधत्वाद्वासनाविकल्पाः कथ्यमाना नानुपपन्नाः । तस्माद्यो यो यादृशोपास्तावधिकारी स तादृशीमेव गुरुमुखाद्विज्ञायासुप्तेरामृतेर्दृढतरमभ्य-स्येदिति सिद्धम् । अधिकं पूर्वोत्तरमीमांसान्यायविद्भिरूहनीयमिति दिक् ॥२३॥

इदानीमुक्तासु चतसृष्वपि वासनास्वावश्यकमंशं पूरयितुमाह—(चक्रमि-त्यादि) । उक्तरीत्या कामकलायाः सकाशात् सम्पूर्णस्य चक्रस्योत्पन्नत्वात्सर्वं चक्रं कामकलारूपमेव, यो यत्प्रसरः स तदीयपारमार्थिकस्वरूपः । यथा घटो मृत्प्रसर-स्तस्य पारमार्थिकं स्वरूपं मृदेव । "वाचारम्भणं विकारो नामधेयं मृत्तिके-

मे॰ त्स्येव सत्यम्" इति श्रुतेः । अयमेव चार्थस्तृतीयकूटेऽपि कथित इति प्रदर्शितं वरिवस्यारहस्ये । तस्मात्सर्वं कामकलात्वेन विभावयेदित्यर्थः ॥२४॥

**अकुले विषुसंज्ञे च शाक्ते वह्नौ तथा पुनः ।**
**नाभावनाहते शुद्धे लम्बिकाग्रे भ्रुवोऽन्तरे ॥ २५ ॥**

**[1]बिन्दौ तदर्धे रोधिन्यां नादे नादान्त एव च ।**
**शक्तौ पुनर्व्यापिकायां समनोन्मनि[2]गोचरे ॥ २६ ॥**
**महाबिन्दौ पुनश्चैवं त्रिधा चक्रं [3]तु भावयेत् ।**

(दी॰) पुनरस्यैव चक्रस्य प्रकारान्तरेण वासनान्तरमाह—अकुले विषुसंज्ञे चेत्यादिना परानन्दविघूर्णितमित्यन्तेन । अकुले कुलादन्यदकुलं सुषुम्नामूलसंस्थितारुणसहस्रदल[4]कमलम् अकुलं नाम तदुपर्यष्टदल-पद्मोर्ध्वस्थितषड्दलं कुलपद्मम् । तदुक्तं स्वच्छन्दसंग्रहे—

अधश्चोर्ध्वं सुषुम्नायाः सहस्रदलसंयुतम् ।
रक्तं श्वेतञ्च साहस्रदलस्थं शक्तिभिर्युतम् ॥
ऊर्ध्वाधोमुखमीशानि कर्णिकाकेसरान्वितम् ।
शक्तिरूपं महादेवि कुलाकुलमयं शुभम् ॥
पङ्कजद्वयमीशानि स्थितं शाश्वतमव्ययम् ।
तयोर्मध्ये सुषुम्नान्तस्त्रिशदाधारपङ्कजम् ॥
शक्तिरूपं शिवाकारं [5]शर्वाण्यासीन्निजालयम् ।
तेषां रूपं [6]क्रियाञ्चैव क्रमाद्वक्ष्येऽधुना शृणु ॥
गुदमेढ्रान्तरं देवि पञ्चाङ्गुलसमुच्छ्रितम् ।
कन्दमेकाङ्गुलं मध्ये द्व्याङ्गुलविसारणम् ॥
तस्य[7] मध्ये महायोनिस्त्रिकोणाकाररूपिणी ।
सुषुम्ना योनिमध्यस्था तस्या मूले महेश्वरि ॥
अधःपद्मं सहस्रारं कर्णिकाकेसरान्वितम् ।
तैजसं रत्नसन्दीप्तं तद्दलस्थितशक्तिभिः ॥

---

१. बिन्दौ—से॰ । २. न्मन—से॰ । ३. विभा—क॰ । ४. कमलं नाम—ख॰ । ५. सर्वेभ्यो मत्प्रियालयम्—क॰ । ६. क्रमञ्चैव—ख॰ । ७. तस्य मूले—ख॰ ।

प्रतिकिञ्जल्कसंस्थाभिः शक्तिभिः संवृतं प्रिये । दी०
कर्णिकामध्यतो देवि कुलदेवी च संस्थिता ॥
तत्पद्मोर्ध्वं सुषुम्नाया मध्ये त्वेकाङ्गुलोपरि ।
पद्ममष्टदलैर्युक्तमष्टग्रन्थिसमन्वितम् ॥
रक्तं सुकर्णिकोपेतं रक्तकिञ्जल्कशोभितम् ।
ग्रन्थ्यग्रस्थत्रिशृङ्गैश्च ब्रह्माण्याद्यष्टभैरवैः ॥
अष्टपत्रस्थितं ग्रन्थस्थित[1]वामादिशक्तिभिः ।
तदन्यशक्तिभिश्चैव शृङ्गस्थाभिः समावृतम् ॥
तन्मध्ये कौलशक्त्या च सेवितञ्च स्मरेत्ततः ।
एकाङ्गुलप्रमाणोर्ध्वे षड्दलं कुलपङ्कजम् ॥ इति ।

ननु कुलादन्यदकुलमिति [2]पदार्थश्चेत्तर्हि तदन्तरालस्थिताष्टदलपद्मस्याप्यकुलत्वं किं न स्यादित्यत आह—विषुसंज्ञे चेति । विष्लृ [3]व्याप्तौ । यत् सुषुम्नातदन्तर्गतत्रिंशत्पङ्कजानि च व्याप्नोति तत्सहस्रदलकमलं विषुघं तस्य सर्वाधार[4]त्वात् । ततो नाष्टदलकमलमकुलमित्यर्थः । शाक्ते वह्नाविति । अत्र वह्नौ शाक्ते इति व्यत्ययेन पठितव्यम् । वह्निर्मूलाधारः, वह्निबिम्बाधारत्वात् । तदुक्तं स्वच्छन्दसंग्रहे—

आधारपङ्कजं पीतं चतुष्पत्रं सुकेसरम् ।
अधोमुखं च तन्मध्ये कुण्डली परमेश्वरि ॥
स्वयम्भुमध्यगा चिन्त्या वरदादिभिरावृता ।
पार्थिवं पङ्कजं ह्येतत्तस्योर्ध्वं पञ्च पङ्कजम् ।
तैजसं परमेशानि तन्मध्यस्थितशक्तयः ।
निष्कलाः परमेशानि विद्युत्पुञ्जनिभाः स्मरेत् ॥
तदूर्ध्वे कर्णिकामध्ये वह्निबिम्बं तदूर्ध्वगम् ।
पूर्णपीठं च [5]तन्मध्ये शाकिनी संस्थिता शिवे ॥ इति ।

शाक्ते शक्तिः हृल्लेखा तदूर्ध्वस्थितत्वाच्छाक्तं स्वाधिष्ठानं षडस्रकमलम् । तदुक्तं स्वच्छन्दसंग्रहे—

---

१. वर्णादि–ख० । २. चेदर्थस्तर्हि–ख० । ३. व्याप्ताविति यत्र सुषुम्नान्तर्गतानि–क० । ४. धारत्वाद्दष्ट–क० । ५. तस्योर्ध्वे–ख० ।

दी०

"आधारपङ्कजस्योर्ध्वे सार्धद्व्यङ्गुलिकोपरि।
तैजसं साष्टपत्रञ्च पीतकर्णिकया युतम्॥
हृल्लेखाकर्णिकामध्ये स्थितानङ्गादिदेवता[1]।
एतस्माद् द्व्यङ्गुलादूर्ध्वे स्वाधिष्ठानं षडस्रकम्॥
आप्यञ्च बन्दिनी शक्तिः पूर्वाभिः शक्तिभिर्वृताम्।
काकिनीमभिसञ्चिन्त्य" इति।

नाभौ दशारपद्मे पूरके। तदुक्तं तत्रैव—

[2]नाभिस्त्र्यर्धाङ्गुलोपरि।
तत्पद्मं मणिपूरञ्च दशपत्रं सुशोभनम्॥
लाकिनीमध्यगं तच्च डामर्यादिभिरावृतम्॥ इति।

अनाहते हृदयस्थाने द्वादशदलकमले। तदुक्तं तत्रैव—

चतुर्दशाङ्गुलादूर्ध्वे मणिपूराख्यपङ्कजात्।
पङ्कजं राकिनीमध्यं द्वादशारमनाहतम्॥
तत्रस्थकालरात्र्यादिशक्तिभिश्च समावृतम्।
तत्रस्थसूर्यबिम्बं तु नादोड्यानाख्यपीठकम्॥ इति।

विशुद्धौ [शुद्धे] कण्ठस्थितषोडशदलकमले। तदुक्तं तत्रैव—

तस्मादेकाङ्गुलादूर्ध्वे विशुद्धं षोडशारकम्।
मध्यगा डाकिनी बाह्यपत्रेषु परमेश्वरी॥
अमृताद्यक्षरा[3]न्ताश्च चन्द्रबिम्बं तदूर्ध्वगम्[4]॥ इति।

लम्बिकाग्रे अष्टदलकमले। तदुक्तं तत्रैव—

कण्ठोर्ध्वे परमेशानि लम्बिकाचतुरङ्गुले।
तस्यामष्टदलं पद्मं [5]रसिकादिभिरावृतम्॥ इति।

भ्रुवोऽन्तरे आज्ञायां द्विदलकमले। तदुक्तं तत्रैव—

आज्ञाधारं द्विपत्राब्जं हक्षद्विदलसंयुतम्।
हंसवतीक्षमापार्श्वे तयोर्मध्ये तु हाकिनी॥

भ्रुव इत्येकवचनं भ्रूद्वयोपलक्षणम्। भ्रुवोरन्तरे इत्यर्थः। बिन्दौ बिन्दुतदर्धरोधिनीनादनादान्तशक्तिव्यापिकासमनोन्मनीनामुप-

---

१. सेविता–क०। २. नाभावष्टा–ख०। ३. न्तस्थाश्चन्द्र–ख०। ४. ध्वतः–ख०। ५. वशिन्यादि–ख०।

ग्र्युपरि[1] रूपाणि। उच्चारणकालं वक्ष्यति। महाबिन्दौ परसादाख्ये देशकाल- दी०
रूपवर्जिते। बिन्द्वाद्युन्मन्यन्ता भागाः [2]सूक्ष्मसूक्ष्मतरा देहचक्रविद्यानां
साधारणाः। [3]कोऽर्थः? अत्र त्रैलोक्यमोहनादि[4]बिन्द्वन्तान् स्थूलसूक्ष्म-
सूक्ष्मतरान् चक्रभागानकुलाद्युन्मन्यन्तेषु स्थूलसूक्ष्मसूक्ष्मतरभागेषु महा-
बिन्दौ च तान् विभावयेदित्यर्थः। पुनरपि त्रैविध्यमाह—पुनश्चैवमिति।
एवमुक्तप्रकारेण विभावितं चक्रं पुनस्त्रिधा [5]भावयेत्॥२५-२७॥

(से०) एवं बहिश्चक्रपूजाधिकारिका वासनाः कथयित्वा ततोऽप्युत्तमाधिका-रिणो ब्रह्माण्डपिण्डाण्डयोरैक्यभावनादार्ढ्यशीलान् प्रति तद्देह एव त्रिविधामान्तर-चक्रभावनामाह—(अकुल इत्यादि)। अत्राकुलादीनि महाबिन्द्वन्तान्येकोनविंशतिः स्थानान्युक्तानि, समनोन्मनगोचर इत्यस्य समनगोचर उन्मनगोचरे चेत्यर्थात्, उत्तरत्र मूल एव तयोः स्वरूपभेदस्य वक्ष्यमाणत्वात्। लिङ्गशरीरे हि सुषुम्ना-नाडीमाश्रित्य द्वात्रिंशत्पद्मानि। तेष्वाद्यन्तयोः सहस्रारे पद्मे द्वे ऊर्ध्वाधोमुखे वर्तेते। सर्वाधःस्थितसहस्रदलकमलोपर्यष्टदलं तदुपरि षड्दलं तदुपरि मूला-धारादीनि चक्राणीति स्थितिः। तत्र मूलाधाराधःस्थितं षड्दलमेव कुलपद्मम्, तदधःस्थिते अष्टदलसहस्रदले अकुले, कुलपद्माद्भिन्नत्वात्। एवं चाकुलपदेन द्वयो-रपि ग्रहणे प्रसक्तेऽष्टदलव्यावर्तनाय विषुसंज्ञ इत्यकुलस्य विशेषणम्। "विष्लृ व्याप्तौ" इति धातोर्व्यापक इत्यर्थः। व्यापकत्वं सर्वाधःस्थितत्वमिति यावत्। तेनाकुलविषुपदाभ्यामेकमेवाधःस्थितसहस्रारपद्माख्यं स्थानमुच्यत इति प्राञ्चः। तच्चिन्त्यम्, भवल्लिखितस्वच्छन्दसंग्रहवचन एवाधःसहस्रारस्य कुलपद्मत्वोक्तेः,

अधश्चोर्ध्वं सुषुम्नायाः सहस्रदलसंयुतम्।

इति प्रकृत्य—

शक्तिरूपं महादेवि कुलाकुलमयं शुभम्।
पङ्कजद्वयमीशानि स्थितं शाश्वतमव्ययम्॥
तयोर्मध्ये सुषुम्नातस्त्रिदशाधारपद्मकाः।

इति वचनात्। अधस्थं पङ्कजं कुलमयमुपरिस्थमकुलमयमिति यथाक्रम-मन्वयस्य स्पष्टत्वात्। किञ्च तत्रैव "अधःपद्मं सहस्रारं कर्णिकाकेसरान्वितम्" इति प्रकृत्य "कर्णिकामध्यतो देवि कुलदेवी च संस्थिता" इत्युक्तिरपि तस्य

१. परि उच्चा–क०। २. स्थूलसूक्ष्म–क०। ३. कोऽर्थः–ख० नास्ति। ४. मोहनाद्युन्मन्यन्तान्–ख०। ५. विभा–क०।

से० कुलपद्मत्वमेव गमयति। यदप्यष्टदलपद्ममकुलमित्युक्तम्, तदपि न; तत्रैव—"तत्पद्मोर्ध्वं सुषुम्नाया मध्ये त्वेकाङ्गुलोपरि। पद्ममष्टदलैर्युक्तम्" इति प्रकृत्य "तन्मध्ये कौलशक्त्या तु सञ्चितञ्च स्मरेत्ततः" इत्याद्युक्तेः। "एकाङ्गुलप्रमाणोर्ध्वं षड्दलं कुलपङ्कजम्" इति वचनात् षड्दलस्यापि कुलरूपत्वम्। अत एव—

कुलयोषित्कुलं त्यक्त्वा परं पुरुषमेति सा।
निर्लक्षणं निर्गुणञ्च कुलरूपविवर्जितम्॥

इति पूर्वचतुःशत्यामधस्थितपद्मानि सर्वाणि त्यक्त्वा ब्रह्मरन्ध्रस्थितसहस्रारपद्ममेतीत्येव पूर्वाचार्याणां व्याख्योपपद्यते। तस्मादेवं व्याख्येयं कुलभिन्नमकुलमिति न तत्पुरुषः, अपि तु न विद्यते कुलं यस्मादिति बहुव्रीहिः। यदपेक्षया स्थूलमधो वा कुलपद्मान्तरं नास्ति सर्वाधःस्थितं सर्वाधिकञ्च कुलपद्ममित्यर्थः। तादृशञ्च कुलपद्ममधःस्थितं सहस्रारमेव, अन्येषां तदुपर्येव स्थितत्वादल्पदलत्वाच्च। एवं चाकुलपदेनैवेतरव्यावृत्तौ विषुसंज्ञ इति न तस्य विशेषणम्, विषुपदस्य सर्वाधारार्थकत्वाभावाच्च संज्ञापदस्यालग्नकत्वाच्च। तेनाष्टदलषड्दलयोरन्यतरस्य विषुरिति संज्ञैव तन्त्रान्तरे स्यादित्यनुमीयते, तदुपरिस्थमूलाधारादीनां पार्थक्येन निर्देशात्, सहस्रारमूलाधारमध्यस्थितवाचकत्वावसायात्, प्रसिद्धपदसमभिव्याहारस्यापि शक्तिग्राहकत्वात्। अन्यतरयोरेकतरनिश्चयस्तु विशेषदर्शिभिः कार्यः। एतेनाकुले विषुसंज्ञे चेति चकारोऽप्युपपद्यते। न चैवं सत्याज्ञाचक्र इन्दौ चेति द्विर्बिन्दुविभावनापत्तिः, अकुलादिमहाबिन्द्वन्तस्थानकैकविभावनपक्षे तदापत्तावपि भावनाभेदवादिनामस्माकं तदनापत्तेर्वक्ष्यमाणत्वात्। किञ्च, चरमपटले जपप्रकरण एकैककूटस्य त्रित्रिचक्राभेदेन विभावनमुक्त्वा कूटान्त्यकामकलावयवसपरार्धकलात्रयस्याधारहृदाज्ञास्थितकुण्डलिनीत्रयस्य चाभेदेन विभावनं विधीयत इति भवद्भिरेव व्याख्यास्यते। तदिदमस्मत्पक्षे कूटान्त्यस्वरत्रयस्य कुण्डलिनीत्रयस्य चैकस्थाननिपातितत्वादुपपद्यते। कुलविष्वोरेकत्वे तु स्वाधिष्ठानविशुद्धिललाटमध्यस्थानेष्वेव कूटत्रयान्त्यस्वरपातावश्यम्भावात्तत्तदधश्चक्रस्थितवह्न्यादिकुण्डलिनीत्रयस्य वैयधिकरण्यादभेदविभावनमसमञ्जसं स्यात्। किञ्च, मूलाधारादुत्थितस्य नादस्य मन्त्रविषुवादिभावनघटकता वक्ष्यते। सा चाद्यकूटस्याधारे समाप्तावेव तदीयनादस्य तत उत्थानमुपपद्यते। स्वाधिष्ठानान्तमपकर्षे तु न तत्समञ्जसमिति।

शाक्ते मूलाधारस्थचतुर्दले, शक्तिरूपायाः कुण्डलिन्याः स्थानत्वात्। वह्नौ से॰ स्वाधिष्ठानस्थषड्दले तत्र वह्नेर्विद्यमानत्वात्। तदुक्तमाचार्यभगवत्पादैः—

मही मूलाधारे कमपि मणिपूरे हुतवहं
स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि ॥ इति।

यत्तु प्राञ्चः—स्वच्छन्दतन्त्रे मूलाधारे कर्णिकायां वह्निबिम्बस्य कथनात् स्वाधिष्ठानकर्णिकायां हृल्लेखारूपशक्तेरवस्थानकथनाच्चैते एव क्रमेण वह्निशाक्त-पदवाच्ये। तेन मूले वह्नौ शाक्त इति व्यत्ययेन पठितव्यमित्याहुः। तदतीव साहसम्, व्यत्ययमन्तरेणाप्युपपादनात्। नाभौ मणिपूराख्ये दशदले। अनाहते हृदयस्थे द्वादशदले। शुद्धौ कण्ठस्थषोडशदले विशुद्धिनामके। लम्बिकाग्रे "अन्तरेण तालुके य एष स्तन इवालम्बते" इति श्रुतिप्रसिद्धेन्द्र-योनिपदवाच्ये सूक्ष्मजिह्वास्थानीयाष्टदलपद्मे। भ्रुवोरन्तरे भ्रुवोर्मध्यस्थे द्विदल आज्ञानामके। अत्र सर्वत्र प्रमाणभूतानि वचनानि प्राचां टीकासु द्रष्टव्यानि। इन्दौ बिन्दौ, तदर्धेऽर्धचन्द्रे। बिन्द्वादीनां स्थानादीनि मूल एवानुपदं वक्ष्यति। एते च बिन्द्वाद्युन्मन्यन्ता भागा देहे मन्त्रे च साधारणाः। चक्रेऽपि साधा-रणा एवेति प्राञ्चः। मात्रार्धमात्राकालविधानादाज्ञाचक्रोर्ध्वं स्थलविधानाच्च मन्त्रदेहावयवत्वेऽपि चक्रावयवत्वे किं मानम्। किञ्च, बिन्द्वाद्युन्मन्यन्तस्थले भावनीयानि किं त्रैलोक्यमोहनादिचक्राण्येव किं वा ततो भिन्नानि? आद्ये तान्येव पुनर्गणितानीति कीदृशं चक्रसाधारण्यम्। अन्त्ये नवात्मकत्वनवमन्त्र-कत्वविरोधः। बिन्द्वाद्युन्मन्यन्तावयवकमेकमेव चक्रमिति कल्पनापि प्रमाण-दार्ढ्य एव विश्रम्भणीया। बिन्दुमपेक्ष्य कालतः स्थानतश्च भिन्नानामर्धचन्द्रा-दीनां बिन्दावन्तर्भावस्यायुक्तत्वाच्च। अर्धचन्द्राद्यष्टकस्य तु नादनामैकाक्षरा-वयवत्वम्, "हृल्लेखात्रयसम्भूतैस्तिथिसंख्यैस्तथाक्षरैः" इत्यादिज्ञापकात्। अक्षराष्ट-कत्वमपि सम्भवतीति तु वरिवस्यारहस्यव्याख्यायां विस्तरः। महाबिन्दुस्तु देह एव न मन्त्रे। एवमेतेष्वेकोनविंशतौ स्थानेषु श्रीचक्रं त्रिप्रकारं पुनश्च भावयेत् पूर्वस्थाननवके भावितान्येव चक्राण्युत्तरस्थाननवके तेनैव क्रमेण पुनश्चिन्तयेत्। पुनरपि तान्येवैकोनविंशे स्थाने महाबिन्दौ चिन्तयेदित्यर्थः ॥२५-२६॥

आज्ञान्तं सकलं प्रोक्तं ततः सकलनिष्कलम् ॥२७॥
[1]उन्मन्यन्तं परे स्थाने निष्कलश्च त्रिधा स्थितम् ।
दीपाकारोऽर्धमात्रश्च ललाटे [2]वृत्त इष्यते ॥२८॥
अर्धचन्द्रस्तथाकारः पादमात्रस्तदूर्ध्वके[3] ।
ज्येष्ठाकारा [4]तदष्टांशा रोधिनी [5]त्र्यस्रविग्रहा ॥२९॥

(दी०) त्रैविध्यमाह—आज्ञान्तमिति । आज्ञान्तमकुलाद्याज्ञापर्यन्तं चतुरस्रादित्रिकोणान्तं चक्राष्टकं स्थूलं भावयेत् । तद्भावनं सकलम् । ततो बिन्दुमारभ्योन्मन्यन्तं सूक्ष्मसूक्ष्मतर[6]चक्रभागान् भावयेत् । तद्भावनं सकलनिष्कलम् । [7]परे स्थाने महाबिन्दौ [8]शुद्धशून्यसंविदं भावयेत् । तद्भावनं निष्कलम् । [9]त्रिधा स्थितमिति । अकुलाद्याज्ञान्तास्तन्त्रान्तरेषु विस्तरेणोक्ताः, [10]अतो नात्रोक्ताः ॥ २८ ॥

बैन्दवाद्युन्मन्यन्तानां [11]स्वरूपमुच्चार[12]णकालं स्थानञ्चाह—[13]दीपाकार इत्यादिना मनोन्मनीत्यन्तेन । दीपाकारो दीपकस्य यादृशं [14]भासनं तादृशमस्येत्यर्थः । अर्धमात्रः [15]ह्रस्वस्य उच्चारणकालो मात्रेत्युच्यते । मात्राया अर्धमुच्चारणकालो यस्य सोऽर्धमात्रः । ललाटे वृत्त इष्यते वर्तुलसंनिवेशः, ललाटे भ्रुवोरुपरिभागे । [16]दीपाकारोऽर्धमात्रोच्चारणकालो वृत्तसन्निवेशो बिन्दुरित्यर्थः । बिन्द्वादीनां तु विस्तारः स्वच्छन्दसंग्रहे प्रपञ्चितः । [17]तत्र बिन्दोर्यथा—

बिन्द्वावरणमूर्ध्वतः ।
सूर्यकोटिप्रतीकाशमतिदीप्तं महद्गुणम् ॥
तन्मध्ये [18]शतकोटीनां सङ्ख्यायोजनपङ्कजम् ।
तत्कर्णिकायामासीनः शान्त्यतीतेश्वरः प्रभुः ॥

१. उन्मन्यन्ते—से० । २. वृत्तमि—ख० । ३. र्ध्वतः—से० । ४. तथाष्टांशा—ख० से० । ५. अस्र—से० । ६. तरभागान्—ख० । ७. परापरे—क० । ८. शून्यशून्याःस्त्रसंविदम्—क० । ९. एवं त्रिधा—क० । १०. अतो नात्रोक्ताः—ख० नास्ति । ११. चरूप—ख० । १२. रकालं चाह—ख० । १३. दीपाकारोऽर्धमात्रश्च इ—ख० । १४. भास्वरम्—क० । १५. ह्रस्वस्य—क० नास्ति । १६. दीपकाप्रकाशोऽर्ध—ख० । १७. तत्र बिन्दोः—क० नास्ति । १८. शत—ख० नास्ति ।

पञ्चवक्त्रो दशभुजो विद्युत्पुञ्जनिभाकृतिः । दी०
निवृत्तिश्च प्रतिष्ठा[1] च विद्या शान्ति[2]रनुक्रमात् ॥
परिवार्य स्थिताश्चैताः शान्त्यतीतस्य सुन्दरि ! ।
वामभागे समासीना शान्त्यतीता मनोन्मनी ॥
पञ्चवक्त्रधराः सर्वा दशबाह्वि[3]न्दुशेखराः ।
बिन्दुतत्त्वं समाख्यातं कोट्यर्बुदशतैर्वृतम् ॥ इति ।

अर्धचन्द्रो बिन्दोरर्धभागः, तथाकारो दीपाकार एव, पादमात्रो मात्राकालस्य [4]चतुर्थभागोच्चारणकाल इत्यर्थः । तदूर्ध्वके बिन्दोरूर्ध्वभागे । बिन्दूपरिदेशे पादमात्रोच्चारण[5]कालो दीपाकारोऽर्धचन्द्र इत्यर्थः ।

ज्योत्स्नाकारा चन्द्रिकासमकान्तिः, तदष्टांशा मात्राष्टांशोच्चारणकाला, त्र्यस्रविग्रहा त्रिकोणाकारा रोधिनी । द्वयोरपि स्वच्छन्दसंग्रहे प्रपञ्चो यथा—

"अर्धचन्द्रस्तदूर्ध्वे तु रोधिनी तस्य चोपरि ।
ज्योत्स्ना ज्योत्स्नावती कान्तिः सुप्रभा विमलापि[6] च ॥
अर्धचन्द्रस्थिता ह्येताः कलाः पञ्च प्रकीर्तिताः ॥ इति ।
रुन्धिनी रोधिनी रोद्धा ज्ञानरोधा तमोपहा ॥
निरो[7]धिका कलाः पञ्च कथितास्तव सुन्दरि ।
ब्रह्मादिपरमेशानां परमाप्तिनिरोधनात् ॥
निरोधिकेति सा प्रोक्ता तस्या भेदा वरानने ॥
परसादाख्यसंप्राप्तिः" इति ॥ २९ ॥

(से०) अथ तिसृणां चक्रविभावनानामधिकारिभेदेन स्थानभेदं व्यवस्थापयति—(आज्ञेत्यादि) । अकुलाद्याज्ञान्तस्थाननवके त्रैलोक्यमोहनादिबिन्द्वन्तचक्रनवकं क्रमेण भावयेत् । अत एव ग्रहन्यासे भ्रूमध्यस्य बिन्दुस्थाने सुधासूतिमिति निर्देशः करिष्यमाणः सङ्गच्छते । तदिदं विभावनं सकलपदवाच्यम् । अत एवात्र सकलनामका अशुद्धा उपासका अधिकारिणः । तत आज्ञाचक्रानन्तरम् ।

१. प्रतिष्ठाश्च—ख० । २. रनुत्तमा—ख० । ३. न्दुभूषणाः—ख० । ४. चतुर्भा—क० । ५. काले—ख० । ६. विमला अपि—क० । ७. रोधिकादिकलाः—क० ।

से० इन्दुमारभ्येत्यर्थः। इन्द्वाद्युन्मन्यन्तनवके त्रैलोक्यमोहनादिबिन्द्वन्तचक्रनवकस्य क्रमेण विभावनं सकलनिष्कलमित्युच्यते। तत्र न केवलं शुद्धा नापि केवलमशुद्धा एतादृशमिश्राः प्रलयाकलनामका उपासका अधिकारिणः। परे स्थाने महाबिन्दौ। तत्रोक्तचक्रनवकस्य परस्परभेदमन्तरेण निर्विषयकसंविन्मात्रात्मककामकलैकावशेषेण विभावनं निष्कलमुच्यते। तत्र शुद्धा विज्ञानकेवलनामका उपासका अधिकारिणः। त्रिविधोपासकानां लक्षणादीनि तु सौभाग्यभास्करे पशुपाशविमोचनीति नामव्याख्यानावसरे प्रपञ्चितान्यस्माभिः। इयञ्च व्यवस्था सकलादिसंज्ञाकरणेनैव मूलकृता सूचिता, अन्यथा तासां वैयर्थ्यापत्तेः, उत्तरत्र व्यवहार उपयोगदर्शनात्, कलयांशेनांशांशिभावघटकभेदभानेन स्थूलमालिन्येन सहितं सकलमित्यादिव्युत्पत्तिभिरशुद्धमिश्रशुद्धाधिकारिकत्वस्य यौगिकवृत्त्या स्फोरणाच्च। सकलादिपदान्येव वा सकलाधिकारिकमित्याद्यर्थपराणि न संज्ञापराणीति मन्तव्यम्। त्रिधा स्थितं पूर्वं यत्त्रैविध्यमुक्तं तदनया रीत्या व्यवस्थितमित्यर्थः। अयञ्च श्रीमुखागमलब्धोऽर्थो मूलारूढीकरणेन विशदीकृतः। येषां तु मते विषुसंज्ञत्वमकुलविशेषणम्, तदनुयायिनस्तावदिन्दौ सर्वानन्दमयचक्रस्य सकलभावनं त्रैलोक्यमोहनचक्रस्य मिश्रभावनं चेत्युभयोरेकमेव स्थानमाहुः, अन्यथा तेषां निष्कलभावनाया अनवकाशापत्तेः। परं तु "आज्ञान्तं सकलम्" इति मूलविरोधः कथं परिहार्यः। इदं तु तैः सुवचम्—आज्ञाया अन्त आज्ञान्त इन्दुः। आज्ञान्तपदात्पूर्वमाङः प्रश्लेषः। स चाभिविध्यर्थकः। इन्दुमभिव्याप्येति पर्यवसितोऽर्थः। तत इति पदमपि नानन्तर्यार्थकमपि तु इन्दुमारभ्येत्यर्थकम्। ल्यब्लोपे पञ्चमी। तत्पदमाज्ञान्तपरामर्शीति स्वीकारसम्भवादिति। प्राञ्चस्तु त्रैलोक्यमोहनाद्युन्मन्यन्तान् स्थूलसूक्ष्मसूक्ष्मतरांश्चक्रभागानकुलाद्युन्मन्यन्तेषु स्थूलसूक्ष्मसूक्ष्मतरेषु भागेषु महाबिन्दौ च भावयेत्। तत्राकुलविषुमारभ्याज्ञान्तं चतुरस्रादित्रिकोणान्तस्थूलचक्राष्टकभावनं सकलम्। बिन्द्वाद्युन्मन्यन्तस्थानेषु बिन्दुचक्रस्य सूक्ष्मसूक्ष्मतरभागानां विभावनं सकलनिष्कलम्। महाबिन्दौ शून्यसंविदो भावनं निष्कलमिति वदन्ति। एतेषां मतेऽष्टांशस्थानकमेकं विभावनम्, तदवयवानामेव तु सकलादिसंज्ञात्रयमित्यभिसन्धिः। स च महाबिन्दौ पुनश्चैवमिति पुनःपदस्य सकलादिसंज्ञाकरणस्य च स्वरसविरुद्धः। एतद्भ्रममूलिकैव त्वकुले विषुसंज्ञकत्वस्य विशेषणतया योजनाय प्रवृत्तिरिति तदाकूतरहस्यम् ॥२७॥

(से०) इदानीं बिन्द्वाद्युन्मन्यन्तानां प्रातिस्विकं स्थानाकृतिरूपकालानाह—( दीपेत्यादि )। दीपस्यैवाकारः कान्तिर्यस्य स दीपाकारः। अर्धा मात्रा यस्य सोऽर्धमात्रः। मात्रा नाम ह्रस्वस्योच्चारणकालः। स च षट्पञ्चाशदुत्तरशतद्वयलवैर्भवति। लवो नाम कालपरमाणुः।

नलिनीपत्रसंहत्याः सूक्ष्मसूच्यभिवेधने।
दले दले तु यः कालः स कालो लवसंज्ञितः॥
अतः सूक्ष्मतमः कालो नोपलभ्यो भृगूद्वह।

इति वचनात्। अत एवोक्तं वृत्तचन्द्रोदये—"लवानां कालपीलूनां षट्पञ्चाशच्छतद्वयम्। मात्रैका" इति। तेनाष्टाविंशत्युत्तराः शतं लवा बिन्दोरनुस्वारस्य कालः, "व्यञ्जनं त्वर्धमात्रिकम्" इति वचनात्। ललाटे ललाटमध्ये वृत्तो वर्तुलाकृतिः। इन्दुरिति शेषः॥ २८॥

( अर्धेत्यादि )। तथा स्वनामसमानावेवाकारौ कान्त्याकृती यस्य सः। कान्त्याकृत्या नाम्नाप्यर्धचन्द्र इत्यर्थः। तथा दीपवदाकारो यस्येति तु केचित्। पादमात्रश्चतुःषष्टिलवकालोच्चार्यः। तदूर्ध्वतो बिन्दोरुपरि। इदञ्च पदमुन्मनान्ते। शब्दो ( शब्दाः ? ) विकारन्यायेनानुवर्तन्ते। ज्योत्स्नाकारा चन्द्रिकाकान्तिः। अष्टांशा द्वात्रिंशल्लवकाला। सम्प्रदायाच्छक्तिरूपोऽस्त्रस्त्रिकोणो विग्रहो देहो यस्याः। अश्रिशब्दवदस्रशब्दोऽपि रुधिराश्रुणोरिव कोणेऽपि निरूढः। तेन सुप्रातसुश्वेत्यादिसूत्रे चतुरस्रपदस्यैवास्रपदस्य निपातनाभावेऽप्यदोषः। रोधिनीनामनिर्वचनं तन्त्रान्तरे—"ब्रह्मादिपरमेशानां परप्राप्तिनिरोधनात्। निरोधिनीति सा प्रोक्ता" इति॥२९॥

**बिन्दुद्वयान्तरे दण्डः शैवरूपो मणिप्रभः।**
**कलांशो द्विगुणांशश्च नादान्तो विद्युदुज्ज्वलः॥३०॥**
**हलाकारस्तु सव्यस्थबिन्दुयुक्तो विराजते।**
**शक्तिर्वामस्थबिन्दूद्यत्स्थिराकारा तथा पुनः॥३१॥**

(दी०) बिन्दुद्वयमध्यगत ऋजुरेखाकारः शैवरूपः, मुष्कद्वयान्तरमध्यतः शिरा शैव इत्युच्यते, तत्तुल्यरूपः। मणिप्रभः पद्मरागसवर्णवर्णः।

दी० कलांशः कलाः षोडशमात्राः, षोडशांशोच्चारणकाल इत्यर्थः। स पुनः कलांशो नादस्तन्त्रेणोच्यते।

[1]"कलो नादस्तु गम्भीरे ध्वनौ तु मधुरास्फुटे" इत्यमरः।

मधुरास्फुटो ध्वनिर्नादः। नादप्रपञ्चः स्वच्छन्दसंग्रहे यथा—

"रोधिन्याख्यं यदुक्तं ते नादस्तस्योर्ध्वसंस्थितः।
पद्मकिञ्जल्कसंकाशः कोटिसूर्यसमप्रभः॥
पुरैः परिवृतोऽसंख्यैर्मध्ये पञ्चकलावृतः।
इन्धिका दीपिका चैव रेचिका मोचिका तथा॥
ऊर्ध्वगा मध्यगा तासां पञ्चमी परमा कला।
चन्द्रकोटिसमप्रख्यं तन्मध्येऽर्बुदयोजनम्॥
पद्ममध्ये समासीनमीश्वरं चोर्ध्वगामिनम्।
चन्द्रायुतप्रतीकाशं पञ्चवक्त्रं त्रिलोचनम्॥
इन्धिकाद्यैर्वृतं देवं शूलपाणिं जटाधरम्।
तस्योत्सङ्गगतामूर्ध्वगामिनीं परमां शिवाम्॥
ध्यायेत्" इति।

हलाकारो लाङ्गलसदृशरूपः [2]सव्यस्थबिन्दुयुक्तो बिन्दुद्वयमध्ये [3]दक्षिणभागस्थितबिन्दुयुक्तः। विद्युदुज्ज्वलः तडित्सदृशकान्तिः। द्विगुणांशश्च पूर्वोक्त[4]षोडशांशानां द्विगुणांशो द्वात्रिंशत्तमो भागः। कोऽर्थः? मात्राद्वात्रिंशत्तमांशोच्चारणकालो हलाकारादिविशेषविशेषितो नादान्त इत्यर्थः।

नादस्यान्तो लयो यत्र भवति ब्रह्मरन्ध्रके।

तस्य प्रपञ्चः स्वच्छन्दसंग्रहे यथा—

[5]"नाड्याधारस्तु नादान्तो भित्त्वा सर्वमिदं जगत्।
अधःशक्त्या विनिर्भिद्य ऊर्ध्वशक्त्यवसानकः॥
नाड्यां ब्रह्मबिले लीनस्त्वव्यक्तध्वनिलक्षणः।
अतो ब्रह्मबिलं ज्ञेयं रुद्रकोट्यर्बुदैर्वृतम्॥

---

१. "कलो नादो ध्वनौ तु मधुरास्फुटे कलः" इत्यमरः—ख०। २. सव्यस्थ—ख० नास्ति। ३. वाम—क०। परं तदयुक्तम्, उत्तरार्धे वामपदेन व्यवहारादत्र सव्यशब्दस्य दक्षिणपरत्वात्, "सव्यं दक्षिणवामयोः" इति कोशात्। ४. षोढांशानाम्—कखयोः। ५. हलाकारस्तु—ख०।

दी०

तत्र ब्रह्मशिवो ज्ञेयः अब्जाङ्कशतसन्निभः ।
दशबाहुस्त्रिनेत्रश्च पञ्चवक्त्रेन्दुशेखरः ॥
ब्रह्माणी त्वं परा शक्तिर्ब्रह्मणोत्सङ्गगामिनी ।
द्वारं सा मोक्षमार्गस्य रोधयित्वा व्यवस्थिता ॥ इति ।

पुनःशब्देन पूर्वेभ्यो विशेषो द्योत्यते । पूर्वेषां बिन्द्वाद्यंशानां स्वरूपवर्णमात्राकलांशा[1] अभिकल्पिताः । शक्तिमारभ्य समनान्तानामंशानां स्वरूपवर्णमात्राकलाः पश्चाद्वक्ष्यन्त इत्यर्थः । शक्तिर्बिन्दुद्वयमध्ये वामभागस्थबिन्दूद्यत्स्थिररारूपा । शक्तिप्रपञ्चः स्वच्छन्दसंग्रहे यथा—

शक्तितत्त्वं समाख्यातं भुवनै[2]रावृतं महत् ।
[3]आधारं भुवनानां च प्रवक्ष्यामि समासतः ॥
सूक्ष्मा चैव सुसूक्ष्मा च तथा चैवामृता मृता ।
चतुर्दिक्षु स्थितास्तासां मध्यस्था व्यापिनी [4]स्थिता ॥
पञ्चवक्त्रा त्रिनेत्रा च सुतेजस्का च पञ्चमी ।
शक्तितत्त्वं समाख्यातं ध्यानान्मुक्तिफलप्रदम् ॥ इति ॥३०-३१॥

(से०) (बिन्द्वित्यादि) । दण्डवदूर्ध्वाधोवितता रेखा, तद्दक्षिणोत्तरपार्श्वयोः संलग्नौ द्वौ बिन्दू । स च दण्डः शेवरूपः । शेवो नाम गोधूमपिष्टविकारः केशाकारः पायसादिसाधनतया प्रसिद्धः । तद्वत्सूक्ष्मो मृदुश्चेत्यर्थः । वृषणद्वयमध्यवर्तिनी शिरा शेव इत्यन्ये । मणिप्रभः सम्प्रदायात् पद्मरागमणिकान्तिः । "पद्मकिञ्जल्कसंकाशः सूर्यकोटिसमप्रभः" इति तु तन्त्रान्तरे । कलांशो मात्रायाः षोडशांशः । अंशशब्द एव वेहत्यो लवपरः, तेन षोडशलवकाल इत्यर्थः । नाद इति विशेष्यस्याध्याहारः । कलांशपदस्यैवावृत्त्या कलश्चासावंशश्चेति विग्रहेण विशेष्यलाभः । "ध्वनौ तु मधुरास्फुटे कलः" इत्यमर इति केचित् । नादान्तस्तु द्विगुणांशः कलाद्विगुणमात्रांशांशो द्वात्रिंशोऽष्टलवात्मककालोच्चार्य इति यावत् ॥३०॥

(हलेत्यादि) । (?) बिन्दुना युक्तश्च । सव्यं दक्षिणवामयोः । उत्तरार्धे वामपदेन व्यवहारदर्शनेनेहत्यसव्यशब्दो दक्षिणपरः । ऊर्ध्वाधःप्रसृत ईषा-

---

१. शाः कल्पिताः—ख० । २. राश्रितम्—ख० । ३. आरम्भभु—क० । ४. स्मृता—क० ।

से० दण्डः स्वभालवामभागेऽधोमुखाग्रलाङ्गलशुण्डः स्वभालदक्षिणभाग ईषादण्ड-मध्यप्रदेशे बिन्दुरीदृशाकारो नादान्त इति तु नाथमुखावगतोऽर्थः। बिन्दुद्वय-मध्ये दक्षिणभागस्थबिन्दुसहित इति प्राचां वाक्यस्याशयश्चिन्त्यः। नादस्यान्तो लयो यत्र स नादान्तः, "नाड्यां ब्रह्मबिले लीनस्त्वव्यक्तध्वनिलक्षणः" इत्यादि तन्त्रान्तरात्। एतदुत्तरम्—"बिन्दुवृत्तात्मको देवि सर्गो बिन्दुद्वयात्मकः" इत्यर्धं क्वचित्पुस्तकेषूपलभ्यते। तस्यायमर्थः—बिन्द्वादिनवकशरीरघटका यावन्तो बिन्दव एकैक उच्यन्ते ते सर्वे कामाख्यमुखहृद(?द्)बिन्दुरूपा यावन्ति बिन्दुद्वया-(नि) उच्यन्ते तानि सर्वाणि सितशोणविसर्गरूपाणीति वासना ज्ञेयेति। दक्षिणोत्तरयो-र्बिन्दुद्वयम्। तत्र वामबिन्दोः शिरस्यूर्ध्वरेखा। ईदृशः शक्त्याकारः। वामस्थबिन्द्वित्यनेन दक्षिणबिन्द्वन्तरस्याक्षेपः। वामस्थबिन्दोः सकाशादुद्यन्त्या ऊर्ध्वं गच्छन्त्याः शिराया इवाकारो यस्या इति विग्रहः। इत आरभ्य रूपकाला-नुत्तरत्र वक्ष्यति ॥३१॥

व्यापिका बिन्दुविलसत्त्रिकोणाकारतां गता।
बिन्दुद्वयान्तरालस्था[1] ऋजुरेखामयी पुनः ॥ ३२ ॥
समना बिन्दुविलसदृजुरेखा [2]तथोन्मना।
शक्त्यादीनां वपुः स्फूर्जद्द्वादशादित्यसन्निभम् ॥ ३३ ॥
चतुःषष्टिस्तदूर्ध्वं तु द्विगुणं द्विगुणं ततः।
शक्त्यादीनां तु मात्रांशो मनोन्मन्यास्तथोन्मनो ॥ ३४ ॥

(दी०) व्यापिका [3]बिन्दुविलसद्वामादित्रिशक्तिमयत्रिकोणरूपतां गते-त्यर्थः। इयं तु शक्तितत्त्वकथनेनैव कथिता। स्वच्छन्दसंग्रहे यथा—[4]"सूक्ष्मा चैव" इत्यादि "स्थिता" इत्यन्तं पूर्वोक्तम्। बिन्दुद्वयेति। स्पष्टम्। समनायाः प्रपञ्चः स्वच्छन्दसंग्रहे[5]—

चिदानन्दस्वरूपा तु परा शक्तिस्तदूर्ध्वतः।
समना नाम सा शक्तिः सर्वकारणकारणा[6] ॥

१. रालस्थऋ—ख०। २. मनोन्मना—ख०। ३. बिन्दोर्वि—ख०। ४. खपुस्तके—'सूक्ष्मा चैव सुसूक्ष्मा च तथा चैवामृता मृता। चतुर्दिक्षु स्थितास्तासां मध्यस्था व्यापिनी स्थिता ॥" इति पाठः। ५. स्वच्छन्दभैरवे यथा—ख०। ६. कारणकारणम्—ख०।

[1]सर्वाण्डानि बिभर्तीयं शिवेन समधिष्ठिता। दी०
[2]प्रत्यारूढः स भगवान् शिवः परमकारणः॥
[3](सृष्टिं स्थितिं च संहारं तिरोभावमनुग्रहम्।
शिवः करोति सततं सर्वकारणकारणः।)
[4]शिवः सर्वस्य कर्तेयं शक्तिः कारणमिष्यते॥ इति।

एतस्माद् बिन्दोर्विलसदृजुरेखारूपोन्मना। उन्मनाप्रपञ्चः स्वच्छन्दसंग्रहे [5]यथा—

या शक्तिः कारणत्वेन तदूर्ध्वे उन्मना स्मृता।
[6]मनः संक्रमते यत्र तेन सा उन्मना स्मृता।
नात्र कालकला[7]भावो न तत्त्वं न च देवता।
सुनिर्वाणं परं शुद्धं रुद्रवक्त्रं तदुच्यते।
शिवशक्तिरिति ख्याता निर्विकल्पा निरञ्जना॥ इति।

शत्यादीनां समनान्तानां [8]वर्गमात्रांशं कालं चाह—शत्त्यादीनामिति। मनोन्मन्या मनोन्मनीपर्यन्तम्, मनोन्मनीनाम समना, मनःसहितत्वात्तद्रहितत्वादुन्मनीत्युच्यते। शत्यादीनां मनोन्मनीपर्यन्तानामंशानां वपुः स्वरूपं स्फूर्जद्द्वादशादित्यसन्निभम् एकत्र हेलयोदितद्वादशादित्य[9]सवर्णं मात्राणामंशश्चतुःषष्टितमोंऽश इत्यर्थः। तदूर्ध्वं तु व्यापिकाया मात्रांशोच्चारणं द्विगुणं व्यापिकोच्चारणमात्रावयवकालोऽष्टाविंशत्युत्तरशततमो भाग इत्यर्थः। ततः समनोच्चारणमात्रावयवकालः षडधिकपञ्चाशदुत्तरद्विशततमो भाग इत्यर्थः।

उन्मनी यथेदानीं कथितविशेषणा तथा। निराकारा निरुच्चारा, "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्युपनिषदुक्तरीत्या[10] वाङ्मनोऽतीतगोचरत्वादुन्मनीत्युच्यते। महाबिन्दौ चेति चकाराद् रूपवर्णोच्चारणकाला न विद्यन्ते, अतो नात्रोच्यन्ते, तस्य विश्वोत्तीर्णत्वात्। तदुक्तं स्वच्छन्दसंग्रहे—

---

१. सर्वान्तानि–ख०। २. अत्र रूढः–ख०। ३. कंसान्तर्गतो ग्रन्थः ख० नास्ति। ४. शिवः सरस्वकर्त्रपि–क०। ५. यथा–क० नास्ति। ६. इयं पङ्क्तिः खे नास्ति। ७. मानम्–ख०। ८. मात्रांशं कलां चाह–ख०। ९. सवर्गवर्गं मात्रांशश्चतुःषष्टिमात्रांशकालश्चतुःषष्टितमोंऽशः–ख०। १०. रीत्या मनोतीत–ख०।

दी० [1]वस्त्वातीतं वरारोहे वाङ्मनोऽतीतगोचरम् ॥
अनिष्कलं चासकलं नीरूपं निर्विकल्पकम् ।
निर्द्वन्द्वं परमं तत्त्वं शिवाख्यं परमं पदम् ॥ इति ।

हकारादिबिन्द्वन्तानां स्थूलवर्णानामुच्चारणकालो मात्रा, बिन्द्वादिसमनान्तानामर्धमात्रा, तदर्धादिक्रमेण लवपर्यन्तमुच्चारणकालो लवो नाम[2],

नलिनीपत्रसंहत्यां[3] सूक्ष्मसूच्यभिवेधने ।
दले दले तु यः कालः स कालो लववाचकः ॥

इति वचनात् । तदूर्ध्वं [4]लवोर्ध्वं शून्य एव, तदधिकसूक्ष्मतरकालाभावात् । [5]एवंविधभावनया शिव एव भूयादित्यर्थः । तदुक्तं [6]विज्ञानभट्टारकैः—

बिन्दुरूपस्य मन्त्रस्य स्थूलवर्णक्रमेण तु ।
अर्धेन्दुबिन्दुनादान्तशून्योच्चाराद्भवेच्छिवः ॥ इति ।

अत्र 'बिन्द्वर्धेन्दु' इति वक्तव्ये वृत्तानुरोधेन व्यत्यासः । बिन्द्वर्धेन्दुनादान्तशून्योच्चाराद्भवेच्छिव इति प्रत्याहाररीत्या ग्रहणम् । अर्धेन्दोरुपरि रोधिनीनादयोर्नादान्तस्य चोपरि [7]चिच्छक्तिव्यापिकासमनानां च विद्यमानत्वात् । शून्यशब्देनोन्मनोच्यते । अतोऽर्धेन्दुबिन्दुनादान्तशून्योच्चाराद्भवेच्छिव इति [8]पिण्डरूपस्य मन्त्रस्य संग्रहेणोक्तिः ॥३२-३४॥

(से०) (व्यापिकेत्यादि)। शक्तित्रिकोणस्य स्वाभिमुखकोणे बिन्दुलेखनेन व्यापिकाया आकारो भवतीति सम्प्रदायः । ऊर्ध्वादधःप्रसृता रेखा तच्छिरोमूलभागयोः संलग्नौ बिन्दू, ईदृशी समनेत्युत्तरश्लोकस्थेनान्वयः । अन्तरालस्थऋजुरेखेत्यत्र "ऋत्यकः" इति प्रकृतिवद्भावः ॥३२॥

(समनेत्यादि)। बिन्दोः शिरस्यूर्ध्वरेखा लेख्या । सोऽयमुन्मनाया आकारः । समनायाः शिरःस्थितबिन्दोरपनयने समना भवतीति यावत् । अत एव समनातोऽतिसूक्ष्मत्वादुत्क्रान्तमनस्का । योगिनामपि मनसा संकटेन गम्येति

१. पश्यातीतम्—क० । २. नाम—ख० नास्ति । ३. संहत्या सूक्ष्मसूच्यभिचोदनात्—क० । ४. लवोर्ध्वम्—ख० नास्ति । ५. एवं विश्व—क० । ६. विज्ञानभैरवभट्टारकैः—ख० । ७. शक्ति—क० । ८. बिन्दुरूपस्य—क० ।

भावः । समनादयः शब्दाः पृषोदरादित्वादेव साधवः । शक्त्यादीनामुन्म- सं० नान्तानां चतसृणां द्वादशसूर्यसमुचितकान्तिमन्ति वपूंषि ॥३३॥

(चतुरित्यादि) । नादान्तपर्यन्तं कालः पूर्वमुक्तः । तदूर्ध्वं नादान्तोर्ध्वं शक्त्यादीनां मध्ये प्रथमस्येत्यर्थः । चतुःषष्टिश्चतुःषष्टितमो मात्रांशः, चतुर्लवात्मकः शक्तेः काल इत्यर्थः । तत(:) शर(? क्त्य)नन्तराणां तु द्विगुणं द्विगुणमिति वीप्सया पूर्वपूर्वद्विगुणांशो मात्राकाल इत्यर्थः। ततश्च व्यापिकाया द्वौ लवौ, समनाया एको लवः उन्मनायास्तु लवार्धात्मकः कालः प्रसक्तस्तमपवदति— मनोन्मन्या इति । मनोन्मनीति समनाया एव संज्ञान्तरम् । यथा समनायाः कालस्तथैवोन्मनीकाल इत्यर्थः । एकलवात्मक एव काल इति यावत् । समनातोऽस्या रूपकालकलामानमिति तत्तु समनात आकृत्या सूक्ष्मत्वाद्धियमानोऽपि कालो दुर्लक्ष्य इत्येवंपरम् । अत एव मूले—"देशकालानवच्छिन्नं तदूर्ध्वं परमं महत्" इत्यनेनैतदूर्ध्वमेव कालानवच्छेद उक्तः सङ्गच्छते । प्राञ्चस्तु द्विगुणं द्विगुणमिति न वीप्सा, किन्तु शक्तेरूर्ध्वं व्यापिकायां द्विगुणं ततो व्यापिकानन्तरं समनायां द्विगुणमिति प्रत्येकमन्वितं पदद्वयम्, मनोन्मन्या इत्यस्य समनापर्यन्तानामित्यर्थः । तच्च शक्त्यादीनामित्यस्य विशेषणम् । ततश्चोन्मनाया इह कालविधिर्नास्त्येव । तथोन्मनी । यथेदानीमियमकथितविशेषणा तथैव निराकारा निरुच्चारा चेति यावदित्याहुः । तदिदं मनोन्मन्यास्तथोन्मनीति चरणस्य वैयर्थ्येन क्लिष्टलापनेन च कलुषितमुपरितनश्लोकस्वारस्यविरुद्धं चेत्युपेक्षितम् । किञ्च, उत्तरपटले विद्यायां पञ्चदशस्वरान् प्रतिपाद्य स्वरव्यञ्जनभेदेन सप्तत्रिंशत्प्रभेदिनीत्युक्त्वा नादत्रयेण सह सप्तत्रिंशत्ता विवेचयिष्यते, तेन ज्ञापकेन नादस्य पञ्चदशस्वरबहिर्भूतस्य व्यञ्जनत्वे सिद्धे व्यञ्जनं त्वर्धमात्रिकमिति वचनादष्टाविंशत्यधिकशतलवात्मकतापि ज्ञापितैव । नादावयवस्योन्मनायाः कालाभावे त्वेकलवन्यूनतापत्त्या तद्विरोध इति समनोन्मनयोः समानः काल इत्येव व्याख्या युक्तेति मन्तव्यम् । किञ्च, उन्मन्यां नादलयः कालविषुवमिति वक्ष्यते, तस्याः कालाभावे तत्संज्ञास्वारस्यविरोधः, तस्य पदस्य कालव्याप्तिमदर्थकत्वात् ॥३४॥

**देशकालानवच्छिन्नं तदूर्ध्वे परमं महत् ।**
**निसर्गसुन्दरं तत्तु परानन्दविघूर्णितम् ॥ ३५ ॥**

(दी०) देशकालेति । तदूर्ध्वे हका[1]रादिमहाबिन्द्व[2]न्तानां सकल-सकलनिष्कल-केवलनिष्कलानां त्रयाणामप्यूर्ध्वे [3]परत्र परमं महत् ([4]महत्त्वं घटादीनामप्यस्ति न्यूनपरिमाणापेक्षया, अत उक्तं परममिति । यतः परं महत्त्वं नास्ति तत् परमं महत् ।) अत एव देशकालानवच्छिन्नं देशकालाकारैरन[5]वच्छिन्नमेव परमं महदित्युच्यते । तेन निसर्गसुन्दरं लोके[6]ऽप्यसुन्दरमपि वस्तु वस्त्राद्यलङ्कारैरारोपितैः सुन्दरमिव प्रतीयते । इदं तु [7]निसर्गसुन्दरं स्वभावसुन्दरं सर्वैः [8]स्वात्मतया स्पृहणीयत्वात् । परानन्दविघूर्णितम् आनन्दः शब्दादिविषयानुभवेऽप्यस्ति क्षणिकस्तत[9] उच्यते परानन्दविघूर्णितमिति । कोऽर्थः ? [10]त्रिरूपसमयस्थितवस्तुभ्यः पुरातनी देशकालानवच्छिन्ना परममहद्रूपा स्वभावसुन्दरी[11] पर-प्रकाशात्मकपरशिवसाम[12]रस्यपरिपूर्णपरानन्दशालिनी विमर्शशक्तिः [13]श्रीमहात्रिपुरसुन्दरीत्यर्थः ॥३५॥

(से०) (देशेत्यादि) । तदूर्ध्वमुन्मनाया ऊर्ध्वदेशोपलक्षितं महाबिन्दुस्थान-मिति यावत् । तद्देशकालाभ्यामनवच्छिन्नं तत्कृतावच्छित्तिरहितम् । अत एव तदूर्ध्वमिति देशकथनं देशस्योपलक्षणपरतया व्याख्येयम् । निसर्गसुन्दरं स्वभावत एव चारु । परानन्देन शिवशक्तिसामरस्यात्मकेन विघूर्णितं व्याप्तम् । प्राञ्चस्तु—महाबिन्दोः स्थानस्वरूपादिकमिह तन्त्रे नोक्तमेव, तस्य विश्वोत्तीर्णत्वेन वाङ्मनसागोचरत्वात् । तेन तदूर्ध्वं पदं हादिविद्यास्थ-हकारादिमहाबिन्द्वन्ताक्षरस्थानसमूहोर्ध्वमित्यर्थकम् । त्रिविधभावनास्थलेभ्यो-ऽप्यूर्ध्वस्थानस्यैवमुक्तिरिति व्याचक्षते । तत्सन्दर्भविरुद्धं विश्वोत्तीर्णादपि यत्परतस्तत्र वाङ्मनसयोः कथं प्रवृत्तिरिति विचार्यञ्च । अत्रेन्द्वादिमहा-बिन्द्वन्तस्थाननिष्ठदेवतानां तत्तल्लोकानां तत्तत्कलानाञ्च विस्तारः प्राचां टीकातोऽवसेयः ॥३५॥

---

१. रादिबिन्द्वादिमहा–क० । २. न्तानां सकलनिष्कलानाम्–क० । ३. परत्र–ख० नास्ति । ४. कंसान्तर्गतो ग्रन्थः क० नास्ति । ५. रवच्छिन्न–ख० । ६. लोके । सुन्दर–ख० । ७. निसर्गसुन्दरम्–ख० न विद्यते । ८. स्वस्वात्म–ख० । ९. स्तदु–ख० । १०. त्रित्रिरूप–ख० । ११. सुन्दरी प्रकाशा–ख० । १२. रस्यपरा–ख० । १३. शक्तिर्महा–ख० ।

**आत्मनः स्फुरणं पश्येद्यदा सा परमा कला ।**
**अम्बिकारूपमापन्ना परा वाक् समुदीरिता ॥ ३६ ॥**

(दी०) प्रसृतं विश्वलहरीस्थानं मातृत्रयात्मकमित्यत्र सूचितां मातृकामयवासनामिदानीं विवृणोति—आत्मनः स्फुरणमित्यादिना । सा परमा सर्ववर्णांशभूतविमर्शरूपा, कला विमर्शशक्तिः, आत्मनः परशिवस्य, स्फुरणं पश्यन्त्यादिक्रमेण वैखरीपर्यन्तं विमर्शनम्, पश्येद् द्रष्टुमिच्छेत्, तदा परमा शान्तात्मिका भूत्वा अम्बिकारूपमापन्ना प्रकाशांशमात्राया अम्बिकायाः सामरस्यमापन्ना, परा वाक् समुदीरितेति । परा मातृकोच्यते । तदुक्तं सङ्केतपद्धत्याम्—

"अनयोः सामरस्यं यत्परस्मिन्महसि स्फुटम्" इति ॥ ३६ ॥

(से०) अथेदानीं प्राथमिकविस्तृतवासनावसरेऽनुक्तत्वेनावशेषितां ब्रह्माण्डपिण्डाण्डयोरैक्यभावनादार्ढ्यसिद्धिमदुत्तमाधिकारिकत्वध्वननाय सकलादिभावनात्रयोत्तरमेव वर्णयितुं सङ्गतां मध्यत्रिकोणवासनां विस्तरेणोपदिशति—आत्मनः स्फुरणमित्यादिभिर्विंशत्या श्लोकैः । पूर्वं "यदा सा परमा शक्तिः" इति श्लोके या वृत्तिरीक्षणात्मिका शान्तानाम्नी विश्वकारणत्वेन वर्णिता, तया हि शब्दार्थसृष्टिद्वयमुत्पाद्यते । तत्रार्थसृष्टेर्ब्रह्मविष्णुरुद्राः कारणानि । त एव शक्तिं विना कार्याक्षमत्वाच्छक्तिविशिष्टतया विभाव्यमाना वामाज्येष्ठारौद्र्य इत्युच्यन्ते । तच्छक्तयस्तु भारतीपृथिवीरुद्राणीत्वेन प्रसिद्धा इच्छा ज्ञाना क्रिया इत्युच्यन्ते । शब्दसृष्टेः कारणानि पश्यन्तीमध्यमावैखर्यः । कारणानामपि कारणमीक्षणम् । ततश्चेक्षण इच्छादित्रयसमष्टित्ववद्वामादित्रयसमष्टित्वं पश्यन्त्यादित्रयसमष्टित्वं च वक्तव्यमेव, कारणत्वसमष्टित्वयोरनतिभेदात्, पत्रपुष्पफलशाखादिसूक्ष्मरूपसमष्टेरेव वटबीजत्वात् । ततश्चैकस्यामेवेक्षणवृत्ताविच्छादित्रयजनकत्वं प्रवृत्तिनिमित्तीकृत्य यथा शान्तापदप्रवृत्तिस्तथा सैव वृत्तिर्वामादित्रयजनकत्वादम्बिकापदवाच्यत्वमप्यापन्ना, पश्यन्त्यादित्रयजनकत्वं शक्यतावच्छेदकीकृत्य परापदेनाप्युदीरिता । तादृशवृत्त्याश्रयभूता देव्यपि वृत्तिं प्रति परिणाम्युपादानत्वात् परिणामपरिणामिनोरभेदाच्छान्तादिपदैर्व्यवह्रियत इत्यर्थः । अत्र परमेतिपदं शान्तापरमिति केचित् ॥ ३६ ॥

बीजभावस्थितं विश्वं स्फुटीकर्तुं यदोन्मुखी ।
वामा विश्वस्य वमनादङ्कुशाकारतां गता ॥३७॥
इच्छाशक्तिस्तदा सेयं पश्यन्ती वपुषा स्थिता ।
ज्ञानशक्तिस्तथा ज्येष्ठा मध्यमा वागुदीरिता ॥३८॥
ऋजुरेखामयी विश्वस्थितौ प्रथितविग्रहा ।
तत्संहृतिदशायां तु बैन्दवं रूपमास्थिता ॥३९॥
प्रत्यावृत्तिक्रमेणैवं[1] शृङ्गाटवपुरुज्ज्वला ।
क्रियाशक्तिस्तु रौद्रीयं वैखरी विश्वविग्रहा ॥४०॥

(दी०) बीजभावस्थितं विश्वम् । यथा बीजे वृक्षस्तथा षट्त्रिंशत्तत्त्वात्मकं विश्वं परायां कारणता[2]तन्मात्रतामास्थितम् । स्फुटीकर्तुं [3]यदोन्मुखी स्फुटीकर्तुमुत्पादयितुमुन्मुखी । अत्रोत्पादनं [4]नाम कारणे सत एव कार्यस्य स्फुटीकरणम् । अत एव कार्यस्य स्फुटीकरणाद् वामा, विश्वस्य वमनात् कारणे [5]सत उत्पादनात् । वमनं नामोदरस्थस्य आहारादेर्बहिर्निर्यासनम्, उत्पादनमप्येवमेव । अत एव गर्भभावेनात्मोदरगतस्य विश्वस्य [6]बहिर्वमनाद्वामा । अङ्कुशाकारतां गता वक्रत्वाच्च वामशृङ्गाटकस्य वामरेखा सृष्टिरूपाभूदित्यर्थः ॥३७॥

तथा इच्छाशक्तिर्वामाशक्तिसामरस्यमापन्ना पश्यन्तीरूपेण स्थितेत्यर्थः । ज्ञानशक्तिरिति । तथा ज्येष्ठाशक्तिर्ज्ञानशक्तिर्यथा वामाशक्तिरिच्छाशक्ति[7]( सामरस्यमापन्ना सृष्ट्यात्मकशृङ्गाटवामरेखासीत् तथा ज्येष्ठाशक्तिरपि ज्ञानशक्ति )सामरस्यमापन्ना । विश्वस्थितौ प्रथितविग्रहा, विश्वस्थितिहेतुभूतत्वात् । ऋजुरेखामयी अत्र शृङ्गाटाग्ररेखाकारा मध्यमा वागुदीरिता मध्यमामातृकात्वमापन्ना ।

---

१. णैव–से० । २. णता तस्मात्त्रितयास्थितम्–क० । ३. तथोन्मुखी–क० । ४. नाम स्फुटीकरणम्–ख० । ५. सतो विश्वस्य वमनात् । वमनम्–ख० । ६. बहिः–क० नास्ति । ७. कंसान्तर्गतो ग्रन्थः–ख० नोपलभ्यते ।

तत्संहृतीति । सृष्टस्य स्थितस्य विश्वस्य संहारकाले बैन्दवं दी० रूपमास्थिता अम्बिका शान्ता [1]सामरस्यरूपा स्थिता मध्यबिन्दोराविर्भूय सृष्टिं स्थितिं च संपाद्य तत्संहारोन्मुखी पुनर्बिन्दुमेव प्रविष्टेत्यर्थः ॥ ३८-३९ ॥

एवं प्रत्यावृत्तिक्रमेणेयं रौद्री क्रियाशक्तिसामरस्यात् सैव शृङ्गाटवपुः शृङ्गाटस्य दक्षिणरेखा भूत्वा उज्ज्वला शृङ्गाटरूपेण भासमाना । शृङ्गाटं नाम त्रिकोणम् । वैखरी विश्वविग्रहा[2] वाग्रूपप्रपञ्चमयवैखरीरूपा जातेत्यर्थः ॥ ४० ॥

(से०) (बीजेत्यादि) । बीजभावो बीजत्वं तद्धर्मावच्छिन्नतया स्थितं स्वगर्भान्तर्भूतं बीजावधानमिति शिवसूत्रे स्फुरत्तात्मा पराशक्तिर्बीजं विश्वस्य कारणमिति टीकाकारोक्तं रूपं विश्वं स्फुटीकर्तुं कार्यत्वावच्छिन्नतया स्थापयितुं बहिर्निःसारयितुं यदोन्मुख्युद्युक्ता विश्वं निःसारितवतीति यावत् । तदा सैव शक्तिर्विश्ववमनकर्तृत्वाद्वाङ्कुशवद्वक्ररूपत्वाद्वा वामेत्युच्यते । वमनक्रियादशायां हि तत्कर्तृकर्मकारकयोर्योगादङ्कुशाकारता भवति । ततश्च वामापदस्येष्टसृष्टिजनकत्वं तादृशसृष्टिव्याप्यवक्रत्वविशेषो वा शक्यतावच्छेदक इत्यर्थः । वस्तुतस्त्वङ्कुशाकारत्वकथनं त्रिकोणस्य वामरेखोपलक्षकम्, ततश्च वामादिदेवीरूपतया वामरेख्या( खां ) भावयेदिति भावः । एवं सृष्टिजनकत्वं वा जनकतासम्बन्धेन सृष्टिरेव वेति विनिगमनाविरहादुभयस्यापि शक्यतावच्छेदकत्वे सिद्धे सृष्टिं प्रवृत्तिनिमित्तीकृत्य वामापदस्य ब्रह्मापरपर्यायस्य प्रवृत्तिः । जनकत्वरूपसामर्थ्यात्मिकां शक्तिं प्रवृत्तिनिमित्तीकृत्य तु पितामहशक्तिभारतीपर्यायेच्छापदस्य प्रवृत्तिः । शब्दसृष्टिजनकत्वात्तु पश्यन्तीपदस्यापीत्यर्थः ॥ ३७ ॥

( ज्ञानेत्यादि ) । स्थिताविति निमित्तसप्तमी, "चर्मणि द्वीपिनं हन्ति" इतिवत् । उत्पन्नस्य विश्वस्य स्थितिं प्रवृत्तिनिमित्तीकृत्य विष्णुपर्यायज्येष्ठापदस्य तच्छक्तिपृथिवीपर्यायज्ञानशक्तिपदस्य शब्दस्थितिं निमित्तीकृत्य मध्यमापदस्य च पूर्ववत्प्रवृत्तिः । कार्यस्य कारणाद्बहिःप्रसरणक्रिये इव हि चक्रे प्रसृतस्तापसरणावधि कश्चित्कालमवस्थानं त्वृजु । अतो ज्येष्ठाज्ञानामध्यमास्त्रिकोणस्य ऋजुरेखामय्यो भावनीयाः । स्थितौ निमित्ते प्रथिता ज्ञानादिशब्दवाच्यतामापन्ना विग्रहा विभिन्नतत्तद्धर्मावच्छिन्नशरीराणि यस्याः सेत्यर्थः ॥ ३८ ॥

---

१. रस्यमध्य–ख० । २. विग्रहा नाम नामरूपप्रपञ्च–क० ।

से० (तदित्यादि)। सैव शक्तिर्बिन्द्वात्मकरूपात् सृष्ट्यात्मना निर्गत्य स्थित्यात्मना कञ्चित्कालं स्थित्वा पुनर्बैन्दवं रूपमास्थातुमुद्युक्ता यदा परावर्तते तदा विश्वसंहारदशां निमित्तीकृत्य पूर्ववद्रौद्री क्रिया वैखरीति पदानि तस्यां प्रवर्तन्ते। तादृशपदवाच्यदेवीत्वेन सृष्टिरेखोत्पत्तिस्थानाभिमुख्येन परावृत्तदक्षिणरेखां भावयेत्। तेनैकैव देवी नानाधर्मवैशिष्ट्येन भिन्ना सती रेखात्रयात्मकशृङ्गाटवपुषा त्रिकोणदेहेन श्रीचक्रे शोभत इत्यर्थः। यथा हि लिपिसङ्केतितरेखाभिः ककारादिवर्णानां तैश्च तदर्थानां स्मरणं तथा त्रिकोणरेखाभिः सृष्ट्यादिकृत्यानां तत्कर्तृदेवीनाञ्च स्मरणं यथा भवति तथा दृढमभ्यस्य पूजयेदिति तु पर्यवसितोऽर्थः॥ ३९-४०॥

[1]भासनाद्विश्वरूपस्य स्वरूपे बाह्यतोऽपि च।
एताश्चतस्रः शक्त्यस्तु का पू जा ओ इति क्रमात्॥ ४१॥
पीठाः कन्दे पदे रूपे रूपातीते क्रमात् स्थिताः।
चतुरस्त्रं तथा बिन्दुषट्कयुक्तं च वृत्तकम्॥ ४२॥
अर्धचन्द्रं त्रिकोणं च रूपाण्येषां [2]क्रमेण तु।
पीतो धूम्रस्तथा श्वेतो [3]रक्तो रूपं च कीर्तितम्॥ ४३॥

(दी०) प्रकाशविमर्शांशरूपाणामम्बिकादीनां शान्तादीनां चतसृणां शक्तीनां शृङ्गाटरूपतामुक्त्वा पुनरिदानीं [4]त्रिकोणान्तर्गत[5]पीठलिङ्गवर्णावस्था[6]चतुष्टयमयतां वासनामाह—"भासनाद्विश्वरूपस्य" (यो० हृ० सं० श्लो० ४१) इत्यादिना "तुर्यरूपाण्यमूनि च" (यो० हृ० सं० श्लो० ४९) इत्यन्तेन।

उत्तरार्धवक्ष्यमाणचतुष्टये हेतुमाह—भासनादिति। विश्वं शिवादिभूम्यन्तं नामरूपात्मकं तद्रूपस्य स्वरूपे बीजभावेन बाह्यतः सृष्ट्यात्मना भासनाद् एताश्चतस्रः शक्त्यस्तु 'शक्लृ व्याप्तौ' इत्यस्माद्धातोः शक्तिशब्दव्युत्पत्तिः। चतस्रः ([7]अम्बिकाद्याः शान्त्याद्याश्चतस्रः) क्रमेण परस्परं सामरस्यमापन्नाः का पू जा ओ इति क्रमाद् आसन्। का

१. वासना—से०। २. क्रमात्स्विति—से०। ३. रक्तरूपश्च कीर्त्तितः—क०। ४. तत्कोणान्त—क०। ५. पीठाकारवर्णलिङ्गावस्था—ख०। ६. चतुष्टयहेतुत्वे वासनामाह—क०। ७. कंसान्तर्गतो ग्रन्थः—ख० नोपलभ्यते।

कामरूपपीठम्, पू पूर्णगिरिपीठम्, जा जालन्धरपीठम्, ओ ओड्याण- दी०
पीठम्। प्रकाशविमर्शात्मतया समरसीभूताः पूर्वोक्ताश्चतस्रः शक्तयः कामरूपपूर्णगिरिजालन्धरौड्याणपीठरूपेण परिणता इत्यर्थः ॥ ४१ ॥

पीठचतुष्टयस्य पिण्डादिमयतां वासनामाह—पीठा इति। [1]कन्दं नाम सुषुम्नामूलम्। कन्दशब्देन [2]तत्रस्था पिण्डाख्या कुण्डली लक्ष्यते। तदुक्तं स्वच्छन्दसङ्ग्रहे—

नयित्वा तं सुषुम्नाधः कन्दमूले च मारुतम्।
इच्छाज्ञानक्रियारूपां कुण्डलीं परमेश्वरीम्॥
प्रसुप्तभुजगाकारां मातृकारूपिणीं शिवाम् ॥ इति।

पदं नाम हंसः, रूपं नाम बिन्दुः, रूपातीतं [3]नाम निरञ्जनं [4]तत्त्वम्। तदुक्तं स्वच्छन्दसङ्ग्रहे—

पिण्डं कुण्डलिनी शक्तिः पदं हंसः प्रकीर्तितः।
रूपं बिन्दुरिति ख्यातं रूपातीतं तु [5]चिन्मयम्॥ इति।

पीठाश्चत्वारः पिण्डपदरूपरूपातीतशब्देन तत्तत्स्थानान्याधारहृदयभ्रूमध्यब्रह्मरन्ध्राणि लक्ष्यन्ते। तेन क्रमात्तेषु स्थानेषु [6]स्थितास्तत्तन्मया इत्यर्थः। तेषां पृथिवीवायुसलिलतेजोरूपतां च सूचयन् [7]तत्स्वरूपभेदमाह—चतुरस्रमिति।

चतुरस्रं चतुरस्ररूपः कामरूपपीठः। भूतत्त्वमित्यर्थः, भूमण्डलस्य चतुरस्ररूपत्वात्। बिन्दुषट्कं च वृत्तकम्। पूर्णगिरिपीठः षड्बिन्दुयुक्तवृत्तरूपः, वायुतत्त्वमित्यर्थः, वायुमण्डलस्य [8]षडावर्तवद्वृत्तरूपत्वात्। अर्ध[9]चन्द्रं जालन्धरपीठः, अर्धचन्द्ररूपः अप्तत्त्वमयः, अम्मण्डलस्यार्धचन्द्ररूपत्वात्। त्रिकोणम् ओड्याणपीठः, त्रिकोणरूपस्तेजस्तत्त्वमयः, अग्निमण्डलस्य त्रिकोणरूपत्वात्। क्रमेण कामरूपादीनां[10]पीठाना-

१. कन्द इति सुषुम्ना—ख०। २. तत्रस्था कुण्डली—इत्येव क०। ३. नाम—ख० नास्ति। ४. तत्त्वं—क० नास्ति। ५. भास्कररायोद्धृतः सेतुबन्धीयः 'निष्कलम्' इति पाठोऽत्र साधुः प्रतीयते। ६. स्थिताः। अतस्तत्तन्मया—क०। ७. तत्त्वरूप—ख०। ८. षडावृत्ततद्वृततद्वृतरूपत्वात्—क०। ९. चन्द्रो जालन्ध—क०। १०. रूपादिपीठानामेव तानीत्यर्थः—क०।

दी० मेतानि रूपाणीत्यर्थः। अत्र गगनतत्त्वस्य अरूपत्वान्निरवयवत्वाच्चानुक्तिः। पीठानामेव क्रमेण वर्णानाह—पीत इत्यादिना।

पृथिवीवायुसलिलतेजसां क्रमेण पीतधूम्रश्वेतरक्तवर्णत्वात्पीठानामपि त एव वर्णा इत्यर्थः। अन्वयवार्थः स्पष्टः। अत्र भूतानामक्रमः पीठा[1]नुसारेण, पीठानां [2]त्वाम्नायभेदेन क्रमस्य नियमात्॥ ४३॥

(से०) एवं त्रिकोणस्य वामपूर्वदक्षरेखास्तिस्रो बिन्दुरेक इत्येवं चतुर्णां क्रमेणेच्छाज्ञानाक्रियाशान्ता वामाज्येष्ठारौद्रयम्बिकाः पश्यन्तीमध्यमावैखरीपराश्चतस्रश्चतस्रो देवता इत्येवं वासनात्रयं तन्त्रेण सङ्कलितमुक्तम्। इदानीमनेनैव क्रमेण वासनान्तराणि पार्थक्येनाह—(वासनेत्यादि)। यादृशी सृष्टिर्ब्रह्माण्डात्मिका तादृश्येव च स्वदेहरूपापि, ब्रह्माण्डस्यापि विराट्संज्ञकजीवविशेषशरीरत्वात्। अतोऽस्मदादिशरीरस्य तच्छरीरस्य चैकैव प्रक्रिया। अल्पत्वमहत्त्वमात्रकृत एव तु भेदः। अत एवास्मच्छरीरस्यापि चतुर्दशलोकात्मकत्वं महाषोढान्तर्गते भुवनन्यासे प्रसिद्धम्। ततश्चैताभिश्चतसृभिरेव शक्तिभिर्विश्वस्य सम्पूर्णस्य सृष्ट्यादिकृत्यत्रयविषयत्वेन प्रकटनादेता एव बाह्यसृष्टौ स्वरूपसृष्टौ च वर्तन्ते। तत्र बाह्यसृष्टौ कामरूपं पूर्णगिरिर्जालन्धरमोड्यानमिति पीठा एतद्देवीरूपा लौहित्यनदादितटेषु विद्यमानाः कालिकापुराणादिषु वर्णिताः प्रसिद्धा एव। शरीरे त्वाह—कन्द इति। कन्दः सुषुम्नामूलं तेन मूलाधारं लक्ष्यते। पदं हंसस्तेन हृदयम्। रूपं बिन्दुस्तेन भ्रूमध्यम्। रूपातीतं निष्कलं तेन ब्रह्मरन्ध्रम्। तदुक्तं स्वच्छन्दसंग्रहे—

कन्दः कुण्डलिनीशक्तिः पदं हंसः प्रकीर्तितः।
रूपं बिन्दुरिति ख्यातं रूपातीतं तु निष्कलम्॥ इति।

तत्तत्स्थानेषु कामरूपादयश्चत्वारः पीठा इत्यर्थः। का पू जा ओ इत्येकैकमक्षरमेकैकपीठनामैकदेशः। तस्य स्फुटत्वेन ज्ञानाय सन्ध्यभावः। शक्तय इत्यत्र मध्याकारलोपो वृत्तानुरोधि (?रोधी) यच्छन्दोव्याकरणयोर्विरोधे छन्दो बलीय इति परिभाषायाः "सोऽचि लोपे चेत्" इति सूत्रे पाणिनिना, "इयादिपूरणे" इति सूत्रे पिङ्गलेन च ज्ञापितत्वादिति तु छन्दःकौस्तुभे वर्णितमस्माभिः। कर्तरि क्तिचि कृदिकारादिति ङीष्वा विधेयः॥ ४१॥

---

१. नुरूपेण–ख०। २. त्वात्म–ख०।

एत एव पीठाः क्रमेण क्षितिपवनजलाग्निमण्डलरूपा इति ध्वनयन्नाह— से० (चतुरस्रमित्यादि)। भूतत्त्वं चतुरस्रं पीतवर्णं कामरूपं पीठात्मकम्, वायुतत्त्वं त्वभितः षड्बिन्दुलाञ्छितं वर्तुलं धूम्रवर्णं पूर्णगिरिपीठाभिन्नम्, जलतत्त्वमर्धचन्द्राकारं श्वेतं जालन्धरपीठात्मकम्। अग्नितत्त्वं त्रिकोणं रक्तमोड्यानपीठरूपमित्यर्थः ॥ ४२-४३ ॥

**स्वयम्भुर्बाणलिङ्गं च इतरं च परं पुनः।**
**पीठेष्वेतानि लिङ्गानि संस्थितानि वरानने ॥ ४४ ॥**
**हेमबन्धूककुसुमशरच्चन्द्रनिभानि तु।**
**स्वरावृतं त्रिकूटं च महालिङ्गं स्वयम्भुवम् ॥ ४५ ॥**
**कादितान्ता[1]क्षरोपेतं बाणलिङ्गं त्रिकोणकम्।**
**कदम्बगोलकाकारं थादिसान्ताक्षरावृतम् ॥ ४६ ॥**
**सूक्ष्मरूपं समस्तार्णावृतं परमलिङ्गकम्।**
**बिन्दुरूपं परानन्दकन्दं नित्यपदोदितम् ॥ ४७ ॥**

(दी०) पीठेषु लिङ्गान्याह—स्वयम्भुरिति। लीनं बाह्येन्द्रियागोचरं चिद्रूपमर्थं गमयन्तीति लिङ्गानि। मनोबुद्ध्यहङ्कारचित्तात्मकानि कामरूपादीनि चित्स्फुरत्ताधारत्वात् पीठानि। एतेष्वन्तःकरणचतुष्टयरूपेषु तत्तद्वृत्तिचतुष्टयमयानि लिङ्गानि स्वयंभ्वादीनि वसन्तीत्यर्थः। एतत्सर्वं मया सौभाग्य[2]सुभगोदये प्रपञ्चितम्। यथा—

पुनरेव कामपीठे तदग्रकोणे स्थिते मनोरूपे।
प्रतिफलितं तज्ज्योतिः स्वयम्भुलिङ्गं समीहितं सद्भिः ॥
दक्षिणकोणेऽहङ्कृतिरूपे जालन्धरे तु संक्रान्तम्।
परधामबाणलिङ्गं जातं संक्रान्त्युपाधिभेदवशात् ॥
मध्यत्रिकोणकोणे वामे श्रीपूर्णपीठमेतस्मिन्।
बुद्धिमये परतेजः प्रतिफलितं त्वितरलिङ्गतां यातम् ॥
चित्तमये श्रीपीठे ज्योतिर्बिन्दौ[3] यदस्य संक्रान्तम्।
प्रतिफलितं परधाम्नः परलिङ्गं तत्प्रकीर्त्यते प्राज्ञैः ॥ इति ॥ ४४ ॥

1. क्षरवृतं–ख०। 2. सुभोदये–ख०। 3. बिन्दोस्तदस्य–ख०।

दी० लिङ्गानां स्वरूपं [1]पीतादिवर्णान् वैखरीवर्णांश्च विभज्याह—हेमबन्धूकेति। हेमनिभं पीतवर्णं त्रिकूटं बिन्दुत्रयकूटरूपम्, स्वरावृतम् अकारादिषोडशस्वरावृतं स्वयम्भुलिङ्गम्। बन्धूककुसुमनिभं रक्तवर्णं त्रिकोणरूपं कादितान्ताक्षरवृतं बाणलिङ्गम्। शरच्चन्द्रनिभं श्वेतवर्ण कदम्बगोलकाकारं कदम्बकुसुमगोलकरूपं थादिसान्ताक्षरावृतम् इतरलिङ्गम्। परलिङ्गस्य परतेजोरूपत्वादवर्णत्वं सूक्ष्मरूपम् अतीन्द्रियगोचरम्, अत एव बिन्दुरूपं समस्तार्णवृतम्। आदिक्षान्त[2]पञ्चाशदक्षरवृतं परलिङ्गं परानन्दकन्दं पराया अक्षरादिरूपायाः पश्यन्त्यादिशाखावत्या लताया आनन्दमयं कन्दम्, नित्यपदोदितं नित्यत्वञ्च मातृकाया उत्पत्तिविनाशरहितत्वात्। पदाद् विश्वमुमुक्षुमनःप्राप्याद् उदितं प्रथमस्पन्दरूपतया॥ ४५-४७॥

(से०) अथ तत्तत्पीठस्थितानि लिङ्गानि सविशेषणान्याह—(स्वयंभ्वित्यादि)। अत्र लिङ्गानीतिपदेन लीनमर्थं गमयतीति व्युत्पत्त्या मनोबुद्ध्यहङ्कारचित्तानि चित्स्फुरणाधारत्वादुच्यन्ते। त्रिकोणस्याग्रदक्षवामकोणेषु मध्ये चैतानि चत्वारि लिङ्गानि भावनीयानीति वृद्धाः। हेमवर्णं पीतं बन्धुजीवपुष्पवर्णं रक्तम्। स्वरावृतं षोडशस्वरयुक्तम्। त्रिकूटं शिखरत्रयवत्। बिन्दुत्रयात्मककूटवदित्यन्ये। स्पष्टमन्यत्। एवं लिङ्गत्रयस्वरूपमुक्त्वा परलिङ्गस्वरूपमाह—सूक्ष्मेति। सूक्ष्मरूपमुक्तलिङ्गत्रयसमष्टिरूपम्, बिन्दुरूपं बैन्दवचक्रवासनात्मकम्। परानन्दकन्दं परायाः मातृकायाः सारभूतम्, पदोदितं पदान्तमुमुक्षुचित्तादुदितमिति प्राञ्चः। वस्तुतस्तु रूपातीतस्थानीयस्यापि परलिङ्गस्य स्वयंभ्वादिसमष्टिरूपताद्योतनाय तत्तल्लिङ्गसाधारणाधारेषु कन्दपदबिन्दुष्वप्यसाध्योदयोऽस्तीति कथयितुं बिन्दुरूपादिविशेषणत्रयमिति व्याख्येयम्॥४४-४७॥

बीजत्रितययुक्तस्य सकलस्य मनोः पुनः।
एतानि वाच्यरूपाणि कुलकौलमयानि तु॥ ४८॥
जाग्रत्स्वप्नसुषुप्त्याख्यतुर्यरूपाण्यमूनि तु।
अतीतं तु परं तेजः स्वसंविदुदयात्मकम्॥ ४९॥

१. पीठानि वर्णान्—ख०। २. क्षान्तैकपञ्चा—क०।

**स्वेच्छाविश्वमयोल्लेखखचितं विश्वरूपकम् ।**
**चैतन्यमात्मनो रूपं निसर्गानन्दसुन्दरम् ॥ ५० ॥**

(दी०) एतानि सर्वाण्यपि बीजत्रययुक्तायास्तुरीयविद्याया वाच्यरूपाणीत्याह—बीजत्रितयेति । एतानि शक्तिचतुष्टयं मातृकाचतुष्टयं मध्यकोणचतुष्टयं पीठचतुष्टयं लिङ्गचतुष्टयञ्चेति । एतानि सर्वाणि बीजत्रययुक्तस्य सकलस्य मनोः वाग्भवकामराजशक्तिबीजसमेतायाः[1] समष्टिरूपायास्तुरीयविद्याया वाच्यरूपाणि । विद्या वाचिका, एतानि सर्वाणि वाच्यानि । अत एव[2] चतुर्मयी तच्चतुष्टयरूपिणीयं विद्येत्यर्थः, वाच्यवाचकयोरभेदात् । कुलं मेयमातृलक्षणम्, कौलं तत्समष्टिस्तन्मयान्यपीत्यर्थः ॥ ४८ ॥

अमूनि पूर्वोक्तानि सर्वाणि चतुरात्मकानि जाग्रदादिमयानीत्याह—जाग्रदिति । जाग्रद् जागरितदेहेन्द्रियव्यवहारः, अन्तःकरणमात्रव्यवहारः स्वप्नः, सर्वेन्द्रियोपरतिः सुखवन्मात्रपरामर्शः सुषुप्तिः । तुरीयं चैतन्यमात्र[3]वृत्तिः । अत्रैव वक्ष्यति—"वह्नौ देवि महाजाग्रदवस्था त्विन्द्रियद्वयैः" ( यो० हृ० सं० ३ श्लो० १८५ ) इत्यादिना । पूर्वं चक्रस्य चतुरात्मतामुक्त्वा तन्मध्ये बैन्दवनिवासिन्याः स्वसंविदस्तदतीतरूपतामाह—अतीतमिति । अतीतं जागरितादिदशाचतुष्टयातीतम्, अत एव परं विश्वोत्तीर्णं विश्वोत्तरत्वात् । किञ्च, परमनुत्तरं प्रकाशरूपम् । अत्र श्रुतिः—"तदेव ज्योतिषां ज्योतिः" इति । स्वसंविदुदयात्मकं सर्वप्राणिष्वात्मतया स्थितम् । तदुक्तं नवशतीशास्त्रे—

अनन्तं परमं ज्योतिः सर्वप्राणिहृदि स्थितम् ॥ इति ॥ ४९ ॥

चक्रस्य पुनर्वासनान्तरकथनाय विश्वातीतं वस्तु कथयित्वा वक्तव्यां वासनामाह—स्वेच्छेति । विश्वमयोल्लेखः, विश्वं षट्त्रिंशत्तत्त्वात्मकं तन्मय उल्लेखः, उल्लिख्येत इति उल्लेखः चित्रम्, [4]तेन स्वेच्छया विश्वमयोल्लेखः, तेन खचितं व्याप्तं स्वेच्छातूलिकयात्मभित्तौ

१. यास्तत्सम—क० । २. एव तच्चतुष्टय—ख० । ३. मात्राभिव्यक्तिः—क० । ४. तेन स्वेच्छाविश्वमयोल्लेखनेन खचितम्—ख० । वस्तुतः 'चित्रम् । स्वेच्छया विश्वमयोल्लेखः, तेन खचितम्' इति साधुतया प्रतिभास्यति ।

दी० ( [1]मायाचित्रमुल्लिखतीत्यर्थः । तदुक्तमीश्वरप्रत्यभिज्ञायाम्—"स्वेच्छया स्वभित्तौ ) विश्वमुन्मीलयति" इति । अत्र [2]प्रामाणिकवचनञ्च—

जगच्चित्रं समालिख्य स्वेच्छातूलिकयात्मनि ।
स्वयमेव समालोक्य प्रीणाति भगवान् शिवः ॥ इति ।

विश्वरूपकम् । अत एव शिवादिक्षित्यन्तरूपेण परिणमत इत्यर्थः, यथा क्षीरं दध्याकारेण परिणमते तथा चिच्छक्तिरेव सर्वाकारेण परिणमते । तदुक्तं [3]प्रत्यभिज्ञायाम्-"चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" इति ।

तेन किमायातं[4] परमशिवस्येत्यत आह—चैतन्यमिति । चैतन्यं चिद्विमर्शशक्तिः, आत्मनः प्रकाशात्मनः, परशिवस्य रूपं निसर्गानन्दसुन्दरं तत्सामरस्येन सहजानन्दोल्लासादखिलस्य स्पृहणीया विमर्शशक्तिः । प्रकाशात्मपरशिवेन सामरस्याद्विश्वं सृजति न तु केवला, यथा न केवलेन तुषेणाङ्कुरो जायते, नापि तण्डुलेन, किन्तूभाभ्यामयुतसिद्ध-सम्बन्धशालिभ्याम् । तदुक्तं स्वच्छन्दसङ्ग्रहे—

शिवाऽभिन्ना परा शक्तिः सर्वकर्मशरीरिणी । इति ॥ ५० ॥

(से०) (बीजेत्यादि) । एतानि चत्वारि लिङ्गानि बीजत्रितयेन कूटत्रयेण युक्तस्य सकलस्य त्रयोदशाक्षरस्य तुर्यस्य मनोर्वाच्यरूपाणि वाच्यवाचकयोरभेदात्तदभिन्नानीति प्राञ्चः । वस्तुतः सकलशब्देन पञ्चदशाक्षर्येव वक्तुं युक्ता । पूर्वतन्त्रे प्रत्येकबीजसाधनान्युक्त्वा सम्पूर्णमन्त्रसाधनकथनपरे ग्रन्थेऽस्या एव ग्रहणाच्च, तुर्यविद्याया अनुद्धारेणाप्रकृतत्वाच्च, बीजत्रितययुक्तस्येति विशेषणस्वारस्याच्च । तेन प्रत्येकसाधनानां प्रातिस्विकं तिस्रो वासनाः, पञ्चदशीसाधकस्य तु त्रितयसमष्टित्वेन चतुर्थी वासनेति ध्येयम् । कुलं सजातीयसमूहः । "सजातीयैः कुलं यूथम्" इत्यमरः । साजात्यं चैकज्ञानविषयत्वेन । तेन मातृमानमेयानीत्यर्थः । कौलं तत्समष्टिः । तन्मयानि तदभिन्नानि । एवं जाग्रदाद्यवस्थारूपाणि । अवस्थालक्षणानि तु शिवसूत्रादिषु द्रष्टव्यानि ॥४८॥

एवं सम्पूर्णचक्रवासनामुक्त्वा तदधिष्ठिताया देव्या वासनामाह—(अतीतमित्यादि) । अतीतं तं बिन्दुमतिक्रम्य स्थितम् । परं तेजस्तेजसां प्रकाशकानामपि सूर्यादीनां मनोन्तानां प्रकाशकम्, "ज्योतिषां ज्योतिः" इति श्रुतेः ।

---

**१. कंसान्तर्गतो ग्रन्थः–ख० नास्ति । २. प्रमाणव–ख० । ३. ईश्वरसंहितायाम्–क० । ४. तं देवस्य–ख० ।**

स्वसंवित्स्वेतराविषयकं ज्ञानम्। उदयात्मकमुदयैकस्वरूपं षड्भावविकाररहितम्। से० स्वेच्छयैवेक्षणवृत्तिमात्रेणैव सामग्र्यन्तरमनपेक्ष्यैवेति यावत्। विश्वमयोल्लेखो जगदात्मकं चित्रं तेन खचितम्। तदुक्तमभियुक्तैः—

निरुपादानसम्भारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने॥ इति।

विश्वरूपकं सर्वात्मकं चैतन्यमात्मनो रूपं "चैतन्यमात्मा" इति शिवसूत्रे प्रसिद्धं रूपं निसर्गानन्दः स्वाभाविकानन्दो न तु विषयसम्पर्कोदितः, तेन सुन्दरं रमणीयम्॥४९-५०॥

**मेयमातृप्रमामानप्रसरैः संकुचत्प्रभम्।**
**शृङ्गाटरूपमापन्नमिच्छाज्ञानक्रियात्मकम्॥ ५१॥**

(दी०)तदेवाह—मेयेति। मेयं प्रमेयम्। प्रमाविषयः सम्यगनुभवः प्रमा। तद्वान् प्रमाता। माने प्रमाणं प्रमाकरणं प्रमाणम्। तदुक्तं तन्त्रान्तरे—

मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते॥ इति।

निर्विकल्पकरूपायाः स्वसंविदो मातृमेयप्रमाप्रमाणरूपेण विकल्पात्मना प्रसर एव सङ्कोचः। शिवस्य प्रकाशात्मनो [1]दीपस्य शक्तिर्विमर्शाख्यैव प्रभा, सा निर्विकल्पात्मना विश्वाकारा मेय-मातृ-प्रमा-प्रमाणभेदैः सङ्कुचद्रूपा तदा शिवोऽपि सङ्कुचद्रूपः। एतदुभयमिच्छाज्ञानक्रियात्मकम्। इच्छादिवामादिशक्त्यंश[2]भेदेन शृङ्गाटरूपमापन्नं त्रिकोणरूपेण परिणतम्॥ ५१॥

(से०)(मेयेत्यादि) मेयादिचतुष्टयात्मना परिणतत्वेन व्ययितत्वादीषत्संकुचिततेजस्कम्। तथा च श्रुतिः—"पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति। शृङ्गाटं त्रिकोणरेखात्रयं तद्देवतासमूहश्च। एतेनैव लब्धत्वादिच्छाज्ञानक्रियेत्यनेन तत्समष्टिरूपो बिन्दुरुच्यते। तेन यानि वामादिचतुष्टयानि पूर्वमुक्तानि तानि सर्वाण्यस्या एव रूपाणीत्युक्तं भवति॥५१॥

---

१. जीवस्य—ख०। २. भेदभिन्न—ख०।

विश्वाकारप्रथाधारनिजरूपशिवाश्रयम् ।
कामेश्वराङ्कपर्यङ्कनिविष्टमतिसुन्दरम् ॥ ५२ ॥

(दी०) पूर्वं "बीजत्रितययुक्तस्य सकलस्य मनोः पुनः" (यो० हृ० सं० १ श्लो० ४८ ) इत्यत्र कामकलादिकाया विद्यायाः श्रीचक्रहेतुभूतत्रिकोणमयपीठादिचतुर्मयतामुक्त्वा इदानीं देवताया अपि तन्मयताभावनामुक्तवानिति भावः। तदेव विवृणोति--"विश्वाकारप्रथाधार" ( यो० हृ० सं० १ श्लो० ५२ ) इत्यादि, "तदीयशक्तिनिकरस्फुरदूर्मिसमावृतम्" ( यो० हृ० सं० श्लो० ५५ ) इत्यन्तेन।

विश्वाकारप्रथा षट्त्रिंशत्तत्त्वात्मना परिणता विमर्शशक्तिः, तस्या आधारः, निजरूपं तात्त्विकं रूपं शिवः प्रकाशात्मकः स एवाश्रयः आधारो यस्य तद्विश्वाकारप्रथाधारनिजरूपशिवाश्रयं परं तेजः कामेश्वराङ्कपर्यङ्कनिविष्टं कामेश्वरः प्रकाशात्मकः शिवस्तस्यस्याङ्कपर्यङ्कनिविष्टं विमर्शशक्तिरूपम्। सुन्दरम् अत्यन्तसुभगं सर्वैः स्वस्वात्मतया स्पृहणीयत्वात् ॥५२॥

(से०) (विश्वेत्यादि)। विश्वात्मना प्रथा परिणामस्तस्याधारः परिणाम्युपादानं निजं स्वीयमेव परिणामितावच्छेदकं रूपं तदात्मको यः शिवः स एवाश्रयो यस्य तत्। शिवविशिष्टशक्तेरेव जगत्कारणत्वाच्छिवस्य कारणतावच्छेदकत्वमिति भावः। स शिव एव कामकलान्तर्गतः कामाख्यो बिन्दुरिति द्योतनद्वारा शक्तेस्तदाश्रितत्वस्वरूपनिष्कर्षभानाय तदेव पुनः पदान्तरेणाह—कामेति। अङ्कस्य पर्यङ्कत्वोक्तिरप्यानन्दशयनाधारत्वध्वननद्वारा कामाङ्कयन्त्रणविशेषं ध्वनयति। अत एवातिसुन्दरमित्युक्तमिति रहस्यम् ॥५२॥

इच्छाशक्तिमयं पाशमङ्कुशं ज्ञानरूपिणम्।
क्रियाशक्तिमये बाणधनुषी दधदुज्ज्वलम् ॥ ५३ ॥

(दी०) इच्छाशक्तिरेव पाशः, बन्धहेतुत्वात्। ज्ञानशक्तिरेव अङ्कुशम्, मनोमयगजस्य नियामकत्वात्। क्रियाशक्तिमये बाणधनुषी।

शब्दस्पर्शादयो बाणा मनस्तस्याभवद्धनुः।

इति वचनात्। शब्दादिबाणानां मनसा धनुषा सह संयोजनं क्रिया- दी॰ शक्तेरेव व्यापारः। अत्र इच्छाशक्तिमयं पाशम्, ज्ञानशक्तिमयमङ्कुशम्, क्रियाशक्तिमये बाणधनुषी। एवमायुधचतुष्टयं स्वेच्छागृहीतकामकला-मयावयवविग्रहबाहुचतुष्टयेन दधदुज्ज्वलं चिदात्मकत्वात् ॥५३॥

(से०) (इच्छेत्यादि)। इच्छाया एवाशातृष्णारागादिपर्यायत्वेन बन्धसाधनत्वात् पाशरूपता। तदुक्तमभियुक्तैः—

आशा नाम नृणां काचिदाश्चर्यमयशृङ्खला।
यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ॥ इति।

ज्ञानं विषयाच्चित्तस्य निवारकत्वादङ्कुशस्तन्निवारणञ्च विषयवैराग्यं विना न संभवति। तच्च द्वेष एव। "विरक्तिर्विषयद्वेष" इति वचनात्। तेन यत्पूर्वपटलान्ते —

पाशाङ्कुशौ तदीयौ तु रागद्वेषात्मकौ स्मृतौ।
शब्दस्पर्शादयो बाणा मनस्तस्याभवद्धनुः ॥

इत्युक्तं तदविरुद्धम्, बाणधनुषोः संयोजनक्रियायाः शब्दादिविषयमनोयोगरूपक्रियायाश्चैकरूपत्वान्न पूर्वोत्तरोक्तवासनयोर्विरोधः ॥५३॥

**आश्रयाश्रयिभेदेन अष्टधा भिन्नहेतिमत्।**
**अष्टारचक्रसंरूढं नवचक्रासनस्थितम् ॥ ५४ ॥**

(दी०) आश्रयः कामेश्वरः, आश्रयि कामेश्वर्याख्यं परं तेजः। एवमाश्रयाश्रयिभेदेन अष्टधा भिन्नहेतिमद् हेतिरायुधम् आश्रयस्य चत्वार्यायुधानि आश्रयिणश्चत्वारि चेति अष्टधा भिन्नहेतिमत्। [1]कोऽर्थः? परमशिव एव प्रकाशविमर्शात्मना[2] निजावंशौ विभज्य कामेश्वरः कामेश्वरी[3] भूत्वा पाशाङ्कुशधनुःशरान् पुंस्त्रीभेदेनाष्टौ धृत्वा आश्रयाश्रयिभावेन स्वरमयमध्यत्रिकोणमध्यगतसदाशिवबैन्दवचक्रे तुरीयबिन्दुमध्ये परलिङ्गे निवसतीत्यर्थः।

इदमेव मिथुनं नवधा विभज्यात्मानं नवचक्रेषु स्थितमित्याह— अष्टारेति। पूर्वोक्तक्रमेण तदेव वामादी[4]च्छाशक्तिमयं त्रिकोणमेव

---

१. कोऽर्थः–ख० नास्ति। २. त्मकौ–ख०। ३. इति भूत्वा–ख०। ४. दीच्छादिमयं–ख०।

दी० त्रिधा विभिन्नं द्विशक्त्येकवह्निभेदेनाष्टारचक्रमभूत्। पुनस्त[1]देव त्रिपदं वह्निशक्तिरूपं च भूत्वा नवचक्रमभूत्। एवंरूपं श्रीचक्रं स्वयमेवाष्टारचक्रम्।

[2]चितिश्चैत्यं च चैतन्यं चेतनाद्वयकर्म च।
जीवः कला च देवेशि सूक्ष्मं पुर्यष्टकं मतम्॥

इति स्वच्छन्दसंग्रहोक्तरीत्या निजसूक्ष्मं पुर्यष्टकं विभज्याष्टारचक्रं वशिन्यादिरूपेण संरूढमित्यर्थः। नवचक्रासनस्थितम्। एवं रूप-[3]बिन्दोः सकाशाद् मिथुनमेव निजाधारनवकं नवचक्रत्वेन विभज्य निजनादशक्तिनवकं नवचक्रेश्वरीरूपेण संपाद्य स्थितम्।

इच्छादिशक्तित्रितयं पशोः सत्त्वादिसंज्ञकम्।
महत्त्र्यस्रं चिन्तयामि गुरुवक्त्रादनुत्तरात्॥
[4]अष्टारव्यपदेशोऽयं चिन्निर्वाणैषणादिकम्।
सूक्ष्मं पुर्यष्टकं देव्या मतिरेषा हि गौरवी॥
अन्तर्दशारवसुधाज्ञानकर्मे[5]न्द्रियाणि च।
महात्रिपुरसुन्दर्या इति संचिन्तयाम्यहम्॥
बाह्यो दशारभागोऽयं बुद्धिकर्माक्षगोचरः॥
चतुर्दशारवसुधाकरणानि चतुर्दश।
वसुच्छदनपद्माङ्कदेशो यश्चक्रगो विभुः॥
अव्यक्ताद्याः प्रकृतयो भूतान्ता निश्चिनोम्यहम्।
षोडशच्छदपद्माङ्कदेशो भूताक्षमानसम्।
विकारात्मकमापन्नं देव्याः सम्भावयाम्यहम्॥

इति सुभगोदयवासनोक्तरीत्या बैन्दवादिचतुरस्रान्तेषु नवचक्रेषु आसनभूतेष्विन्द्रियादिरूपेण स्थितमित्यर्थः॥५४॥

(से०) (आश्रयेत्यादि)। आश्रयः कामेश्वरस्तस्य न पार्थक्येन पूजा तदायुधानां तु देव्यायुधैः सह सम्मेलनेन पूजेति ध्वनितम्, कामेश्वरायुधवैशिष्ट्येनापि त्रिपुरसुन्दर्या एव निर्देशात्। तस्या एव शृङ्गाररूपतोक्तेस्तद्रीत्याष्टारचक्रे संरूढत्वं बिन्दुचक्रातीतत्वेन तु रूपेण नवचक्रीरूप आसने स्थितत्वम्॥५४॥

---

१. तदेव वह्निरूपं–ख०। २. चितिश्चित्तं च–ख०। ३. बिन्दोः सकाशात्–ख० नास्ति। ४. अष्टारांशप्रदेशोऽयं–ख०। ५. न्द्रियावलिः–ख०।

एवंरूपं परं तेजः श्रीचक्रवपुषा स्थितम् ।
तदीयशक्तिनिकरस्फुरदूर्मिसमावृतम् ॥ ५५ ॥

(दी०) एवंरूपमिति । उक्तप्रकारेण विभक्तनिजेच्छादिषोडशविकारान्तावयवमयत्रिकोणादिचतुरस्रान्तश्रीचक्रवपुषा स्थितमित्यर्थः । इदं तस्मिन्मिथुने श्रीचक्रवपुषा परिणते सति तदीयावयवशक्तय एव आवरणदेवतारूपेण स्थिता इत्याह्—तदीयेति । तयोः कामेश्वरकामेश्वर्योरेव [1]अवयवाः, तेषां शक्तयः, तासां निकराः समूहाः, ते[2] स्फुरन्त एवोर्मयस्तरङ्गास्तैः समावृतम् । कोऽर्थः ? प्रकाशविमर्शमयकामेश्वरकामेश्वरीस्वेच्छागृहीतविग्रहावयवेषु [3](चक्रावयवतामुपगतेषु तद)वयवशक्तयोऽपि कामेश्वरी-वज्रेश्वरी-भगमालिन्याद्यावरण[4]देवतारूपेण परिवार्य तिष्ठन्तीत्यर्थः। ऊर्मिशब्देनेदं द्योत्यते प्रकाशात्मकः परमेश्वरः समुद्रः, विमर्शरूपिणी कामेश्वरी सलिलम्, तदीयावयवाः शक्ति[5]निकरा ऊर्मयः। यथा कल्लोलाः [6]समुद्रे जायन्ते तत्रैव लीयन्ते, [7]एवं षट्त्रिंशत्तत्त्वमयं सशक्तिकं चक्रं तत्रैवोदेत्यस्तमेति चेति तात्पर्यम्। तत्राभियुक्तवचनम्—

मूलोद्भवं शक्तिचक्रं यतस्तन्मयतां गतम् ।
तस्मिन्नेवाव्यये तत्त्वे विलीनं परिभावयेत् ॥
मूले स्वात्मनि चिद्रूपे यद्यद्युक्तत्तदेव हि ॥ इति ।

(मे०) एवंप्रकारेण सम्पूर्णस्य चक्रस्य देव्याश्चोक्तां वासनामुपसंहरन्नावरणदेवतानां वासनामुपदिशति—(एवमित्यादि)। एवमुक्तप्रकारेण परं तेज एव चक्रशरीरकमभूत्। तदीयानां चक्रसम्बन्धिनीनां शक्तीनामणिमादीनां निकरात्मना स्फुरन्तीभिरूर्मिभिरत एव कामेश्वरीसरस्वत्यभिन्नाभिः समावृतम्, भावयेदिति शेषः । अत्र वासनासुभगोदयादिग्रन्थेषु तन्त्रराजादितन्त्रान्तरेषूपनिषत्सु च बहुविधा वासना उपलभ्यन्ते, ताः सर्वा यद्यपि सर्ववेदान्तप्रत्ययाधिकरणन्यायेन ब्रह्मविद्याया भेदाभावादुपसंहर्तुं प्राचां टीकाकाराणां [व्याख्यानं तथापि] ग्रन्थविस्तरैकफलकमित्युपेक्षितमस्माभिः ॥५५॥

---

१. तदीयावयवाः—ख० । २. ते च—ख० । ३. धनुश्चिह्नान्तर्गतो नास्ति—ख० । ४. वरणं परिवार्य—ख० । ५. निकरा एव—क० । ६. समुद्रे एव—क० । ७. एवं तत्त्वमयं शक्तिचक्रम्—ख० ।

[1]चिदात्मभित्तौ विश्वस्य प्रकाशामर्शने यदा ।
करोति स्वेच्छया पूर्णविचिकीर्षासमन्विता ॥ ५६ ॥

(दी०) सर्वचक्रवासनामुक्त्वा तेषु सवासनं मुद्राभेदमाह–चिदात्मभित्तावित्यादिना, एवं चक्रमयमित्यन्तेन। चिद्विमर्शशक्तिः[2] आत्मभित्तौ आत्मैव भित्तिः आत्मभित्तिः, तस्यां स्वस्वरूपमेव भित्तिरित्यर्थः। विश्वस्य शिवादेर्भूम्यन्तस्य प्रकाशामर्शने अस्फुटस्य स्फुटीकारः प्रकाशः, इदन्तया हृदयङ्गमीभावो विमर्श एवामर्शनम्। एवंविधे प्रकाशामर्शने यदा सृष्टिकाले पूर्णविचिकीर्षासमन्विता विशेषेण कर्तुमिच्छा विचिकीर्षा विकारः क्षीरादीनामप्यस्ति [3]आतञ्चनादीनाम्। अत एवाह–पूर्णविचिकीर्षासमन्वितेति। [4]तत्र तु क्षीरादेर्दध्यादिमात्रमेव विकारः, अत्र तु शिवादिक्षित्यन्तं तत्त्वाकारेण विकारः। अत एव पूर्णविचिकीर्षासमन्विता ॥५६॥

(से०)अथेदानीं प्रत्यावरणं भेदेन पूजनीयानां दशमुद्राणां वासना उपदिदिक्षुर्मुद्रापदं निर्वक्ति—(चिदित्यादि)। यदा तावच्चिच्छक्तिः स्वात्माभिन्नायां भित्तावधिकरणे स्वेच्छया पूर्वोक्तेक्षणानन्तरं विकारान्पूर्णानिच्छन्ती विश्वमयोल्लेखस्य प्रकाशामर्शने करोति। तथा च शक्तिसूत्रम्—"स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति" इति। अत्र स्वेच्छयेतिपदमुपादानादिनैरपेक्ष्यपरत्वेन तद्भाष्ये व्याख्यातम्। तच्चेक्षणमात्रेणेत्यत्रैव पर्यवसितम्। तदा सैव क्रियाशक्तिर्भूत्वा विश्वस्य मोदनद्रावणरूपधर्मद्वयविशिष्टा सति मुद्राख्या भवतीत्युत्तरार्धस्थितपदद्वयापकर्षणान्वयः। अयं भावः—विश्वस्य हि षड्भावविकारा यास्कादिभिः परिगणिताः—अस्ति जायते वर्धते विपरिणमतेऽपक्षीयते नश्यतीति। तेषु प्रथमः सत्तारूपो भावविकारो विश्वस्य सार्वकालिकः, प्रलयकालेऽपि बीजभावेन विश्वस्य सत्त्वात्। ततश्चान्ये पञ्चैव विकाराश्चिकीर्षिताः। तेषु द्वितीयो विकारा(सा)त्मका मि(वि)कारः प्रकाश इत्युच्यते, अस्फुटस्फुटीकार इति तल्लक्षणात्। तृतीयो विकार एवामर्शनम्, इदंतया हृदयङ्गमीभाव इति वृद्धोक्ततल्लक्षणस्यावयवशः साकल्येनेदमित्थमित्याकारकज्ञानविषयतावच्छेदकधर्मे पर्यवसितायां कुलाभिवृद्धावेव सामञ्जस्यात्। तथा च त्रिपुर-

1. चिदात्मरूपे–क०। २. शक्तिः आत्मैव–क०। ३. अस्मदादीनाम्–क०। ४. तत्र तु–ख० नास्ति।

सुन्दर्याः स्वान्तःस्थितसृष्टिसत्तापर्यालोचनोत्तरं विश्वस्य द्वितीयादिविकारविषयिणीच्छोत्पद्यते । सेयं विचिकीर्षा । न च विकारेच्छयोर्भिन्नकर्तृकत्वेन सन्प्रत्ययानापत्तिः, सन्प्रकृतेर्व्युपसृष्टकरोतेरन्तर्भावितण्यर्थत्वात् । विश्वात्मना स्वस्या एव परिणाम इति सिद्धान्तानुसारेण समानकर्तृकत्वस्याप्युपपत्तेर्वा । ततो विश्वस्योत्पत्त्यभिवृद्धी क्रमेण करोति । ते एते एव प्रकाशामर्शने अनुमोदते ततो विश्वं द्रावयति च । अनुमोदनं नाम स्वेतरक्रियमाणक्रियानुकूल्यम्, द्रावणं नाम घनस्य संकुचितस्य प्रशिथिलावयवताप्रसारः । सोऽयमेकरसीभूतस्य विश्वस्य षट्त्रिंशद्वाकरणात्मकः । "तदैकरस्यं द्रावणम्" इति वृद्धोक्तलक्षणस्याप्यत्रैव पर्यवसाययितुं युक्तत्वात् । इत्थं चेदृशमोदनद्रावणात्मकधर्मद्वयविशिष्टोक्तरूपक्रियाशक्त्यभिन्ना त्रिपुरसुन्दर्येव मुद्रापदवाच्येति ॥५६॥

**क्रियाशक्तिस्तु विश्वस्य मोदनाद् द्रावणात्तथा ।**
**मुद्राख्या सा यदा संविदम्बिका त्रिकलामयी ॥ ५७ ॥**
**त्रिखण्डारूपमापन्ना सदा सन्निधिकारिणी ।**
**सर्वस्य चक्रराजस्य व्यापिका परिकीर्तिता ॥ ५८ ॥**

(दी०) क्रियाशक्तिस्तु क्रियाशक्तिरेव भूत्वा । तुरवधारणे । एवंविधस्य विश्वस्य मोदनाद् द्रावणाच्च । अत्र त्वनुकूलक्रियैव मोदनम्, द्रावणं नाम तदेकरसीभावः । [1]संविद् मुद्राख्यां लभते । अयमर्थः—यदा विमर्शशक्तिः विश्वरूपेण विहर्तुमिच्छति तदा क्रियाशक्तिर्भूत्वा स्वविकारभूतस्य विश्वस्य परचिदानन्दलक्षणेन मोदनेन तदैकरस्यलक्षणेन द्रावणेन च मुद्राख्यामापन्नेत्यर्थः ।

तत्रादौ व्यापिकां त्रिखण्डामुद्रामाह—सा यदेति । सा विमर्शरूपिणी संवित् त्रिकलामयी वामाज्येष्ठारौद्रीरूप[2]कलात्रय[3]समष्टिरम्बिका, अम्बिकाग्रहणं [4]शान्ताया अप्युपलक्षणम् । इच्छाज्ञानक्रिया[5]शक्तिरूपकलामयसमष्टिभूता शान्तात्मिका भूत्वेत्यर्थः । त्रिखण्डारूपमापन्ना दक्षिणाङ्गुलयो वामाद्याः प्रकाशांशाः, वामाङ्गुलय इच्छाद्या विमर्शांशाः, तदुभययोगरूपबन्धनात्मकखण्डत्रयवती त्रिखण्डा मुद्रा

१. संवित्–क० नास्ति । २. कलामय–क० । ३. समष्टिरूपा अम्बिका–क० ।
४. शान्त्यतीतायाः–ख० । ५. क्रियारूपकलासमष्टिभूतत्वाच्छान्ता–ख० ।

दी० जातेत्यर्थः। सदा सन्निधिकारिणी। अत [1]एवेयं संविद्देवतायास्त्रिपुरायाः सन्निधिकारिणी सान्निध्यकारिणी। सर्वस्य चक्रराजस्य, सर्वेषां चक्राणां [2]पूजायन्त्राणां श्रेष्ठत्वाच्चक्रराजस्य व्यापिका। नवचक्रस्थितनवमुद्राणां समष्टिभूतत्वात् ॥५७-५८॥

(से०) अथ मुद्रासु सर्वसंक्षोभिण्या एव प्रथमावरणदर्शनीयत्वेन प्राथम्येऽपि सर्वव्यापकत्वाद्यभिप्रायेण त्रिखण्डामुद्राया एव तृतीयपटले पूर्वं वर्णितत्वेन पूर्वक्लृप्तक्रमानुसारेणैव वासना उपदिदिक्षुस्त्रिखण्डाया वासनां प्रथममाह— (मुद्रेत्यादि)। तादृशक्रियाशक्त्यभिन्ना संविदम्बिका चिच्छक्तिरूपा माता यदा त्रिकलामयी कलात्रयप्रचुरा जाता, ईक्षणविशिष्टा जातेति यावत्। तदा त्रिखण्डारूपमापन्ना। मुद्रात्वसामान्यधर्म एव सामानाधिकरण्येनेक्षणस्यापि मेलनेन तादृशधर्मविशिष्टा देवी त्रिखण्डेत्युच्यत इत्यर्थः। सन्निधिर्देवतातेजःसान्निध्यम्, सर्वावरणशक्तिमरीचिकाया महादेव्या आह्वाने विनियुक्तत्वादेव सर्वचक्रव्यापिका भवति। अत्रेक्षणस्य वामादित्रयसमष्टिरूपत्वात्ताः प्रकाशांशा दक्षिणाङ्गुलयः। इच्छादित्रयसमष्टिरूपत्वात्ता विमर्शांशा वामाङ्गुलयः। तासामेकत्र संयोजनादीक्षणस्य तादृशत्रितययुगलैक्यरूपता चेति वासना ध्वनितेत्याहुः। वस्तुतस्तु तन्त्रभेदेनाङ्गुलिविन्यासवैलक्षण्यस्य बहुलमुपलम्भात् सर्वानुगमकदृष्टोपपत्तेरसंभवात् क्वचित्संभवन्त्या अपि तस्या मूलकृताऽनुल्लिखितत्वेनाप्रयोजकत्वादङ्गुलिविन्यासमारादुपकारकं कुर्वन्मूलोक्तां वासनां संस्मरेदित्येव तु तत्त्वम्। इतरन्मन्दजनविश्वासायैवेति ध्येयम् ॥५७-५८॥

योनिप्राचुर्यतः[3] सैषा सर्वसंक्षोभिका पुनः।
वामाशक्तिप्रधानेयं द्वारचक्रे स्थिता भवेत् ॥ ५९ ॥

(दी०) सर्वसंक्षोभिणीमुद्रामाह–योनीति। सैषा त्रिखण्डा खण्डत्रयमुन्मुच्य योनिप्राचुर्यतो मध्यमाद्वयसंयोगादेका,[4] अनामिकाद्वयसंयोगादन्या,[5] कनिष्ठिकाद्वयसंयोगादपरा, एवं योनि[6]प्राचुर्यात् [7]सा

१. एव संवि–ख०। २. पूजायन्त्राणाम्–क० नास्ति। ३. तश्चैषा–क०। ४. देका योनिः, अनामाद्वय–ख०। ५. दन्या योनिः, कनिष्ठाद्वय–ख०। ६. योनित्रयप्रा–क०। परं स नोचितः, चतुःशत्युक्तमुद्रोद्धारविरोधात्, एकैकस्मिन् हस्तेऽङ्गुष्ठेन सह मध्यमाऽनामाकनिष्ठिकाप्रयोजनेन तासां षट्त्वाच्च। ७. सा उत्तरोत्तरकनिष्ठाङ्गुष्ठयोगरूपिणी–क० अधिकः पाठः।

**सर्व[1]संक्षोभिणी परानन्दप्रवणत्वकारिणी, वामाशक्तिप्रधानेयं[2]सर्वसंक्षोभिणी मुद्रा [3]वामाशक्तिप्रधानत्वात् सृष्टिः। सृष्टिरेव क्षोभः। द्वारचक्रे चतुरस्रत्रयरूपे चतुर्द्वारवति त्रैलोक्यमोहने चक्रे स्थिता ॥५९॥**

(से०) सर्वसंक्षोभिणीमुद्रावासनामाह—(योनीत्यादि)। सा क्रियाशक्त्यभिन्नैषाम्बिकाशक्तिरेव यदा योनिप्राचुर्यतः प्रचुरपदार्थनिष्ठतत्तद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकधर्मबाहुल्येनावलोक्यते तदा सर्वसंक्षोभिका भवति। सर्वजनिकेति यावत्। अत एव वामाशक्तिप्रधाना वावलोक्यते तदा सर्वसंक्षोभिका भवति, वामायाः सर्जनाभिमानित्वात्। एकैकस्मिन्नङ्गुष्ठे कनिष्ठिकामध्यमानामाग्रयोजनेनैकैकस्मिन् हस्ते योनित्रयमिति षड्भिर्योनिभिः कारणताप्राचुर्यं स्मर्तव्यमिति भावः। मध्यमयोरनामयोः कनिष्ठयोश्च योगाद्योनित्रयमेवेति प्राचामुक्तिस्तु पूर्वचतुःशक्त्युक्तमुद्रोद्धारविरोधादनादरणीया ॥५९॥

**क्षुब्धविश्वस्थितिकरी ज्येष्ठाप्राचुर्यमाश्रिता।**
**स्थूलनादकलारूपा सर्वानुग्रहकारिणी ॥ ६० ॥**
**सर्वाशापूरणाख्ये तु सैषा स्फुरितविग्रहा।**
**ज्येष्ठावामासमत्वेन सृष्टेः प्राधान्यमाश्रिता ॥ ६१ ॥**
**आकर्षिणी तु मुद्रेयं सर्वसंक्षोभिणी स्मृता।**
**व्योमद्वयान्तरालस्थबिन्दुरूपा महेश्वरि ॥ ६२ ॥**
**शिवशक्त्यात्मसंश्लेषाद्दिव्यावेशकरी स्मृता।**
**चतुर्दशारचक्रस्था संविदानन्दविग्रहा ॥ ६३ ॥**

(दी०) द्राविणीं[4]मुद्रामाह—क्षुब्धेति। क्षुब्धस्य विश्वस्य स्थितिकरी स्वसंविन्मात्रस्थिति[5]करी, अतो ज्येष्ठाप्राचुर्यमाश्रिता ज्येष्ठाशक्तेः स्थितिहेतुत्वात्। स्थूलनादकलारूपा स्थूलनादः श्रुतिगोचरत्वात्, नादाज्जाताः कला नादकलाः षोडशस्वराः। अत्राभियुक्तवचनम्—'कलाः[6]

---

१. सर्वसंक्षोभिणी–क० नास्ति, वस्तुतः 'सर्वसंक्षोभिका' इत्युचितम्।
२. वामाशक्तिप्रधानत्वात् सर्व–क०। ३. वामाशक्त्यधिष्ठितत्वात्। सृष्टिरेव–क०।
४. मुद्रा–ख० नास्ति। ५. कारिणी–ख०। ६. नादाः कला नादभवन्तीत्यादि–क०।

दी० कलानादभवा वदन्त्यतः" इत्यादि, तद्रूपाः कामाकर्षि[1]ण्याद्यास्तद्रूपाः सर्वाशापूरकचक्र[2]पूरकत्वात् सर्वाशापरिपूरकाख्ये कामाकर्षणी[3]कला[4]-धारत्वात्। अत एव सर्वानुग्रहकारिणी। कामाकर्षणमेव सर्वानुग्रहः। सैषेति तच्छब्देन चतुःशतीशास्त्रोक्ता सर्वविद्राविणी मुद्रा परामृश्यते। स्फुरितविग्रहा संविद्रूपत्वात्। कोऽर्थः? ज्येष्ठाप्राचुर्याधारत्वात् स्थिति-रूपिणी। अत एव ऋजुरूपमध्यमातर्जन्योः कनिष्ठिकानामिकयोश्च संयोगरूपिणी कामाकर्षिण्यादिरूपत्वात् सर्वानुग्रहकारिणी तदाधार-त्वात् सर्वाशापरिपूरणाख्ये चक्रे संविद्रूपत्वात् स्फुरितविग्रहा चतुः-शतीशास्त्रे प्रतिपादिता सैषा सर्वविद्राविणी मुद्रा स्थितेत्यर्थः।

सर्वाकर्षणीमुद्रामाह—ज्येष्ठेति। ज्येष्ठावामासमत्वेन ज्येष्ठावामाशक्ति-द्वयसामरस्यरूपत्वात् सृष्टेः प्राधान्यमाश्रिता सृष्टिरूपा वामा, स्थिति-रूपा [5](ज्येष्ठा, उभयसाम्यात्सृष्टिस्थितिसाधारणीयं वामांशेन वक्रतर्जनी-मध्यमाद्वयरूपा) ज्येष्ठांशेन ऋजुयुक्तानामिकाकनिष्ठाद्वयरूपेत्यर्थः। अत एव वक्राङ्गुलिद्वयरूपत्वाद् आकर्षिणीयं मुद्रा [6]सर्वसंक्षोभणचक्रे सर्व-संक्षोभिणी सर्वस्य संक्षोभिणी संस्मृता। स्मृतिः पूर्वानुभवसंस्कारजन्यं ज्ञानम्। पूर्वं चतुःशतीशास्त्रेऽनुभूता मुद्रा इदानीं स्मृता, सवासना कथितेत्यर्थः।

सर्ववशंकरीमुद्रामाह—व्योमद्वयेति। आधाराद्याज्ञान्तषट्चक्रा-न्तरालानि पञ्च व्योमानि तेषां द्वयोर्द्वयोर्मध्ये एकैको बिन्दुरिति पञ्च बिन्दवः पञ्चभूतमयाः। तदुक्तमभियुक्तैः—

पञ्चबिन्दुमयं भेदं पञ्चप्रणव[7]पञ्जरम्। इति।

तद्रूपा व्योमद्वयान्तरालस्थबिन्दुरूपा, शिवशक्त्यात्मसंश्लेषात् शिवा-त्मानो दक्षकराङ्गुलयः, शक्त्यात्मानो वामकराङ्गुलयः, शिवशक्त्यात्मना परिवृत्त्येतरेतराङ्गुल्य[8]न्तरालप्रवेशितानां सर्वेषामन्योन्यगाढपरिपीडना-

१. ण्यादिनिवाससर्वाशा–क० । २. व्यापकत्वात्–ख० । ३. कर्षिणि–ख० । ४. धारभूतत्वात्–ख० । ५ धनुश्चिह्नान्तर्गतो ग्रन्थः–क० नास्ति । ६. सर्वसंक्षोभिणी सर्वसंक्षोभकारिणि चक्रे स्मृता–ख० । ७. पङ्कजम्–ख० । ८. न्तरालद्वयगतैकैकाङ्गुलिरूपान्योन्यगाढपातनादेवंभूता–ख० ।

देवंभूता दिव्यावेशकरी मुद्रा दिव्यस्य प्रकाशात्मकशिवस्या[1]वेशः साम- दी०
रस्यं तत्करी चतुर्दशारचक्रस्था चतुर्दशारचक्रे सर्वसौभाग्यदायकनाम-
धेये स्थिता सं[2]विच्छक्तिरानन्दविग्रहा परमशिवसामरस्यरूपिणी।
[3](कोऽर्थः? उभयकराङ्गुल्यन्तरालगतैकैकाङ्गुलिरूपपञ्चबिन्दुमय-
शिवशक्तिद्वयसामरस्यनिरूपणलक्षणबन्धनात्मिकेयं मुद्रा) संविदैक-
रस्यानन्दमयी चतुर्दशारचक्रे स्थितेत्यर्थः ॥६०–६३॥

(से०) सर्वविद्राविणीमुद्रावासनामाह—(क्षुब्धेत्यादि)। क्षुब्धस्योत्पन्नस्य विश्वस्य स्थितिकर्त्री। अत एव स्थित्यभिमानिज्येष्ठाप्राचुर्यमास्थितवर्ती। अङ्गुली-चतुष्टयस्य ऋजुत्वात्, त्रिकोणऋजुभूतायाः पूर्वरेखायाः स्थितिरूपत्वात्। शब्दस्य सूक्ष्मं रूपं नादः, स्थूलं रूपमक्षरम्, तेन स्थूलनादौ, अकाराद्याः स्वरास्ते कलासंख्याः षोडश। अकारादिषोडशाक्षररूपेति यावत्। सैषेति पदेन मुद्रा-शरीरघटकसामान्यधर्मवत्त्वमुच्यते। ईदृशविशेषसामान्यधर्मयोर्योगेन सर्वानुग्रह-कारिणीत्युच्यते। अनुग्रहो नाम विद्रावणम् ॥ ६० ॥

सर्वाकर्षिणीमुद्रावासनामाह—(ज्येष्ठेत्यादि)। संक्षोभद्रावणमुद्रापद-शक्यतावच्छेदककोटिप्रविष्टयोर्धर्मयोरुभयोरपि सर्वाकर्षणमुद्रापदशक्यतावच्छे-दककोटौ प्रवेशः, परन्तु न तयोः समप्राधान्यम्। नापि विशेषणविशेष्यभावे विनिगमनाविरहः, अपि तु ज्येष्ठाविशिष्टवामावत्त्वमेव निवेश्यम्। तेन सृष्टेर्विशेष्यत्वेन निवेश्यत्वाद्वामाचिह्नस्याङ्गुलिचतुष्टयवक्रत्वस्य सर्वोपरि प्रदर्शन-मुपपद्यते। सेयमाकर्षिणीति प्रसिद्धा मुद्रा सर्वसंक्षोभिणि सर्वसंक्षोभणाख्य-चक्रे स्मृता स्थिता ॥ ६१ ॥

सर्वावेशकरीमुद्रावासनामाह—(व्योमेत्यादि)। "यावान्वा अयमाका-शस्तावानेषोऽन्तर्हृदय आकाशः" इति श्रुतौ प्रसिद्धा बिन्दुरूपेण विद्यमाना परस्परगाढाश्लिष्टशिवशक्त्युभयात्मिका मुद्रात एवानन्दविग्रहा संविद्दिव्यावेश-करीत्युच्यते। प्राञ्चस्तु—पट्चक्रान्तरालस्थव्योमपङ्के द्वयोर्द्वयोर्मध्य एकैको बिन्दुरस्ति तद्रूपेत्यर्थ इत्याहुः ॥ ६२-६३ ॥

**बिन्द्वन्तरालविलसत्सूक्ष्म[4]रेखाशिखामयी।**
**ज्येष्ठाशक्तिप्रधाना तु सर्वोन्मादनकारिणी ॥ ६४ ॥**

---

१. स्यावेशकरी सामरस्यकरी चतु–ख०। २ चित् स्थिरा–ख०। ३. धनुश्चिह्ना-न्तर्गतस्य स्थाने 'शिवशक्तिसामरस्यबिन्दुरूपलक्षणबन्धनात्मिकेयं मुद्रा सेयं'–ख०। ४. सूक्ष्मरूपशि–ख०।

(दी०) उन्मादिनीमुद्रामाह—बिन्द्वन्तरालेति। [1]बिन्द्वन्तरालविलसद् आधारादिब्रह्मरन्ध्रान्तर्गत[2]योनिमध्यगतयोर्महाबिन्द्वोः स्वयम्भूपरा-[3]ख्ययोर्लिङ्गयोरन्तरालाद् विलस[4]त्सूक्ष्मरेखाशिखामयी [5]विलसन्ती सूक्ष्मरूपबिसतन्तुनिभा[6]कृतिः, रेखेव रेखावत् शिखा अम्बिकाशान्तयोः तन्मयी तदेकरस्यरूपा ज्येष्ठाशक्तिप्रधाना ज्येष्ठाशक्तिप्रचुरा सर्वोन्मादनकारिणी उन्मादश्चित्तविभ्रमः। सर्वान् उन्मत्त[7]वत्सर्वव्यापारपराङ्मुखान् शिवशक्तिसामरस्यानुसन्धानपरान् करोतीत्यर्थः ॥६४॥

(से०) सर्वोन्मादनमुद्रावासनामाह—(बिन्द्वित्यादि)। उक्तबिन्द्वोर्मध्ये विलसन्ती सूक्ष्मरूपा शिखा तस्य मध्ये वह्निशिखा "नीवारशूकवत्तन्वी" इति श्रुतौ प्रसिद्धा। तन्मयी ज्येष्ठाशक्तिप्रधाना। अत एवानामातर्जनीयुगाभ्यामृजुभ्यामुपलक्षिता देव्येव सर्वोन्मादनमुद्रा बहिर्दशारे स्थिता ॥ ६४ ॥

दशारचक्रमास्थाय संस्थिता वीरवन्दिते।
वामाशक्तिप्रधाना तु महाङ्कुशमयी पुनः ॥ ६५ ॥
[8]तद्वद्विश्वं वमन्ती सा द्वितीये तु दशारके।
संस्थिता मोदनपरा मुद्रारूपत्वमास्थिता ॥ ६६ ॥

(दी०) दशारचक्रमास्थाय दशारचक्रं बहिर्दशारचक्रं वीरवन्दिते इदन्तारिपोरहमि समराङ्गणे प्रलयप्रतिपादनपरा वीराः, तैर्वन्दिते आत्माहम्भावनया भाविते। तदुक्तं परापञ्चाशिकायाम्—

अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः।
पराक्रमपरो भुङ्क्ते स्वभावमशिवापहम् ॥ इति।

कोऽर्थः? अतः कुलाकुलबिन्दुद्वयान्तरालविलसदम्बिकाशान्त्याख्यावह्न्यमृतकुण्डलिनीरूप([9]शिखाद्वयसदृश)शक्तिशिवाख्यकरद्वयमध्यमाङ्गुष्ठद्वयसंयोगबिन्दुद्वयाकारवर्तुलद्वयान्तर्गतकनिष्ठिकाद्वयमयी ज्येष्ठाशक्तिप्रधानत्वात्। ऋज्वाकृत्यनामातर्जनीद्वयाग्रसंयोगरूपा शिवशक्तिसाम-

---

१. बिन्द्वन्तरालात्—ख०। २. योनिमहाबिन्द्वोः—ख०। ३. पराख्ययोरन्त—क०। ४. सूक्ष्मरूपशिखा—ख०। ५. विलसन्त्यौ सूक्ष्मरूपे—ख०। ६. निभाकृती शिखेव शिखावत् शिखा—ख०। ७. वत्सवव्या—ख०। ८. अधोविश्वं—क०। ९. धनुश्चिह्नान्तर्गतं—ख० नास्ति।

रस्यानुसन्धानलक्षणबन्धनरूपा सर्वोन्मादिन्याख्या मुद्रा बहिर्दशारचक्र- दी० मास्थाय संस्थितेत्यर्थः।

महाङ्कुशमुद्रामाह- वामेति। बिन्द्वन्तरालविलसत्सूक्ष्मरेखाशिखामयी ऋज्वाकृतितर्जन्यनामिकासंयोगरूपा [1]ज्येष्ठाशक्तिप्रधाना पूर्वं भवति। इदानीं वामाशक्तिप्रधाना।

"वामा विश्वस्य वमनादङ्कुशाकारतां गता"

इति पूर्वोक्तरीत्या वामाशक्तिप्रधानत्वाद् वक्राकारतर्जनीलक्षण-बन्धनरूपा [2]विश्वं वमन्ती सा सृष्टिरूपत्वात् तद्वत् परमशिववद् द्वितीये तु अन्तर्दशारके मोदन[3]परा परशिवसामरस्यलक्षणपरानु-सन्धानमयी, अत एव मुद्रारूपत्वमास्थिता। अयमर्थः—पूर्वोक्तमुद्रा-लक्षणविमर्श[4]मयचिच्छक्तिरेव [5]वामाशक्तिभूततर्जनीद्वयमयपरशिव-सामरस्यपरानन्दप्रवणरूपा महाङ्कुशमुद्राख्यान्तर्दशारे स्थिता ॥६५-६६

(से०) इयमेव वामाशक्तिप्रधाना चेदनामातर्जनीभिर्वक्राभिरुपलक्षिता महा-ङ्कुशेत्युच्यत इत्येवानयोर्भेद इत्यभिप्रेत्याह—(वामेत्यादि)। अत्र मोदनपरेत्यव-युत्यानुवादो मुद्रापदप्रवृत्तिनिमित्तस्य सामान्यधर्मस्य विशेषधर्मैः सह सामाना-धिकरण्येन वाच्यतावच्छेदककोटौ प्रवेश इत्यस्य स्मारणार्थः। सुगममन्यत्। अत्र बिन्द्वन्तरालेत्यर्धं क्वचित्पुस्तके न दृश्यते। प्राञ्चस्तु मूलाधारब्रह्मरन्ध्रस्थ-पद्मकर्णिकयोर्मध्यगतौ स्वयंभूलिङ्गपरलिङ्गरूपौ द्वौ बिन्दू। तदन्तर्विलसन्त्या-वम्बिकाशान्तारूपे अमृतकुण्डलिन्यावेव शिखे तन्मयीत्यर्थ इत्याहुः ॥६५-६६॥

**धर्माधर्मस्य संघट्टादुत्थिता वित्तिरूपिणी।**
**विकल्पोत्थक्रियालोप[6]रूपदोषविघातिनी ॥ ६७ ॥**
**विकल्परूपरोगाणां हारिणी खेचरी परा।**
**सर्वरोगहराख्ये तु चक्रे संविन्मयी स्थिता ॥ ६८ ॥**

---

१. वामाशक्तिप्रधाना न भवति। ऋज्वाकृतितर्जन्यनामिकासंयोगरूपा न भवति–क०। २. कपुस्तके 'अधो' इत्यधिकम्। ३. मोदनपरा शिव–ख०। ४. विमर्शलक्षणचि–क०। ५. वामाप्राधान्याद् व्यक्तीभूतेत्यर्थः। ते द्वयपर–ख०। ६. रोगदोष–क०।

(दी०)खेचरीमुद्रामाह–धर्माधर्मेति। धर्माधर्मस्य सङ्घट्टात्, धर्मः शक्तिः सृष्ट्यादिसकलधर्मपरत्वात्, अधर्मः शिवः, तत्तत्सकलधर्मरहितत्वात्, [1]तयोः सङ्घट्टः सामरस्यं तस्मादुत्थिता, वित्तिरूपिणी वित्तिः संवित्तिः, विकल्पोत्थक्रियालोपरोगदोषविघातिनी विकल्पः कोटिद्वयालम्बनम् एवं वा एवं वेति संशय[2]ज्ञानम्, विकल्पोत्थाः क्रिया नित्यनैमित्तिककाम्यरूपास्तल्लोपेन[3] प्रत्यवायः प्रायो जायते, तस्य विघातिनी, विकल्परूपरोगाणां हारिणी परिपूर्णभावस्य शिवस्य मयैवमेतत्कर्तव्यं न वेति विकल्परूपरोगा आधय एव व्याधयः। तदुक्तमभियुक्तैः—

"अपूर्णम्मन्यता व्याधिः कार्पण्यैकनिदानभूः।
क्लेशावहो[4] जुगुप्सा" इति।

तेषां हारिणी। खेचरी—

खे निरस्तसकलक्रियाक्रमे या चितिश्चरति शाश्वतोदया।
सा शिवत्वसमवाप्तिकारिणी खेचरी सकलखेदहारिणी॥

इति [5]मदुक्तरीत्या निर्विकल्पबोधभूमिसंचारिणी चितिः चिच्छक्तिस्तस्याः परमशिवसामरस्यरूपतदधिष्ठितत्वात् सर्वरोगहराख्ये चक्रे संविन्मयी स्थिता। कोऽर्थः? शिवशक्तिमयदक्षवामबाहुद्वयपरिवर्तनरूपतर्जनीद्वयावलम्बितव्यत्यस्तकरद्वयकनिष्ठानामिकाद्वन्द्वतदुपरिस्थितमध्यमाद्वयाग्रसंयुक्ताङ्गुष्ठद्वयाग्रसंयोजनलक्षणबन्धनरूपा शिवशक्तिद्वयसङ्घट्टादुत्थि[6]तत्वात् परा निर्विकल्पबोधभूमिसञ्चारिणी, अत एव विकल्पजनितनित्यनैमित्तिककाम्यकर्मलोपरूप[7]दोषविघातिनी, अत एव [8]च विकल्परूपरोगाणाम् अपूर्णम्मन्यतालक्षणानां हारिणी सर्वरोगहराख्ये चक्रे खेचरीमुद्रा स्थितेत्यर्थः॥६७-६८॥

(से०)खेचरीमुद्रावासनामाह—(धर्मेत्यादि)। धर्माधर्मौ पुण्यपापादृष्टजनकक्रिये तयोः समाहारो धर्माधर्मं तस्य सङ्घट्ट एकज्ञानीयैकधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारता। तादृशप्रकारिताकादयं धर्मो वाधर्मो वेति संशयादिति यावत्। उत्थिता तादृशसंशयोत्तरं जाता, वित्तिरूपिणी विशेषदर्शनात्मक-

---

१. तत्सङ्घट्टः–ख०। २. ज्ञानं विकल्पः विकल्पोत्थक्रियाः–ख०। ३. पेन पापं जायते–ख०। ४. वहोऽतिकष्टश्च–ख०। ५. तदुक्त–ख०। ६. दुत्थिता सदानिर्वि–ख०। ७. रूप–क० नास्ति। ८. च–क० नास्ति।

प्रमारूपा धर्मत्वव्याप्यविहितत्ववानयमित्याकारिका, अयं धर्म एवेत्याकारक- निश्चयरूपा वा। सा च गुरुदयालक्ष्यतन्त्राध्ययनजन्या। विकल्पोऽसद्विषयकं ज्ञानम्, "शब्दमात्रानुपाती वस्तुशून्यो विकल्पः" इति योगसूत्रात्। पूर्वोक्त- संशयेऽधर्मकोटिरित्यर्थः। अधर्मत्वविशिष्टोपास्तेः खपुष्पत्वात्। तदुत्थस्तज्जन्यो यः क्रियालोपो विकल्पप्रयुक्ताश्रद्धयानादरेणान्यथाकरणम्। तेन रूप्यन्ते जन्यन्ते ये दोषाः पापादृष्टान्यामुष्मिकदुःखप्रदानि तेषां विघातिनी विकल्प- जन्यरोगाणामैहिकदुःखप्रदानामाधिव्याधीनां च हारिणी तादृशसंशयेऽधर्म- कोट्यंशेन जन्यानि यानि पापानि ये च रोगास्तेषां सर्वेषां नाशं कुर्वती या विशेषदर्शनात्मिका प्रमा तदभिन्ना संविन्मयी निर्विषयज्ञानपराक्रियाशक्त्यभिन्ना त्रिपुरसुन्दर्येव खेचरीमुद्रा भूत्वा सर्वरोगहरे चक्रे स्थितेत्यर्थः। प्राञ्चस्तु धर्मः शिवनिष्ठत्वाच्छक्तिः। अधर्मो निर्धर्मकत्वाच्छिवः। तत्संघट्टः सामरस्यम्, विकल्पः संशयस्तदुत्थाः क्रिया नित्यनैमित्तिककाम्यरूपास्तासां लोपे यत्पापं तद्वि- घातिनीत्यर्थमाहुः। तेन बाहुद्वयपरिवर्तनरूपसंघट्टः शिवशक्तिसामरस्य- स्योक्तसंशयस्य वा स्मारकः संस्तदीयाङ्गलिसंयोगसचिव उक्तमर्थं साकल्येन यथा स्मारयति तथाऽभ्यस्य मुद्रां प्रदर्शयेदिति भावः ॥ ६७-६८ ॥

**शिवशक्तिसमाश्लेष[1]स्फुरद्व्योमान्तरे पुनः।**
**[2]प्रकाशयति विश्वं सा सूक्ष्मरूपस्थितं सदा ॥ ६९ ॥**
**बीजरूपा महामुद्रा सर्वसिद्धिमये स्थिता।**
**सम्पूर्णस्य प्रकाशस्य लाभभूमिरियं पुनः ॥ ७० ॥**
**योनिमुद्रा कलारूपा सर्वानन्दमये स्थिता।**
**क्रिया चैतन्यरूपत्वादेवं चक्रमयं स्थितम् ॥ ७१ ॥**

(दी०) बीजमुद्रामाह-शिवशक्तीति। शिवशक्त्योः समाश्लेषः सामरस्यं तन्मध्ये स्फुरद्व्योमान्तरे प्रकाशविमर्श[3]रूपसूक्ष्मतरगगनान्तराले सूक्ष्म- रूपस्थितं कारणतावन्मात्रतया स्थितं विश्वं सदा सर्वदा [4]प्रकाशयति। अत एव बीजरूपा महामुद्रा, तस्या [5]भाविचराचररूपविश्वोत्पत्तिहेतु-

---

१. समाश्लेषः-क०। २. प्रकाशयन्ती-क०। ३. रूप-ख० नास्ति। ४. प्रका- शात्मनि-ख०। ५. भावि-ख० नास्ति।

दी० त्वात् सर्वसिद्धिमये विश्वोत्पत्तिहेतुभूतबीजमुद्राधारत्वात् सर्वस्य शिवादेर्भूम्यन्तस्य सिद्धिः उत्पत्तिः। तदुक्तमीश्वरप्रत्यभिज्ञायाम्—"चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" इति। तन्मये चक्रे स्थिता। कोऽर्थः? शिवशक्तिसंज्ञितोभयकरव्यत्यस्तकनिष्ठिकाद्वयाग्रावलम्बनवक्रोभयानामिकोभयपार्श्वप्रसृतसंयुक्ताग्रमध्यमाद्वयोपरिस्थितवक्राकारतर्जन्यङ्गुष्ठयुगलाग्रसमाश्लेषान्तरालप्रतीयमानगगनान्तराले कारणतावन्मात्रतया स्थितं विश्वं प्रकाशयन्ती बीजमुद्रा सर्वसिद्धिमयाभिधे चक्रे स्थितेत्यर्थः।

योनिमुद्रामाह—सम्पूर्णस्येति। सम्पूर्णस्य [1]प्रकाशस्य प्रकाशात्मनः परमशिवस्य लाभभूमिः प्राप्तिस्थानम्। अत एवेयं योनिमुद्रा योनिरूपा मुद्रा योनिमुद्रा योनिस्त्रिकोणं वामादीच्छादिशक्तित्रितयसामरस्य[2]रूपान्तस्त्रिकोणान्तरालरूपिणी कलारूपा हार्द[3]कलात्मिका विमर्शशक्तिरूपा। अत एव सर्वानन्दमये शिवशक्तिसामरस्यसमुदितपरानन्दलक्षण[4]परमबिन्दुरूपसर्वानन्दमयनाम्नि चक्रे स्थिता। कोऽर्थः? वामेच्छारूपवक्रतर्जनीद्वयाग्रगृहीतव्यस्तानामिकाद्वयाग्रपरिगतज्येष्ठाज्ञानमयऋजुसंयुक्ता मध्यमाद्वयमध्यगतरौद्रीक्रियात्मकनिष्ठिकाद्वयाग्रयोजितसम्पूर्णप्रकाश[5]रूपाङ्गुष्ठद्वयाग्ररूपा [6]विमर्शकलारूपमयी योनिमुद्रा प्रकाशविमर्शसामरस्यलक्षणपर[7]बिन्दुमयसर्वानन्दमये चक्रे स्थितेत्यर्थः। उक्तमुपसंहरति क्रियेति। क्रिया—

"क्रियाशक्तिस्तु विश्वस्य मोदनाद् द्रावणात्तथा"

इत्युपक्रान्ता क्रियाशक्तिरेव भेदेन विरचनामयी वामादिशक्तिप्राधान्यभेदात् संक्षोभणादियोन्यन्तमुद्रारूपेण चैतन्यस्वरूपत्वाच्चक्रमयं त्रैलोक्यमोहनादिसर्वानन्दमयान्तनवचक्रमयं स्थितमित्यर्थः ॥६९-७१॥

(से०) बीजमुद्रावासनामाह—(शिवेत्यादि)। वटबीजस्यान्तरेऽपि किञ्चिद् व्योमास्त्येव, तस्य विभुत्वात्। तस्मिन् सूक्ष्मतमेऽवकाशे वृक्षः सर्वोऽपि सूक्ष्मस्थस्तिष्ठतीति स्थितिः। तद्दृष्टान्तानुगुण्याभिप्रायेण जगद्बीजस्य परस्परा-

---

१. प्रकाशस्य अनुत्तरस्य—क०। २. रूपा त्रिकोणरूपिणी—ख०। ३. कलात्मकविमर्शरूपा—ख०। ४. परम—ख० नास्ति। ५. प्रकाशविमर्शरूपा—क०। ६. विमर्शशक्तिरूपा या योनि—क०। ७. पर—ख० नास्ति।

भिन्नाश्लेषशालिनः शिवशक्तियुगलस्यान्तः स्फुरद्व्योमान्तर इत्युक्तम्। वस्तुतो से व्योम्नोऽपि सृष्ट्यन्तर्गतत्वेन बीजदशायां तदुत्पत्तेरभावेन शिवशक्त्योर्गर्भ इत्येव विवक्षितम्। विश्वस्य प्राथमिको यः सत्तात्मको भावविकारस्तदभिमान-वैशिष्ट्येन देव्येव बीजमुद्रेत्युच्यत इत्यर्थः ॥६९-७०॥

योनिमुद्रावासनामाह—(समित्यादि)। कामकलास्वरूपवर्णनावसरे कला-पदवाच्यत्वेन या प्रदर्शिता तद्रूपेयं योनिमुद्रा। अत एव संपूर्णस्य प्रकाशस्य परशिवस्य लाभभूमिः प्राप्तिकारणम्। अत एव च सर्वानन्दमयचक्रे स्थिता ॥७१॥

**इच्छारूपं परं तेजः सर्वदा [1]भावयेद् बुधः।**
**त्रिधा च नवधा चैव चक्रसङ्केतकः पुनः ॥ ७२ ॥**

(दी०) ननु—

"यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी"

इत्युपक्रान्तम्। कथं पुनः—

"क्रियाचैतन्यरूपत्वादेवं चक्रमयं स्थितम्"

इत्युपसंह्रियते? इत्याशङ्क्य तर्हि महान् प्रकृतोपसंहारस्त्वय-मित्याह—इच्छारूपमिति। परं तेजः शिवशक्तिसामरस्यरूपपरामयं ज्योतिर् इच्छारूपं [2]स्वेच्छागृहीतनानानामरूपप्रपञ्चमयं सर्वदा काल-त्रयेऽपि भावयेद् बुधः साक्षात्परशिव[3]सदृक्षरूपनिजगुरुकटाक्षरूप-पातेन।

घृणा शङ्का भयं लज्जा जुगुप्सा चेति पञ्चमी।
कुलं शीलञ्च जातिश्चेत्यष्टौ पाशाः प्रकीर्तिताः॥

इत्यभियुक्तवचनोक्तरीत्या पाटितपाशाष्टकतया परिस्फुरत्परमशिवा-हम्भावः स्वेच्छाकल्पित[4]नानानामरूपप्रपञ्चमयं श्रीचक्ररूपेण परिणतं परामयं तेजः सर्वदा भावयेदित्यर्थः। पुनरस्यैव चक्रस्य प्रकारान्तरेण वासनान्तरमाह—त्रिधा चेत्यादिना। स्पष्टम् ॥७२॥

---

१. भासयेत्—क०। २. स्वेच्छाकृतनानारूप—ख०। ३. शिवरूप—ख०। ४. नानारूप—ख०।

(से०) अस्या एव योनिदेवताया मुद्रारूपत्वे हेतुमाह—(क्रियेत्यादि) : पूर्वोक्ता या क्रियाशक्तिर्मोदनद्रावणविशिष्टा तद्रूपं यच्चैतन्यं तत्त्वे सति कलारूपत्वस्यैव योनिमुद्रापदवाच्यत्वादित्यर्थः। मुद्रात्वसामान्यस्य सर्वमुद्राशरीरे निविष्टत्वादिति भावः। अत्रेदं बोध्यम्—वासना नाम सूक्ष्मं रूपान्तरं यथाङ्कुशस्य द्वेषो ज्ञानं वा। तच्चास्यैतादृशमेव रूपान्तरमित्यर्थे लौकिकप्रमाणानामप्रसरादलौकिकार्षवचनप्रमाणकमेवास्थेयम्। तादृशप्रमाणद्वयोपलम्भे तु द्वयोरपि प्रामाण्याविशेषादेव द्वे अपि वासने एव। यत्तु वृद्धैस्तत्र स्थूलरूपवासनयोः साधारणो धर्मो हेतुत्वेन लिख्यते, यथाङ्कुशस्य ज्ञानात्मकत्वे मनोमयगजनिवारकत्वादिः, सोऽपि हेतूत्प्रेक्षामात्रं हेत्वधिकरणन्यायेन स्वार्थ तात्पर्यहीन एव न तु वास्तविकः। एवं सति—

त्रिराचामति तद्गृह्यात्यस्ति भाति प्रियत्रयम्।
यत् पुनः परिमार्ष्टि द्विर्नामरूपे जहाति तत्॥

इत्यादिरीत्या स्मृत्युक्तनिखिलाह्निककर्मसु लीलाविश्वम्भरबोधसारादिग्रन्थेषु कविभिः स्वकपोलकल्पनया लिख्यमाना वासनाः स्वरूपोत्प्रेक्षामात्रत्वेनालङ्कारान्तरवच्चमत्काराधायिका अपि यथा नानुष्ठानोपयोगिन्यस्तथा प्रकृतेऽपि मूले तन्त्रान्तरे चादृष्टाः प्राचीनैर्लिख्यमाना अपि वासना भूयस्योऽस्माभिरुपेक्षिता इति न तत्र श्रद्धाजाड्येन भ्रमितव्यम्। इदानीं यदा सा परमा शक्तिरित्युपक्रान्तां चक्रवासनामुपसंहरति—एवमिति। परज्योतिषो देव्या इच्छयैव सर्वस्यास्य चक्रस्योत्पन्नत्वादिच्छाविशिष्टा देव्येव सर्वचक्ररूपेति सर्वदाऽऽमुतेरामृतेश्च बुधो भावयेदित्यर्थः॥७२॥

**वह्निनैकेन शक्तिभ्यां द्वाभ्यां चैकोऽपरः[1] पुनः।**
**तैश्च वह्नित्रयेणापि शक्तीनां त्रितयेन च॥ ७३॥**
**पद्मद्वयेन चान्यः स्याद् भूगृहत्रितयेन च।**
**पञ्चशक्तिचतुर्वह्निपद्मद्वयमहीत्रयम्॥ ७४॥**
**[2]परिपूर्णं महाचक्रं तत्प्रकारः प्रदर्श्यते।**
**तत्राद्यं नवयोनि स्यात् तेन द्विदशसंयुतम्॥ ७५॥**

---

१. चैकः परः—से०। २. इति पूर्णम्—ख० ग० से०।

मनुयोनि परं विद्यात् तृतीयं तदनन्तरम् ।
अष्टद्व्यष्टदलोपेतं चतुरस्रत्रयान्वितम् ॥ ७६ ॥
चक्रस्य त्रिप्रकारत्वं कथितं परमेश्वरि ।
[1]सृष्टिः स्यान्नवयोन्यादिपृथ्व्यन्तं संहृतिः पुनः ॥७७॥
पृथ्व्यादिनवयोन्यन्तमिति शास्त्रस्य निर्णयः[2] ।
एतत्समष्टिरूपं तु त्रिपुराचक्रमुच्यते ॥ ७८ ॥

(दी०) तत्रादौ त्रिधात्ववासनामाह—वह्निनैकेनेति । एकेन वह्निना द्वाभ्यां शक्तिभ्यामेकः प्रकारः । तैश्चैकवह्निशक्तिद्वयरूपैस्त्रि[3]कोणत्रयैः पुनर्वह्नित्रयेण शक्तीनां त्रितयेन चापरः प्रकारः । अयमर्थः—त्रिकोणानामेवोपरि विस्तारक्रमेण पुनर्वह्नित्रयेण [4]शक्तित्रयेण च जायतेऽयमेकः प्रकारः ॥७३॥

पद्मद्वितयेन भूगृहत्रितयेन चान्यः प्रकारः । पद्मद्वय[5]वृत्तत्रयान्तरालयोरष्टदलं षोडशदलं चेति । भूगृहत्रितयं चतुरस्रत्रयम् । एवं कृते सति पञ्च शक्तयश्चत्वारो वह्नयः पद्मद्वयं महीत्रयं चेति परिपूर्णं महाचक्रं समष्टिरूपम् ।

तत्प्रकारत्रयमेव विविच्य विवृणोति—तत्प्रकार इति । जातावेकवचनम् । तत्प्रकाराः प्रदर्श्यन्त इत्यर्थः । तत्र तेषु प्रकारेषु आद्यं नवयोनि वह्निनैकेन शक्तिभ्यां द्वाभ्यामित्यस्य विवरणम् । एकस्य वह्नेर्द्वयोः शक्त्योश्च संयोगे सति बैन्दवत्रिकोणाष्टकोणैर्नवयोनिचक्रं भवतीत्यर्थः । तेन द्विदशसंयुतं मनुयोनिपरं विद्यात् । तेन नवयोनिचक्रेण द्विदशसंयुतं दशारद्वयसंयुतं मनुयोनि चतुर्दशकोणं परं द्वितीयं जानीयात् । तेन वह्नित्रये शक्तित्रये च कृते सति दशारचक्रद्वयं चतुर्दशारचक्रं च चक्रत्रितयं द्वितीयं चक्रं भवतीत्यर्थः । तदनन्तरमष्टद्व्यष्टदलोपेतं चतुरस्रत्रयान्वितम् । तेन चक्रद्वयेनानन्तरमव्यवधानेन स्थितमत्यन्तसन्निहितम् अष्टदलकमलेन षोडशदलकमलेन चोपेतं चतुरस्रत्रयात्मकं तृतीयं चक्रमित्यर्थः ।

---

१. सृष्टिस्थं–ख० । २. निश्चयः–से० । ३. स्त्रिकोणैः–ख० । ४. शक्तित्रये जातेऽपरः प्रकारो भवति–ख० । ५. रेखात्रया–ख० ।

दी० ननु त्रयाणां चक्राणामेकैकप्रकारत्वं कथमिति ? उच्यते—

प्रत्येकमंशभेदेन सर्गस्थितिलयक्रमात् ।

इति सङ्केतपद्धत्युक्तरीत्या एकैकचक्रावयवत्रितयस्य सृष्टिस्थितिसंहारभेदात् क्रोडीकारः। तद्यथा—चतुरस्रत्रयं सृष्टिसृष्टिः, षोडशदलपद्मं सृष्टिस्थितिः, अष्टदलपद्मं सृष्टिसंहारः। एवं चक्रत्रयमयं सृष्टिमयत्वादेकम्। एवं चतुर्दशारं स्थितिसृष्टिः, बाह्यदशारं स्थितिस्थितिः, अन्तर्दशारं स्थितिसंहारः। एवं चक्रत्रयं [1]स्थितिमयत्वादेकम्। एवमष्टकोणं संहारसृष्टिः, त्रिकोणं संहारस्थितिः, बैन्दवं संहारसंहारः, एवं चक्रत्रयं संहारमयत्वादेकम्। बैन्दवं चक्रमारभ्य चतुरस्रान्तोद्धारः सृष्टिरित्यर्थः ॥७६॥

इत्येतत्सर्वं मनसि निधायाह—चक्रस्य त्रिप्रकारत्वं कथितं परमेश्वरीति। स्पष्टम्।

ननु चक्रस्य त्रैविध्यमुक्तं यदि तर्हीदं चक्रं मध्यचक्रमारभ्य किमुत्पादयितुं न शक्यते इत्यत आह—सृष्टिरिति। [2]अत्र नवयोनिशब्देन नवयोन्यन्तर्गतं बैन्दवं चक्रं लक्ष्यते। तद् बैन्दवं चक्रमारभ्य चतुरस्रान्तोद्धारः सृष्टिः, संहृतिः पुनः पृथ्व्यादिनवयोन्यन्तमिति। तथा च चतुरस्रत्रयमारभ्य बैन्दवान्तमुद्धारः संहार इत्यर्थ इति चतुःशतीशास्त्रस्य निर्णयः। अतो न मध्यमारभ्य चतुःशतीशास्त्रस्य चक्रोद्धार इति तात्पर्यम्।

यथा देवदत्तविष्णुमित्रयज्ञदत्तेषु प्रस्तुतेषु 'देवदत्तयज्ञदत्तयोः फलानि देयानि' इत्युक्ते विष्णुमित्रस्य न देयानीति गम्यते। तद्वत्पूर्वं श्रीचक्रमवयवशो विभज्य वासनामुक्त्वा इदानीं समष्टिचक्रस्य वासनामाह—एतदिति। एतत्समष्टिरूपं सृष्ट्यादित्रितयं समष्टिर्नाम। अवयवी तु तथा[3] न भवति, सृष्टिपदेन स्थितिपदेन संहारपदेनापि[4] च नाभिधीयते, किन्तु त्रिपुराचक्रमुच्यते। त्रिपुरायाः सृष्ट्यादिभ्यस्त्रिभ्यः पुरा विद्यमानत्वात्त[5]त्पदाभिधेयाया अनाद्यन्तरूपायाः स्वसंविदश्चक्रावि-

१. संहारमयत्वा—क॰ख॰। २. 'अत्र' इत्यारभ्य 'तात्पर्यम्। यथा देवदत्त' इत्येतदन्तग्रन्थस्य स्थाने खपुस्तके—"संहृतिः पुनः पृथ्व्यादिनवयोन्यन्तमिति। अत्र नवयोनिशब्देन योन्यन्तर्गतं बैन्दवं चक्रं लक्ष्यते। तथा च चतुरस्रत्रयमारभ्य बैन्दवान्तमुद्धारः संहार इत्यर्थ इति चतुःशतीशास्त्रस्य निर्णयः। अतो न मध्यमादिचक्रमुद्धारयतीति तात्पर्यम्। देवदत्त" इति पाठः। ३. तथा—क॰ नास्ति। ४. पदेनापि—क॰। ५. तत्पदानपि—ख॰।

भावभूमिरित्युच्यते। तदुक्तं सङ्केतपद्धत्याम्—"वशिन्योऽष्टौ सान्तरालम्" इत्यादिना "अनाख्या सर्वगा ततः" इत्यन्तेन ॥७८॥ दी०

(से०) पूर्वचतुःशत्यां सकलं बाह्यगतं मध्यगतं चेति त्रिविधं चक्रं पूर्वपूर्वाशक्तस्योत्तरोत्तरं पूजनीयत्वेन कथितम्। तदिदं सवासनं पूजयितुरपि तुल्यमिति ध्वननाय तत्त्रैविध्यं तत्प्रसङ्गान्नवधात्वं चोपदिशति—

त्रिधा च नवधा चैव चक्रसंकेतकः पुनः।

"त्रिकोणे बैन्दवं श्लिष्टम्" इति ब्रह्माण्डपुराणीयोक्तवचनरीत्या सकलचक्रं मन्वस्रादिचक्रे बाह्यमध्यगतपदवाच्येऽन्तर्भूतम्। बाह्यमध्यगतस्यापि शक्त्यनलात्मकयोनिनवकत्वाविशेषान्नवयोन्यात्मकचक्र एवान्तर्भावः।

ईदृशार्थं मनसि निधायासन्देहाय संक्षेपविस्तराभ्यां त्रैविध्यं द्विवारं वर्णयति—(वह्नीत्यादि)। वह्निरेको द्वे शक्ती चेत्येकः। परस्त्वेतैस्त्रिभिरन्यैः षड्भिश्चेति मिलित्वा नवभिर्भवति। अन्यस्त्वेतैर्नवभिः पद्मद्वयभूत्रयाभ्यां च मिलितः। अस्यैव विवरणं पञ्चशक्तीति। तेन नवयोनिना द्विदशाराभ्यां च संयुतं मनुयोनि द्वितीयम्। सुगममन्यत्। बिन्दुयोगस्त्वनुक्तत्वाविशेषाच्चक्रत्रयेऽप्यन्वेति ॥७३-७७॥

**[1]यस्य विज्ञानमात्रेण त्रिपुराज्ञानवान् भवेत्।**
**चक्रस्य नवधात्वं च कथयामि तव प्रिये ॥ ७९ ॥**
**आदिमं भूत्रयेण स्याद् द्वितीयं षोडशारकम्[2]।**
**अन्यदष्टदलं प्रोक्तं मनुकोणमनन्तरम् ॥ ८० ॥**
**पञ्चमं दशकोणं[3] स्यात् षष्ठं चापि दशारकम्।**
**सप्तमं वसुकोणं स्यान्मध्यत्र्यस्रमथाष्टमम् ॥ ८१ ॥**
**नवमं त्र्यस्रमध्यं स्यात् तेषां नामान्यतः शृणु।**
**त्रैलोक्यमोहनं चक्रं सर्वाशापरिपूरकम् ॥ ८२ ॥**
**[4]सर्वसंक्षोभणं गौरि[5] सर्वसौभाग्यदायकम्।**
**सर्वार्थसाधकं चक्रं सर्वरक्षाकरं परम्[6] ॥ ८३ ॥**

---

१. अस्य—क०। २. षोडशच्छदम्—ग०। ३. कोणञ्च—क०। ४. सर्वक्षोभकरं—ख० से०। ५. देवि—से०। ६. तथा—ग० से०।

सर्वरोगहरं देवि सर्वसिद्धिमयं तथा ।
सर्वानन्दमयं चापि नवमं शृणु सुन्दरि ॥ ८४ ॥
अत्र पूज्या महादेवी महात्रिपुरसुन्दरी ।
परिपूर्णं महाचक्रमजरामरकारकम् ॥ ८५ ॥

(दी०) ननु स्वसंविद्रूपा त्रिपुरैव सा ज्ञायतां किमेतेन चक्रवासनालक्षणेन बकबन्धनविधिप्रयासेनेत्यत आह–यस्येति । [1]यस्य विज्ञानमात्रेण [2]यस्मिन् विज्ञाने [3]एव त्रिपुराचक्रज्ञानमात्रेण त्रिपुराज्ञानवान् ज्ञाता भवेत् । कोऽर्थः ? [4]शुद्धाया निराकारमूर्तेस्त्रिपुराया ज्ञानमशक्यम् । अत एवोक्तरीत्यैव एतच्चक्रवासनया तन्मध्ये [5]बैन्दवचक्रे क्रोडीकृता सा ज्ञातुं शक्येत्यर्थः । तदुक्तमभियुक्तैः—

घृतकाठिन्यवच्चक्रं महायोनौ चिदम्बरम् ।
द्रुतहेमघनीभावमिति मूर्ति करोम्यहम् ॥ इति ।

चक्रस्य पूर्वमुद्दिष्टं नवधात्वमिदानीं वक्तुं प्रतिजानीते—चक्रस्येति । यतः प्रियतमाऽसि त्वमतो रहस्यमपि कथयामीत्यर्थः ॥७९॥

इदानीं [6]नवधात्वमेवाह–आदिममिति । भूत्रयेण चतुरस्रत्रयेण, मनुकोणं [7]चतुर्दशारम्, वसुकोणम् अष्टकोणम् । स्पष्टमन्यत् ।

उक्तानां नवचक्राणां नामान्याह–तेषां नामानीति । त्रैलोक्यमोहनं लोक्यत इति लोकः, [8]लोक्यतेऽनेनेति लोकः, लोकयतीति लोक इति कर्मकरणकर्तृव्युत्पत्त्या मेयमानमातृलक्षणं त्रैलोक्यम्, तस्य मोहनं तिरोधायकमद्वैतप्रतीत्युत्पादनेन । सर्वाशापरिपूरकम् आशा नाम अतृप्तस्य पदार्थान्तरेषु स्पृहा तस्याः सर्वस्याः स्पृहायाः परिपूरकं नित्यपरिपूर्णतृप्तिलक्षणपरमशिवसामरस्यप्रतिपादनेन ॥८२॥

सर्व[9]संक्षोभणं सर्वस्य क्षित्यादेः शिवान्तस्योपर्युपरि तत्त्व[10]क्रमेण संक्षोभस्तस्य संहारलक्षणस्य कारकं भेद[11]प्रपञ्चलयरूपत्वात् । सर्व-

---

१. अस्य–क० । २. अस्मिन्–क० । ३. विज्ञामात्र एव–क० । ४. शुद्धनिरा–ख० । ५. बैन्दवे क्रोडी–ख० । ६. नवधात्वमाह–ख० । ७. चतुर्दशकोणं स्पष्ट–ख० । ८. लोकनं लोकः–क० । ९. संक्षोभकरं–ख० । १०. क्रमेण क्षोभस्य सं–ख० । ११. बैन्दवप्र–क० ।

सौभाग्यदायकं सर्वसौभाग्यं सर्वस्पृहणीयता तस्या दायकम्, सर्व- दी०
स्पृहणीयपरप्रेमास्पद[1]परमशिवैक्यप्रतिपादनेन । सर्वार्थसाधकं सर्वेषां वैदिकानां तान्त्रिकाणां [2]क्रियाणामर्थः प्रयोजनं परमशिवप्राप्तिः । तदुक्तं महाकविभिः—

बहुधा ह्यागमैर्भिन्नाः पन्थानः सन्ति भूतले ।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥ इति ।

तत्साधयति—[सर्वरक्षेति]। सर्वरक्षाकरं रक्षा नाम प्रतिकूलपदार्थादुपरतिः परिहारः षट्त्रिंशत्तत्त्वात्मकं सर्वमेव प्रतिकूलपदार्थः, तस्मात् सर्वस्माद् रक्षां शिवाहम्भावभावनालक्षणां करोति । तदुक्तं परापञ्चाशिकायाम्—

अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः ।
पराक्रमपरो भुङ्क्ते स्वभावमशिवापहम् ॥ इति ॥ ८३ ॥

सर्वरोगहरं [3]भेदलक्षणं षट्त्रिंशत्तत्त्वात्मकं सर्वमेव रोगस्तस्य हरम्, अभेदप्रतीतिहेतुत्वात् । अत्रैवोक्तम्—"विकल्परूपरोगाणां हारिणी खेचरी परा" ( वा० हृ० सं० १ श्लो० ४१ ) इति । सर्वसिद्धिमयं सर्वस्य सिद्धिरुत्पत्तिः स्थितिः संहारश्च, तन्मयम्, त्रिकोणस्य सृष्टिस्थितिसंहारहेतुत्वात् । तदुक्तमीश्वरप्रत्यभिज्ञायाम्—"चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" इति । सर्वानन्दमयं शिवशक्तिलक्षणप्रकाशविमर्शसामरस्यरूपत्वात् । अत्र [4]सर्वत्र प्रवृत्ति[5]निमित्तभेदाभावादद्वैतविश्रान्तिरेव परमार्थः ॥८४॥

पूर्वोक्तवासनाचक्रस्य प्रयोजनमाह-अत्रेति । महादेवी [6]महती देशकालैरनाकलितत्वात्, देवी [7]द्योतनार्था देवीपदाभिधेया विमर्शरूपा । अत्र त्रिधा नवधा च पूर्वोक्तवासनाचक्रे महात्रिपुरसुन्दरी महती अनावरणा चिद्रूपिणी त्रिपुरा तुर्यरूपत्वात् सुन्दरी [8]स्वात्मतया [9]सर्वस्य स्पृहणीयत्वात् । एवंविधा स्वसंविद्देवता पूज्या वक्ष्यमाणपरादित्रिविधरूपया पूजया भावनीया ।

---

१. पर—ख० । २. क्रियाणामप्यर्थः—ख० । ३. भेदलक्षणं—ख० नास्ति । ४. अत्र सर्वप्रवृत्ति—क० । ५. निमित्तभेदादद्वैत—ख० । ६. महती देवी देशकालाकारैरना—क० । ७. द्योतनादिति देवी—ख० । ८. स्वस्वात्मतया—ख० । ९. सर्वस्पृ—ख० ।

दी० त्रैलोक्यमोहनादिनवचक्राणां स्वस्वनामानु[1]रूपार्थवासनालक्षण-फलान्युक्त्वा समष्टिचक्रस्य फलमाह–परिपूर्णमिति। परिपूर्णं [2]नवचक्र-समष्टिरूपं महायोनि [3]मध्यमहाबिन्दु[4]चक्रस्फुरत्प्रकाशविमर्शसामरस्य-रूपपराप्रभापटलमयसर्वानन्दमयं [5]सर्वावरणसमग्रं च महाचक्रं विश्व-मयं विश्वोत्तीर्णपरामयत्वात्, अजरामरकारकम् अजरः कालत्रया-तीतत्वात्[6], अत एवामर उत्पत्तिविनाशरहितत्वात्, अजरामरः [7]परम-शिवः, [8]कारकं स्वपूजकस्य [9]कालत्रयातीतोत्पत्तिविनाशरहितनित्य-परमशिवत्वप्राप्तिलक्षणं मोक्षं करोतीत्यर्थः ॥८५॥

अस्मिंश्चक्रे प्रथमं बिन्दौ प्रधानदेवतां पूजयित्वावरणदेवतासु पूजनीयासु द्वौ क्रमौ। तत्र नवयोन्यादिभूगृहान्तपूजने सृष्टिक्रमः, सृष्टेरनेनैव क्रमेण वर्णित-त्वात्। तद्विपरीतस्तु संहारक्रमः। उभयविधापि पूजा युक्तैवेति द्योतनाय क्रमद्वै-विध्यमुपपादयति—(सृष्टीत्यादि)। इदानीं क्रमप्राप्तं नवविधत्वं तन्नामानि चोप-दिशति–(चक्रेत्यादि)। अत्र त्रैलोक्यमोहनादयः संज्ञा योगरूढास्तादृशार्थविशिष्ट-त्वेन भावनीयानीत्येतद्ध्वननार्थं वक्ष्यमाणन्यासोपयोगार्थं चोक्ताः। निगद-व्याख्यातमेतत् ॥७८-८५॥

एवमेव महाचक्रसङ्केतः परमेश्वरि।
कथितस्त्रिपुरादेव्या जीवन्मुक्तिप्रवर्तकः[10] ॥ ८६ ॥

(दी०) चक्रसङ्केतमुपसंहरति–एवमिति। एवम् उक्तप्रकारेण, त्रिपुरा-देव्याः पूर्वोक्तलक्षणाया महाचक्रसङ्केतः षट्त्रिंशत्तत्त्वचक्ररूपत्वाद् महा-चक्रं जीवतो मुक्तिः जीवन्मुक्तिः, मुक्तिर्हि बन्धनादुद्बन्धनं घृणादिपाशा-ष्टकेन। कोऽर्थः? [11]परमशिवादिस्वगुरुपरदेवताधिगतपरमार्थश्चक्र-सङ्केतकः स्वपरामर्शकस्य हठादेव सकलपाशविनाशनेन शिवाहम्भाव-भावन प्रवर्तयतीत्यर्थः ॥८६॥

१. रूपलक्षणफला–ख०। २. नवचक्रसमष्टिरूपं–ख० नास्ति। ३. मध्य–ख० नास्ति। ४. चक्र–ख० नास्ति। ५. सर्वावरणसमग्रंच–ख० नास्ति। ६. त्वात्, अमर अत एवोत्पत्ति–ख०। ७. परम–ख० नास्ति। ८. कारकं–ख० नास्ति। ९. काला-तीतनित्यपरशिव–ख०। १०. प्रदायकः–क०। ११. परशिवादिगुरुपरम्–ख०

इति श्रीमत्परमयोगीन्द्रपरमहंसपुण्यानन्द[1]नाथ-
शिष्यपरमहंसामृतानन्द[2]नाथयोगिप्रवर-
विरचितायां [3]वामकेश्वरतन्त्रयोगिनी-
हृदयदीपिकायां चक्रसङ्केतकः
प्रथमः [4]पटलः ॥ १ ॥

चक्रसंकेतमुपसंहरति—( एवमित्यादि )। स्वस्य त्रिपुरादेव्यभेदाभिप्रायेण स्वकथितोऽप्यर्थस्तयैव कथित इत्युक्तम्। त्रिपुरादेव्या इति षष्ठी वा। एतत्संकेतज्ञानफलं जीवन्मुक्तिरिति सर्वं शिवम् ॥८६॥

इति श्रीभास्करोन्नीते नित्याषोडशिकाम्बुधेः।
व्याख्याने सेतुबन्धाख्ये विश्रामः षष्ठ ईरितः ॥



१. नाथ—ख० नास्ति। २. नाथ—ख० नास्ति। ३. वामकेश्वरतन्त्र—ख० नास्ति
४. पटलः—ख० नास्ति।

# अथ द्वितीयः पटलः

मन्त्रसङ्केतकं दिव्यमधुना कथयामि ते ।
यद्वेत्ता त्रिपुराकारो वीरचक्रेश्वरो भवेत् ॥ १ ॥

(दी०) अथ द्वितीयं मन्त्रसङ्केतकं श्रोतृजनप्रवृत्तये फलप्रतिपादनपूर्वकं वक्तुं प्रतिजानीते—मन्त्रसङ्केतकमिति । दिव्यं प्रकाशवि[1]मर्शात्मक[2]परमशिवपराशक्तिप्रतिपादनपरत्वात् । मन्त्रसङ्केतकं मननात्त्रायन्ते साधकमिति मन्त्राश्चिन्मरीचयः, तद्वाचकत्वाद् वैखरीवर्णविलासभूतानां सौभाग्यविद्यादीनां [3]मननात् त्राणता । तदुक्तं सङ्केतपद्धत्याम्—

मननात्त्राणधर्मोऽसौ मन्त्रोऽयं परिकीर्तितः ॥ इति ।

सङ्केतकं पूर्वोक्तलक्षणम् । [4]अधुना कथयामीति । प्रकाशात्मकोऽहं ते विमर्शरूपिण्याः कथयामि हृदयङ्गमतां नयामीत्यर्थः । यद्वेत्ता यस्य मन्त्रसङ्केतकस्य वेत्ता ज्ञाता त्रिपुराकारो [5]वेदनसंपरिस्फुरत्परमशिवभट्टारको वीरचक्रेश्वरो भवेत्, वीराः पूर्वोक्तलक्षणास्तेषां चक्रं समूहः तस्येश्वरः [6]परमशिवः । कोऽर्थः ? एतन्मन्त्रसङ्केतप्रतिपादितश्री[7]विद्यादिमन्त्ररहस्यभूतपरभावनाप्रणाशितमायाजालः, अत एव परमशिव एव भवेदित्यर्थः ॥ १ ॥

(से०) एवं सार्धषडशीत्या श्लोकैश्चक्रसङ्केतमुपदिश्य क्रमप्राप्तं मन्त्रसङ्केतमुपदिदिक्षुः शिष्यावधानाय प्रतिजानीते—(श्रीभैरवेत्यादि) । सङ्केतकमित्यज्ञातार्थे कप्रत्ययः । अद्यावधि केनाप्यज्ञातं ते त्वदीयं मन्त्रसङ्केतं ते कथयामि । वीरा उपासकाः । ते च सकलादिभेदेन त्रिविधाः । तेषु शुद्धा उत्तमाः । अत एव ते वीरसमूहस्येश्वराः । तादृशो मन्त्रसङ्केतज्ञानेन भवति । अत एव च स त्रिपुराकारस्त्रिपुरासारूप्यमुक्तिमान् । उपलक्षणमेतत् सायुज्यादेरपि ॥ १ ॥

---

१. विमर्शरूप—ख० । २. परशिव—ख० । ३. मननं त्राणता—ख० । ४. अधुना कथयामि—ख० नास्ति । ५. वेदनमय एव परिस्फुरितपराभट्टारकैक्यद्विरि—क० । ६. पर—ख० । ७. विद्यामन्त्रार्थभूतपरमावनाप्राशस्त्यशाल परशिव एव—ख० ।

करशुद्धिकरी त्वाद्या द्वितीया चात्मरक्षिका ।
आत्मासनगता देवी तृतीया तदनन्तरम् ॥ २ ॥
चक्रासनगता पश्चात् सर्वमन्त्रासनस्थिता ।
साध्यसिद्धासना षष्ठी मायालक्ष्मीमयी परा ॥ ३ ॥
मूर्तिविद्या च सा देवी सप्तमी परिकीर्तिता ।
अष्टम्यावाहिनी विद्या नवमी भैरवी परा ॥ ४ ॥
मूलविद्या तथा ख्याता त्रैलोक्यवशकारिणी ।

(टी०) [1]पूर्वोक्तत्रैलोक्यमोहनादिनवचक्रेश्वरीमन्त्रानेवोपक्रम्य मन्त्रसङ्केतकमारभते—करशुद्धिकरीति ।

आत्मतत्त्वगतयोरशुद्धयोरत्र कर्मकरणात्मनोर्द्वयोः ।
शुद्धतत्त्वलयभावनामयी शुद्धिरात्मकरयोः परा मता ॥

इत्यस्मद्गुरूक्तरीत्या कर्मेन्द्रियान्तःपातिनोः [2]करयोरशुद्धतत्त्वान्तरगतयोरशुद्धयोः शुद्धतत्त्वलयभावना शुद्धिस्तत्करीयं विद्या, पराहन्ताप्रतिपादनपरत्वात् । अत्रैव वक्ष्यति—

कर्मेन्द्रियाणां कैवल्यात् करशुद्धिकरी स्मृता । (३।१३४)

आद्या त्रैलोक्यमोहनचक्रेश्वरी विद्येत्यर्थः । नन्वत्र करशुद्ध्यादिमन्त्राणां सङ्ख्यामेव करोति, किमिति नोद्धरति ? उच्यते, वामकेश्वरशास्त्र [3]एवासामुद्धारः, अत्र त्वज्ञानार्थप्रतिपादनपरत्वादस्य [4]शास्त्रस्येति न[5] मन्त्रोद्धारः क्रियत इति । द्वितीया चात्मरक्षिकेति ।

भेदलक्षणविपत्तसङ्कटोत्तारणपरमिहात्मरक्षणम् ।

[6]इत्यस्मद्गुरूक्तरीत्या भेदप्रपञ्चलक्षणप्रतिपक्षपराभवरूपसङ्कटाद् रक्षाम् अभेदप्रतीतिरूपां पराहन्ताप्रति[7]पादनेन चात्मनः करोति इत्यात्मरक्षिका द्वितीया सर्वाशापरिपूरकाख्यद्वितीयचक्रेश्वरी विद्येत्यर्थः । आत्मासनगता देवी तृतीया ।

---

१. पूर्वमनन्तरोक्तत्रैलोक्य—ख० । २. करयोरशु—ख० । ३. एतासाम्—क० । ४. शास्त्रस्य, अत एव न—क० । ५. नोद्धारः क्रियते—ख० । ६. इत्यस्मदुक्तरीत्या भेदं प्र—ख० । ७. पादनपरादात्मनः—क० ।

दी० [1]आत्मचक्रमनुदेवतात्मनामासनं शिवमयत्वभासनम् ।

इत्यस्मद्गुरूक्तरीत्या साधकचक्रमन्त्रदेवतानां स्वसंविद्रूपतया अनुसन्धानलक्षणासन[2]चतुष्टयविद्यानामादिभूता आत्मासनगता विद्या तृतीया सर्वसंक्षोभकरलक्षणतृतीयचक्रेश्वरी विद्येत्यर्थः। तदनन्तरं चक्रासनगता [3]तदनन्तरोक्तचक्रासनगता चतुर्थी विद्या सर्वसौभाग्यदायकलक्षणचतुर्थचक्रेश्वरी विद्येत्यर्थः। पश्चात् सर्वमन्त्रासनस्थिता। अनन्तरोक्त[4]वासनापूर्वोक्तलक्षणमननत्राणलक्षणचिन्मरीचिप्रसर[5]णाखिलावरणदेवतामन्त्रासनस्थिता पञ्चमी विद्या। सर्वार्थ[6]साधकाभिधानलक्षणपञ्चमचक्रेश्वरी विद्येत्यर्थः। साध्यसिद्धासना [7]षष्ठी।

सर्वपीठनिवासिन्यः सर्वगाश्चिन्मरीचयः।
[8]भैरव्यो भरिताकारा रक्षन्तु कुलमातरः॥

इति प्रामाणिकवचनोक्तरीत्या [9]चिन्मरीचिमयपरिणतावरणदेवताः [10]साध्याः साधकदशायां सप्तषष्टिसङ्ख्यात्रिकोणादिषोडश[11]दलान्तपदगताश्चतुरस्त्रत्रितयगताश्च देवताः सृष्टिक्रमरूपत्वात्साध्याः। तदुक्तमत्रैव-"सृष्टिः स्यान्नवयोन्यादिपृथ्व्यन्तम्" (यो०हृ०सं०१श्लो०७८) इति। साध्यास्ता एव संहृतिकाले सिद्धाश्चतुरस्रादिबैन्दवान्तक्रमेणोपसंहृताः। तदुक्तमत्रैव—"संहृतिः पुनः पृथ्व्यादिनवयोन्यन्तम्" ( यो० हृ० सं० १ श्लो० ७८ ) इति। अत्र सिद्धिः संहारः। तदुक्तमीश्वरप्रत्यभिज्ञायाम्-"चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" इति। [12]( अतः साध्याः सिद्धाश्च साध्यसिद्धाः )। एवं सृष्टिसंहारक्रमेणानुसन्धीयमानानां साध्यसिद्धानामावरणदेवतानाम् आसने स्थिता [13]विद्या साध्यसिद्धासना षष्ठी [14]सा सर्वरक्षाकरनामधेयषष्ठचक्रेश्वर विद्येत्यर्थः। मायालक्ष्मी[15]मयी परा। मूर्तिविद्या च सा देवी सप्तमी परिकीर्तितेति। अस्या विद्यायाश्चतुः-

---

१. अष्टचक्रमनुदेवतात्मनां सा विमर्शमनयत् स्वभासनम्–ख०। २. चतुष्टयादिविद्या–क०। ३. अनन्तर चक्रं कृतोक्तचक्रासनयुक्ता विद्या–ख०। ४. वासनामननत्राणचिन्म–ख०। ५. प्रसराखिल–ख०। ६. साधनलक्षण–ख०। ७. षष्ठी। अनन्तरोक्तवासना। सर्व–क०। ८. रम्यास्ता वाक्पराकारा–ख०। ९. चिन्मरीच्यावरण–ख०। १०. साध्याः सृष्टिस्थाः सप्तसंख्याकत्रिकोणादि–ख०। ११. दलान्तचक्रगता–ख०। १२. धनुश्चिह्नान्तर्गतं ख०नास्ति। १३. स्थिता या विद्या सा साध्य–ख०। १४. सा–ख० नास्ति। १५. लक्ष्मीश्वरीमयी–क०।

शतीशास्त्रेऽनुद्धृतत्वादत्रोद्धारः क्रियते—माया [1]भुवनेश्वरीबीजम्, दी०. लक्ष्मीः श्रीबीजम्, तन्मयी तत्प्रचुरा। [2]तयोरूर्ध्वगता परा।

चतुर्दशयुतं भद्रे [3]त्रिशीर्षान्तसमन्वितम्।
तृतीयं ब्रह्म सुश्रोणि हृदयं [4]भैरवात्मनः॥

इति [5]श्रीपरात्रि[6]शिकोक्तरीत्या परा परावाचकत्वात्तद्बीजत्रयात्मिका ब्रह्मविष्णुरुद्रात्मकत्वाच्च सा विद्या श्रीमहात्रिपुरसुन्दरीमूर्तिकल्पनायां विनियुक्ता सप्तमी सर्वरोगहराभिधेयसप्तमचक्रेश्वरी विद्येत्यर्थः। अष्टम्यावाहिनी विद्या।

आन्तरस्य निजसंविदात्मनो
मातुरत्र करणात्मना बहिः।
मेयसंविदि समर्पणं तदा-
वाहनं समरसत्वलक्षणम्॥

इत्यस्मद्गुरूक्तरीत्या स्वहृदयकमलकर्णिकामध्ये स्फुरन्त्याः संवित्कलायाः "आत्मा मनसा युज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन" इति तन्त्रान्तरोक्तपरिपाट्या [7]बहिरर्थप्रसरणलक्षणावाहिनी विद्या सर्वसिद्धिप्रदाऽष्टमचक्रेश्वरी विद्येत्यर्थः। नवमी भैरवी परा [8]भैरवो विश्वस्य भरणात् स्थितिहेतुतया रक्षणात् परचिन्मात्रपर्यवसानलक्षणसंहारकारणतया वमनात् सृष्टिहेतुतया च॥ २-४॥

(से०) एक एव मन्त्रो नवचक्रेश्वरीरूपोपाधिभेदान्नवधा जातः। ते च मन्त्राः प्रथमपटल एवोद्धृतास्तान्नाममात्रेणोद्दिशति—(करशुद्धिकरीत्यादि)। आसु सप्तमी मूर्तिविद्यानाम्नी तत्र नोद्धृता। एकस्या एवानुद्धारे बीजं तु तत्रैवावाहनप्रकरणे वर्णितमस्माभिः। तामिहोद्धरति—मायेति। माया हृल्लेखा लक्ष्मीः श्रीबीजम्। परा बाला तृतीयबीजम्। एवमक्षरत्रयात्मिका मूर्तिविद्या भैरवी भैरवस्य परशिवस्य पत्नी त्रिपुरसुन्दरीरूपेत्यर्थः॥ २-४॥

---

१. भुवनेशी–क०। २. तद्द्वयोर्ध्वगता–ख०। ३. तिथीशान्त- क० ४. भैरवात्मना–क०। ५. इति परा–ख०। ६. त्रिंशकोक्तबीज–ख०। ७. बहिः प्रसारणलक्षणावाहने विहिता। अष्टमी सर्वसिद्धिप्रदानाभिधानाष्टम–ख० ८. भैरवी भरणाद्विश्वस्य स्थिति–क०।

एवं नवप्रकारास्तु पूजाकाले प्रयत्नतः ॥ ५ ॥
एताः क्रमेण न्यस्तव्याः साधकेन [1]कुलेश्वरि ! ।
पादाग्रजङ्घाजानूरुगुदलिङ्गाग्रकेषु च ॥ ६ ॥
आधारे विन्यसेन्मूर्तिं तस्यामावाहिनीं न्यसेत्
मूलेन व्यापकन्यासः कर्तव्यः परमेश्वरि ! ॥ ७ ॥

(दी०) ननु भैरवी चतुःशती [2]शास्त्रोक्ता किमत्र नोद्धृता यतः सप्तमचक्रेश्वरी विद्या चोद्धृतेत्यत आह—[3]मूलविद्येति । मूलं विश्वस्य शिवादेर्भूम्यन्तस्य षट्त्रिंशत्तत्त्वात्मनः प्रकाशविमर्शसामरस्यरूपं [4]परं तेजो [5]वेदयतीति मूलविद्या तथा[6] प्रोक्ता भैरवी कथिता नान्या । अस्यास्तत्रैवोद्धृतत्वान्नात्रोद्धारः । अन्यथा सप्तमचक्रेश्वरीवदत्रोद्धरेत् । वक्ष्यति—

मूलेन व्यापकन्यासः कर्तव्यः परमेश्वरी । इति ।

त्रैलोक्यमुक्तलक्षणं वशीकरोति सर्जने संहारे च स्वायत्तं करोतीति वक्ष्यमाणपूजासङ्केतके वक्तुं योग्यमपि न्यासं नवचक्रेश्वरी[7]विद्यानां प्रसङ्गान्मण्डूकप्लुतिन्यायेनाह—एवमिति । एवमुक्तप्रकारेण नवप्रकारा एताश्चक्रेश्वरीविद्याः साधकेन एतद्विद्योपासकेन मोक्षमात्मनः साधयितुमिच्छता । कुलेश्वरी कुलं मेयमानमातृरूपम् । तदुक्तं चिद्गगनचन्द्रिकायाम्—

मेयमातृमितिलक्षणं कुलं
प्रान्ततो [8]व्रजति विश्वमम्बिके । इति ।

तस्य सर्जने संहारे च ईश्वरी । अत्र श्रुतिः—"यथोर्णनाभिः सृजते गृह्णते च" इति । आज्ञावतारेऽप्युक्तम्—

स्वेच्छयैव जगत्सर्वं निगिरत्युद्गिरत्यपि ।

पूजाकाले वक्ष्यमाण[9]सङ्केतोक्तसपर्यासमये । प्रयत्नतः—

---

१. महेश्वरि—क० । २. शास्त्रे नोक्ता—ख० । ३. मूलविद्या तथा प्रोक्ता त्रैलोक्यवशकारिणीति—ख० । ४. परं—ख० नास्ति । ५. वेदयिता । मूल—क० । ६. ततो ख्याता कथिता—क० । ७. विद्यानां—क० नास्ति । ८. सृजति यत्र विश्वमिति—ख० । ९. सङ्केते क्रमः पर्यायक्रमः प्रयत्नतः—ख० ।

प्रयत्नस्तदवाप्तौ तु व्यापारोऽतित्वरान्वितः । दी०

इति तन्त्रान्तरोक्तरीत्या श्रद्धावेशतया क्रमेण न्यस्तव्याः । तत्स्थानान्याह्–पादाग्रेति । स्पष्टम् ॥ ६ ॥

आधारे विन्यसेन्मूर्ति पादाग्रादीनां बाध्यत्वेन प्रसिद्धत्वात् पृथक्करणम् आधारमूर्त्यनन्तरद्योतनार्थम् । आधारे पूर्वोक्ते चतुर्दल[1]कमले मूर्ति मूर्तिविद्यां [2]सप्तमीं न्यसेत् । तस्यां मूर्तावेवावाहिनीं न्यसेत् । मूलेन व्यापकन्यासः कर्तव्यः परमेश्वरि । मूलेन नवमचक्रेश्वरीविद्यया सौभाग्यविद्ययेति यावत् । स्पष्टमन्यत् ॥ ७ ॥

(से०) एतासां विद्यानां न्यासयोर्विनियोगमाह—(एवमित्यादि)। अत्र पूजाकाल इत्यनेन पूजामध्यस्थो जपकाल उच्यते। उत्तरपटले हि कालभेदेन चतुर्विधो न्यासो वक्ष्यते । तत्र जपकाले चतुर्थश्चतुर्दशावयवकः करशुद्धयादिको न्यासो विधास्यते । परान्यासोत्तरं चक्रेश्वरीन्यासौ कार्यौ, ''अन्ते तु बादरायणः'' इति न्यायात्, क्लृप्तक्रमेष्वक्लृप्तक्रमोऽभिनव आपतन्नन्ते निवेश्य इति तदर्थात् । अत एव चतुर्णामपि न्यासानां पूजाकाल एव विधिरिति पक्षान्तरेऽपि करशुद्धयादिन्यासान्त एव निवेशः । पूजाकालशब्दो यथाश्रुत एवास्तु न जपकालोपलक्षक इत्याग्रहे त्वणिमादिन्यासोत्तरमेवैतयोर्निवेश इति मन्तव्यम् । एवं पादाग्रयोर्जङ्घयोर्जानुनोरूर्वोर्गुदे लिङ्गाग्रे चेति क्रमेण षड्विद्या न्यस्य मूलाधारे सप्तमीं विद्यां विन्यस्य सप्तम्या उपर्यष्टमीं विद्यां विन्यस्य नवम्या मूलविद्यया सर्वाङ्गे व्यापकन्यासः कर्तव्य इत्यर्थः ॥ ५-७ ॥

**अकुलादिषु पूर्वोक्तस्थानेषु परिचिन्तयेत् ।**
**चक्रेश्वरीसमायुक्तं नवचक्रं पुरोदितम् ॥ ८ ॥**

(दी०) नवचक्रेश्वरीविद्यानां न्यासमुक्त्वा तदाधारभूतनवचक्राणामपि चिन्तालक्षणमान्तरन्यासमाह–अकुलादिष्विति । अकुलादिषु ''अकुले विषुसंज्ञे च'' (यो० हृ० सं० १ श्लो० २५) इत्यत्र पूर्वोक्तस्थानेषु । आदिशब्देनाष्टौ [3]वह्नि–शाक्त–नाभि–अनाहत–विशुद्ध–लम्बिकाग्र–भ्रूवोरन्तर–[4]इन्दवो गृह्यन्ते । पुरोदितं चक्रस[5]ङ्केतोदितं नवचक्रं

१. कमले मूर्ति–ख० नास्ति। २. सप्तमीं–ख० नास्ति । ३. विषुशब्दोऽधिकः क०पुस्तके । ४ यद्यप्यत्र कखयोरुभयोरपि पुस्तकयोः 'रन्तरबिन्दवो' इत्येव पाठस्तथापि स न समीचीन इत्युपेक्षितः । ५. सङ्केतोदितं नवचक्रेश्वरी–क० ।

दी० चक्रेश्वरीसमायुक्तं नवचक्रेश्वर्यधिष्ठितं परिचिन्तयेत् । [1]कोऽर्थः ? अकुले सुषुम्नामू[2]लाम्रणसहस्रदलकमले त्रिपुराधिष्ठितं त्रैलोक्यमोहन-चक्रम्, वह्न्याधारे चतुर्दलकमले [3]त्रिपुरेश्यधिष्ठितं सर्वाशापरि-पूरणं चक्रम्, शाक्ते स्वाधि[4]ष्ठानस्थितषड्दलकमले त्रिपुरसुन्दर्यधिष्ठितं सर्वसंक्षो[5]भणं चक्रम्, नाभौ दशदलकमले त्रिपुरवासिन्यधिष्ठितं सर्व-सौभाग्यदाय[6]कचक्रम्, [7]अनाहते द्वादशदलकमले त्रिपुरा[8]श्रीसम-धिष्ठितं सर्वार्थसाधकं चक्रम्, विशुद्धौ[द्धे] षोडशदलकमले त्रिपुरमालिन्य-धिष्ठितं सर्वरक्षाकरं चक्रम्, लम्बिकाग्रे [9]तालुमूले अष्टदलकमले त्रिपुरा-सिद्ध्यधिष्ठितं सर्वरोगहरं चक्रम्, भ्रूवोरन्तरे द्विदलकमले त्रिपुराम्बिका-धिष्ठितं सर्वसिद्धिप्रदं चक्रम्, इन्दौ ललाटे बिन्दौ महात्रिपुरसुन्दर्य-धिष्ठितं सर्वानन्दमयं चक्रं भावयेदित्यर्थः ॥ ८ ॥

(से०) न्यासान्तरमाह—( अकुलेत्यादि ) । अकुलं विपुराधारं स्वाधिष्ठानं मणिपूरमनाहतं विशुद्धिरिन्द्रयोनिराज्ञा चेति नवस्थानेष्वपि क्रमेण तत्तद्दिग्यान्ते तत्तच्चक्रेश्वरीतत्तच्चक्रनामनी उल्लिख्य न्यसेत् । अं आं सौः त्रिपुरासहिताय त्रैलोक्यमोहनचक्राय नम इत्यादयो मन्त्रा ऊह्याः । बाह्याङ्गेषु तत्तन्मन्त्रान्तेऽनामिकाङ्गुष्ठाभ्यां स्पर्शरूपो न्यासः । आन्तराङ्गेषु तु स्पर्शासंभवाच्चिन्तनरूप एवेत्याशयेन परिचिन्तयेदित्युक्तम् । उक्तं च दक्षिणामूर्तिसंहितायाम्—"पुष्पैर्वाऽनामया वाऽपि मनसा वा न्यसेदणुम्" इति । अत्र च देवताशरीरे न्यासदशायां पुष्पैः, स्वस्य बहिःशरीरे न्यासदशायामनामया, स्वस्यैवान्तः-शरीरे न्यासदशायां मनसेति व्यवस्थितविकल्पार्थो वाशब्द इति सम्प्रदायः । अनामायामङ्गुष्ठयोगो वचनान्तरोपसंहारसिद्धः । नवावयवकं चक्रमिति मध्यम-पदलोपी समासः । श्रीचक्रमित्यर्थः, तेनैकवचनोपपत्तिः । एकवचन-निर्देशप्रयोजनं तु बिन्द्वर्धचन्द्रादिषु द्वितीयवारं नवचक्रेश्वरीमन्त्राणां न्यासो मा प्रसाङ्क्षीदिति । अन्यथा तेषामपि त्रैलोक्यमोहनादिचक्रविभावनस्थलत्वावि-शेषादकुलादिष्वित्यादिपदग्राह्यत्वाविशेषाच्च पुनर्न्यासान्तरप्रसङ्गः । प्राञ्चस्त्वाहुः—नवचक्रमित्येकवचनमार्षमिति ॥ ८ ॥

---

१. कोऽर्थः—ख० नास्ति । २. मूलभागे—ख० । ३. त्रिपुरेश्वरीयुक्तं—ख० । ४. ष्ठाने सित—क० । ५. क्षोभकं—ख० । ६. दायकम्, अ—क० । ७. अनाहते हृदि—द्वादश—ख० । ८. श्रीअधि—क० । ९. तालुमूले—ख० नास्ति ।

[1]तासां नामानि वक्ष्यामि यथानुक्रमयोगतः ।
तत्राद्या त्रिपुरा देवी द्वितीया त्रिपुरेश्वरी ॥ ९ ॥
तृतीया च तथा प्रोक्ता देवी त्रिपुरसुन्दरी ।
चतुर्थी च महादेवी देवी त्रिपुरवासिनी ॥ १० ॥
पञ्चमी त्रिपुरा श्रीः स्यात् षष्ठी त्रिपुरमालिनी ।
सप्तमी त्रिपुरा [2]सिद्धिरष्टमी त्रिपुराम्बिका ॥ ११ ॥
नवमी तु महादेवी महात्रिपुर[3]सुन्दरी ।
पूजयेच्च क्रमादेता नवचक्रे पुरोदिते ॥ १२ ॥

(दी०) [4]पूर्वोक्तविद्यानां नवचक्रेश्वरीणां नामान्याह्–तासामिति । स्पष्टम् । ननु [5]एता विद्या नवचक्रेश्वर्यः [6]पादाग्रादिष्वकुलादिषु स्वस्वस्थानेषु च [7]स्वरूपेण भावनारूपेण क्रमेण न्यस्तव्या [8]एव किम् ? नेत्याह–पूजयेदिति । एताः पुरोदितास्त्रिपुराद्या [9]विद्या नवचक्रे[10]श्वर्यः पुरोदिते "त्रैलोक्यमोहनं[11] चक्रम्" (यो० हृ० सं० १ श्लो० ८३) इत्यादिपूर्वोक्ते । नवचक्रे इत्येकवचनमन्योन्याविश्लेषकथनार्थम् । अकुलादिनवस्थानेष्वन्योन्यसंयुक्ततयैव[12] विभावितेषु नवचक्रेष्वित्यर्थः। क्रमात् पूजयेच्च त्रैलोक्यमोहनं चक्रमारभ्य प्रतिचक्रमेकैकं क्रमेण पूजयेदित्यर्थः ॥ ९-१२ ॥

(से०) तासां चक्रेश्वरीणां क्रमेण नामान्याह—(आसामित्यादि) । तृतीयया सहैक्यभ्रमो मा प्रसञ्जीति नवम्यां महत्पदं विशेषणम् ॥ ९-११ ॥

एतासां चक्रेश्वरीणां श्रीचक्रे क्रमेण पूजामुपदिशति—(पूजयेदित्यादि) । नवेति भिन्नं पदम् । पुरोदिते पूर्वतन्त्रे पूजनीयतया कथिते श्रीचक्रे त्रैलोक्यमोहनादिचक्रक्रमादेता नव चक्रेश्वरीः पूजयेदित्यर्थः । पुरोदितपदेनाकुलादिनवकं परामृश्यत इति प्राञ्चः । तन्न, अतिदेशेनैव प्राप्स्यतोऽर्थस्य पुनरुपदेशवैयर्थ्यात्, प्रत्युतापूर्वताद्यनिष्टापत्तेश्च ॥ १२ ॥

---

१. आसां–ग०, खपुस्तके इदमर्धं नास्ति । २. सिद्धा त्वष्ट–क० । ३. त्रिपुरभैरवी क० । ४. पूर्वोक्तानाम्–क० । ५. एताश्च–ख० । ६. पादादिष्वकुलादिस्थानेषु–ख० । ७. स्वरूपेण–ख० नास्ति । ८. एव नेत्याह–ख० । ९. विद्या–क० नास्ति । १०. चक्रेश्वरीपुरोदितत्रैलोक्य–ख० । ११. मोहनचक्रे इत्यत्र पूर्वोक्ते–क० । १२. तयैव भावि–क० ।

एवं नवप्रकाराद्या पूजाकाले तु पार्वति ।
एकाकारो ह्याद्यशक्तिरजरामरकारिणी ॥ १३ ॥

(दी०) ननु किमासां नवधात्वं[1] स्वाभाविकम् ? नेत्याह-एवमिति । आद्या शिवादिक्षित्यन्तस्य जगतो निदानत्वात्। आद्या शक्तिराद्यशक्तिः । आद्यस्य सकलवर्णादिभूतस्य प्रकाशात्मनः परशिवस्य शक्तिर्विमर्शरूपिणी एकाकारा परा पूजाकाले तेन निरन्तरं सामरस्यमापन्ना अपरा पूजाकाले तु[2] तथा न भवति । एवमुक्तप्रकारेण नवप्रकारा नवविधा भिन्ना एवंविधपूजकस्याजरामरकारिणी, अजरामर उक्तलक्षणः शिवः, तत्त्वमस्य करोति । अत्रैव वक्ष्यति—

नव नित्योदिता पूजा त्रिभिर्भेदैर्व्यवस्थिता । इति ॥ १३ ॥

(से०) (एवमित्यादि)। आद्यस्य शिवस्य शक्तिरप्याद्या पूजाकाले नवप्रकारापि वस्तुत एकाकारैव । एवं ज्ञाता सत्यजरामरत्वं दत्ते । अजरामरेति भावप्रधानौ निर्देशौ ॥ १३ ॥

मन्त्रसङ्केतकस्तस्या नानाकारो व्यवस्थितः ।
नानामन्त्रक्रमेणैव पारम्पर्येण लभ्यते ॥ १४ ॥

(दी०) प्रासङ्गिकमुपसंहृत्य [3]प्रकृतमेव प्रधानं मन्त्रसङ्केतमुद्दिशति-मन्त्रसङ्केतक इति । तस्याः परमशिवसामरस्यरूपायाः परायाः [4]यो मन्त्रसङ्केतको मन्त्रः सौभाग्यविद्यारूपस्तस्य सङ्केतो गूढार्थप्रदर्शनं नानाकारः अनन्तरवक्ष्यमाणषड्विधरूपः । नानामन्त्रक्रमेणेति । अनन्तरं पूर्वोक्तकरशुद्ध्यादिनानाप्रपञ्चपरिपाट्यैव पारम्पर्येण लभ्यते । सोपानावरोहरीत्या शिवादिस्वगुरुपर्यन्तपरम्परोपदेशक्रमेण लभ्यते, नान्यथा । पारम्पर्यविहीनानामसंप्रदायवतां चुम्बकवृत्त्या चं यावगताक्षरपाठमात्रपर्यवस्थितानामनर्थायैव केवलमित्यर्थः । अत्रैव वक्ष्यति—

पारम्पर्यविहीना ये ज्ञानमात्रेण गर्विताः ।
तेषां समयलोपेन विकुर्वन्ति मरीचयः ॥ १४ ॥

---

१. धात्वं तात्त्विकं न वेत्याशङ्क्याह-क० । २. तु-क० नास्ति ।
३. प्रकृतमेव मन्त्रसङ्केतकमुपदिशति--क० । ४. यो मन्त्रः-ख० ।

(से०) (मन्त्रेत्यादि) । तस्या आदिशक्तेर्मन्त्रसङ्केतको नानाकारः । तदीय-विद्यायाः साङ्केतिकार्थः षट्प्रकारः । परन्तु तस्या मन्त्रोऽपि नैकः, येनैकस्यैव मन्त्रस्य षडर्थाः स्युः । किन्तु नानाविधा मन्त्रा लोपामुद्राकामराजादिभेदात् । ततश्च केचिदर्थाः कादिविद्याया एव । केचित्तु हादिविद्याया एव । केचित्तूभय-साधारणाः । संहत्य षड्विधः सङ्केतः । तत्र कस्या विद्यायाः कोऽर्थ इति तु पारम्पर्य-क्रमेणैव व्यवस्था लभ्यत इत्यर्थः । प्राञ्चस्तु हादिविद्याया एव षडर्था इत्यभिमन्य-माना इहत्यं नानामन्त्रपदं चक्रेश्वरीमन्त्रपरत्वेन व्याचक्षते । तदयुक्तम्, चक्रेश्वरी-मन्त्राणामुत्तरत्रार्थवर्णनाभावात्, संप्रदायार्थादेर्हादिविद्यायामलग्नकताया: प्रदर्शयिष्यमाणत्वाच्च, पूर्वतन्त्रे कादिविद्याया एवोद्धृतत्वेन हादिविद्याया एव षडर्थीत्यभिमानस्योपक्रमविरोधेन त्याज्यतया वैपरीत्याभिमानस्यैवापत्तेश्च, पूर्व-तन्त्रग्रन्थस्यापि हादिपरत्वेन लापने क्लृप्ततायास्तत्रैव प्रदर्शितत्वाच्च । तस्माद-स्मदुक्तव्यवस्थैव निष्पक्षपातेति मन्तव्यम् ॥ १४ ॥

षडविध[1]स्तं तु देवेशि कथयामि तवानघे ! ।
भावार्थः सम्प्रदायार्थो निगमार्थश्च कौलिकः ॥ १५ ॥
तथा सर्वरहस्यार्थो महातत्त्वार्थ एव च ।
अक्षरार्थो हि भावार्थः केवलः परमेश्वरि! ॥ १६ ॥

(दी०) उद्दिष्टस्य मन्त्रसङ्केतस्य विभागं प्रतिजानीते—षड्विध इति । षड्विधः अनन्तरवक्ष्यमाणभावार्थादिप्रकारेण षड्विधः, अनघे परशिष्य-त्वादिदोषरहिते, तव मदात्मकायाः विमर्शशक्तेः प्रकाशात्मकोऽहं[2] तं तु षड्विधं कथयामि ।

[3]तद्विभागमाह—भावार्थ इति । वक्ष्यमाणलक्षणत्वात् [4]स्पष्टोऽर्थः । षोढा प्रकारेण लक्षणानि कथयिष्यन्नादौ भावार्थमाह—अक्षरार्थ इति । न क्षरन्तीत्यक्षराणि नित्य[5]परशिववाचकत्वात् । किञ्च ताल्वोष्ठव्यापारा-ऽभिव्यञ्जकस्तेषाम् । अत एवाक्षराण्येवाक्षराणि तेषामर्थोऽभिधेयः । श्रीसौभाग्यविद्याऽवयवपञ्चदशाक्षराणामर्थो भावार्थः ॥ १६ ॥

---

१. षड्विधं तं तु—क० से० । २. त्मकोऽहं कथयामि—ख० । ३. तद्विभागं कथयामीत्यर्थः । भावार्थः—क० । ४. स्पष्टोऽर्थः । तत्रादौ भावार्थस्य लक्षणमाह षोढा विभज्य लक्षणानि—क० । ५. परशिववाचकात् ताल्वोष्ठपुटव्यापारो—क० ।

(से०) वक्ष्यमाणार्थनिकरस्य दुर्गमत्वात्सावधानीकरणाय पुनः प्रतिजानीते—(षड्विधमित्यादि)। तं मन्त्रार्थम्। अर्थं विभजते—(भावार्थ इत्यादि)। तत्र प्रथमोद्दिष्टं भावार्थं विशदयितुकामो भावार्थपदं निर्वक्ति—(अक्षरार्थ इत्यादि)। अक्षराणां हि तावदर्थप्रतिपादकत्वं स्वभावः। ततश्च यः केवलस्तात्पर्यादिनाऽनवगतोऽक्षराणां वृत्त्यैव लभ्योऽक्षरार्थोऽक्षरस्वभावलभ्यत्वात् स भावार्थ इत्युच्यत इत्यर्थः ॥ १५-१६ ॥

**योगिनीभिस्तथा वीरै[1]र्वीरेन्द्रैः सर्वदा प्रिये।**
**शिवशक्तिसमायोगाज्जनितो मन्त्रराजकः ॥ १७ ॥**

(दी०) अक्षरार्थमेवाह—योगिनीभिरिति। योगिन्यो योगः शिवसम्बन्धो नित्यं विद्यते आसामिति योगिन्यो विमर्शशक्त्यंशभूतेच्छाज्ञानक्रिया[2]त्मकभारतीपृथ्वीरुद्राण्यः, वीरा उक्तार्थाः, तद्योगिनीनित्यसम्बन्ध[3]भूताः प्रकाशांशभूता वामाज्येष्ठारौद्र्यात्मकब्रह्मविष्णुरुद्राः सृष्टिस्थितिसंहारकर्तारः, वीरेन्द्राः सृष्टिस्थिति[4]संहारपदा अतीतानाख्याधिकारिणस्ते शान्ताम्बिकात्मानः शिवशक्तिमिथुनत्रयसमष्टिरूपास्त्रिबीजशिखरवर्तिकाम[5]कलात्रयाभिधेया एतैर्विद्याक्षराभिधेयमयैर्मिथुनचतुष्टयैः शिवशक्तिसमायोगाच्छिवशक्त्योः समायोगः सम्पर्क[6]स्तन्मन्त्रराजकः सौभाग्यविद्यारूपः सकलमन्त्रोत्तमत्वाज्जनितो जातः, [7]आदिकर्मणि क्तः, जातो भावित इति यावत्, तस्यार्थस्य नित्यत्वात्। अयमेवार्थो मया सौभाग्यसुभगोदये प्रपञ्चितः। यथा—

सैव महाविद्यात्मा माता चतुरन्वयैकविश्रान्तिः।
चतुराननादिजननी जाता चतुरात्मवर्गफलदात्री ॥
अस्वरविमर्शरूपौ स्वांशौ हित्वा चतुष्कलौ सैव।
वामादीच्छादिमयान्यकरोद् द्वन्द्वान्यमूनि चत्वारि ॥
वामांशो ब्रह्मा स्यादिच्छैव तस्य भारती शक्तिः।
अनयोरेतन्मिथु[8]नं सृष्टिः प्रागवाग्भवात्मकं बीजम् ॥

---

१. वीरेन्द्रैश्च सदा–क० २. क्रियात्मका–क०। ३. सम्बन्धाः प्रका–क०। ४. संहारपदातीतानामाख्याकारिणः–ख०। ५. कलाभिधेयाः तैः–क०। ६. सम्पर्कस्तन्मिथुनीकृत–ख०। ७. आदितः श्रुतः–क०। ८. थुनं शास्ति प्रागन्वयात्मवाग्बीजं–क०।

ज्येष्ठांशो विष्णुः स्याज्ज्ञानं[1] विश्वम्भरा तयोर्मिथुनम्।  दी॰
इदमेव दक्षिणान्वयरूपं श्रीकामराजमध्यास्ते ॥
रौद्र्यात्मकस्तु रुद्रः क्रियामयी शक्तिरस्य रुद्राणी।
युगलमिदं तार्तीयं बीजं पालयति पश्चिमाम्नायम् ॥
स्यादम्बिकास्वरूपः शम्भुः शान्तात्मिकाऽस्य शक्तिः स्यात्।
मिथुनमिदं शिवशक्त्योरुत्तरसमयात्मतुर्यमधितिष्ठेत् ॥
एवमनुत्तरशक्त्योश्चतुरंशद्वन्द्वरूपिणी जाता।
चतुरन्वयात्मिकेयं पश्यन्ती मातृकामयी विद्या ॥
सृष्टिः पूर्वाम्नायो वाग्भवबीजं तदात्मकं त्रिविधम्।
सृष्टिस्थितिसंहारैर्भिन्ना सृष्टिस्त्रिमूर्तिमूर्तिः स्यात् ॥
ब्रह्माऽत्र सृष्टिसृष्टावधिपतिरेतस्य भारती शक्तिः।
[2]सोऽयं हस्यार्थः स्यात्स एव शिवशक्ति[3]वाचकश्चापि ॥
हस्यार्थः स्यादत्र स्वशक्तिमयरूपसार्णसंयोगात्।
सृष्टिस्थितौ तु विष्णुः कर्ता विश्वंभराऽस्य शक्तिः स्यात् ॥
विष्णुः कलिपेरर्थो ललिपेरेतस्य शक्तिरर्थः स्यात्।
रुद्रोऽधिपतिः शक्ती रौद्री [4]स्यात्तत्र सृष्टिसंहारे ॥
[5]हरवर्णयुगलमनयोर्वाचक[6]मर्थोऽत्र रस्य रुद्रः स्यात्।
रुद्राक्षरसम्पर्काद्रौद्री तच्छक्तिरत्र हस्यार्थः ॥
अत्र तु [7]शक्त्यर्णस्य प्राथम्यं शक्तिबीजभूतत्वात्।
अधिवसतः शिवशक्ती [8]संज्ञानाख्या तयोस्तु[9]त्रित्वमर्था ॥
कामकलाकलयित्री [10]तुर्यमयी रक्तशुक्लमिश्रतनुः।
रक्तो बिन्दुः शक्तिः शुक्लः शम्भुः परस्तदैकात्म्यम् ॥
एवं द्वितीयबीजं स्थितिरूपं दक्षिणान्वयात्म स्यात्।
स्थितिसृष्ट्यादिविभेदाद्वसन्ति ता एव देवतास्तत्र ॥
अत्र कलवर्णमध्यस्थितो हकारः स्थितिस्वरूपत्वम्।
अस्य द्योतयति [11]परं स्थितिरूपं संविदम्बिकाकारः ॥

---

१. ज्ञाना–क॰। २. सेयं सस्यार्थः–क॰। ३. वाचकस्यापि–क॰। ४. स्यादत्र–क॰। ५. हसवर्ण–क॰। ६. मर्थोऽक्षरस्य–क॰। ७. शक्तिर्न स्यात्–क॰। ८. सत्यज्ञाना–क॰। ९. स्तुतत्रिमर्या–ख॰। १०. तुरीयमर्या–क॰। ११. परध्वनिरूपः संविदम्बराकारः–ख॰।

६० संहारात्मकपश्चिमसमये [1]तद्वदेव तार्तीयम् ।
संहृतिसृष्ट्यादिवशात् [2]सन्ति ता एव देवतास्तत्र ॥
सृष्टौ शक्तेर्नियत[3]प्राधान्यादस्य शक्तिबीजत्वात् ।
स्वात्मनि संहृतिसृष्टौ शिवमन्तर्भाव्य विभासते शक्तिः ॥
त्रिमये तुरीयबीजे[4]ऽनाख्यारूपोत्तरान्वयात्मनि तौ ।
शक्तिशिवावधिवसतो निरन्तरं सामरस्यमापन्नौ ॥
सृष्ट्यादिभेदभिन्नश्रीविद्यावर्णयुगलनवकात्मा ।
नवनादवर्गरूपा माता सा [5]मध्यमाऽभिधा वितता ॥
शब्दस्पर्शौ रूपं रसगन्धौ चेति भूतसूक्ष्माणि ।
व्याप्यव्यापकभावात्पञ्चदश स्युः क्रमेण तत्सङ्ख्याः ॥
तिथयश्च कला नित्यास्तदात्मिकाः स्युस्तथैव तत्सङ्ख्याः ।
वर्णैः समष्टिरेषा विद्या व्याप्नोति तानि सर्वाणि ॥
सर्गादिसमष्टिरूपः [6]स्वांशैरेभिस्तदात्मना विततः ।
सर्गेण कादिवर्णैरपि षट्त्रिंशद्भिरात्मनोऽवयवैः ॥
पुनरज्व्यञ्जनबिन्दुभेदभिन्नांस्तदक्षरावयवान् ।
षट्त्रिंशत्सङ्ख्याकांस्तत्त्वमयानश्नुते हि सा माता ॥
व्यष्टिसमष्टिविभेदैश्चतुरात्मा तत्त्वबीजपीठमयी ।
चतुरन्वयात्मनाऽपि च [7]मातात्रष्टकमातृकामयी विद्या ॥

(से०)अथ तमेवार्थं प्रतिपादयति नवभिः श्लोकैः–(योगिनीभिरित्यादि)। योगिन्यो विमर्शांशभूतेच्छाज्ञानक्रियात्मिकाः सरस्वतीपृथिवीरुद्राण्यस्तिस्रः, बहुवचनस्य कपिञ्जलन्यायेन त्रिसंख्यापरत्वात् । वीरा उपासका अशुद्धमिश्रशुद्धभेदेन त्रयः । वीरेन्द्राः प्रकाशांशभूतवामाज्येष्ठारौद्रयभिन्ना ब्रह्मविष्णुरुद्रास्त्रयः । "त्रितयभोक्ता वीरेशः" इति शिवसूत्रे, "जागरादिधामत्रयेऽप्यप्रच्युतस्वात्मानुसन्धानो वीरेशः" इति लक्षणकथनात् । "उपचाराश्चलत्वेऽपि तन्मयत्वाप्रमत्तता" इति तन्त्रराजेऽप्ययमेवार्थ उक्तः । तेन तादृशवासनादार्ढ्यशीला वीरेन्द्राः । तादृशवासनाशैथिल्यात्तारतम्येन त्रिविधा वीरा उच्यन्त इत्युक्तं भवति । शिवशक्त्योः समायोगः

१. तत्तद्वदेव तार्तीये–ख० । २. ता एवात्रापि देवता न्यवसन्–ख० । ३. प्राधान्याच्चास्य–ख० । ४. बीजेऽनाख्ये–क० । ५. मध्यमा वितता विमला–क० । ६. स्वांशैरणुभिः–ख० । ७. वितता सा मातृका–क० ।

सामरस्यं चैकम्, एवं दश। एतैरयं मन्त्रराजो जनितः। एतद्वाचकाक्षरदशक- घटित इत्यर्थः। अयं भावः—अस्यां हि विद्यायां पञ्चदशाक्षराणि। तेषु हृल्लेखाक्षरत्रयं देव्या वाचकत्वेन प्रसिद्धार्थकमेव, "ह्रींकारवाच्या ह्रींकारवेद्या" इति नामत्रिशत्यां कथनात्। तत्परत्वोपपादनं च तन्त्रराजे— सें०

व्योम्ना प्रकाशमानत्वं ग्रसमानत्वमग्निना।
तयोर्विमर्श ईकारो बिन्दुना तन्निफालनम्॥ इति।

द्वितीयतृतीयकूटयोरेकैकमक्षरं हकारसकाररूपं त्वग्रे मूल एव व्याख्यास्यते। अतोऽवशिष्टान्यक्षराणि दशैवेत्याशयेन दशभिरेव मन्त्रघटनमुक्तम्। एवं चैकैकस्मिन्कूटे यावन्त्यक्षराणि तेषां योगिन्यादयो यथायथमुक्ता येऽर्थास्तेषां हृल्लेखोपस्थितदेव्या सह सामानाधिकरण्यवशादभेद एकैककूटार्थः। सामानाधिकरण्यं चेह विरुद्धविभक्तिमत्त्वाभावरूपं दधिमध्वित्यादाविव। तत्र ककारत्रयं ब्रह्मादिपरम्, लकारत्रयं पृथिव्यादिपरम्, हकारसकारावीकारश्च वीरपराः, एकाक्षरकोशादिना लक्षणया वा तत्तत्परताया विद्वद्भिः सूपपादत्वात्। एकारः सामरस्यपरः, शिवशक्तिवाचकयोरकारेकारयोर्योगेन जनितत्वात्। अथवाऽस्यां विद्यायां सप्तत्रिंशदक्षराणीत्युत्तरत्र वक्ष्यते। तेषु च पुनरुक्तपरिहारेण गणनायां दशैव शिष्यन्ते—अकारो लकारः सकारो हकार ईकार एकारो रेफः ककारो नादो बिन्दुश्चेति। किं बहुना, सर्वविद्यासु श्रीविद्यास्वप्येतावन्त एव वर्णाः। तदुक्तं ज्ञानार्णवे—

भूमिश्चन्द्रः शिवो माया शक्तिः कृष्णाध्वमादनौ।
अर्धचन्द्रश्च बिन्दुश्च नवार्णो मेरुरुच्यते।
महात्रिपुरसुन्दर्या मन्त्रा मेरुसमुद्भवाः॥ इति।

एष्वकार एको व्यञ्जनैः सह पार्थक्याभावाभिप्रायेण न पृथग्गणितः। लकारादयस्तु भूम्यादिपदैः क्रमेण गणिता एव, अतो न दशसंख्याविरोधः। ततश्चैते दशवर्णा यथायथं योगिन्यादिवाचकत्वेन व्याख्येयाः। वर्णपुनरुक्तिश्च व्यक्तिबहुत्वाभिप्रायेणोपपाद्या। तेष्वेकारस्य चरमनिर्देशाद्विशेष्यबोधकत्वं स्वीकृत्य योगिन्याद्यभिन्नं शिवशक्तिसामरस्यात्मकं ब्रह्मेति वाक्यार्थः। अनयोश्च पक्षयोरुत्तरोऽष्टश्लोक्यात्मको ग्रन्थसन्दर्भः सर्वोऽपि प्राचां पक्ष इव विद्यायाः स्तुत्यर्थ एव। वस्तुतस्तु—"अक्षरार्थो हि भावार्थः" इत्यादावुपक्रम्यान्ते "भावार्थ इति मन्वते" इत्युपसंहारान्मध्ये द्वितीयतृतीयकूटयोः परामर्शाच्च लिङ्गादयं ग्रन्थसन्दर्भः सर्वोऽपि प्रतिकूटमक्षरशोऽर्थप्रतिपादनपर एव, नात्र स्तुतिमात्रपरत्वाव-

से० काश इति स्पष्टं प्रतीयते। तथा चायं श्लोकः प्रथमकूटमात्रस्यार्थप्रतिपादनपरः। ततश्चैकैकः ककारादिवर्णो वीरेन्द्रादिपरः। ककारादित्रयं प्रत्येकं बहुवचनान्तमिति द्योतनाय योगिनीभिरित्यादीनि बहुवचनान्तानि त्रीणि पदानि। एकारस्त्वेकवचनान्त एवेति द्योतनाय समायोगादित्येकवचनम्। हृल्लेखया विशेष्यलाभः। तेन योगिनीस्वरूपा वीरस्वरूपा वीरेन्द्रस्वरूपा शिवशक्तिसामरस्यस्वरूपा त्रिपुरसुन्दरीति प्रथमकूटार्थ इत्युक्तं भवति। काश्च एश्च यश्च लाश्चेति द्वन्द्वोत्तरं ह्रींकारेण कर्मधारयः। "हल्ङ्यादिना" सुलोपः, समासेऽपि सन्ध्यभाव आर्षः। ककारादीनां भिन्नपदत्वस्वीकारेऽप्येकारलकारयोः सुलोप आर्षः ॥ १७ ॥

**तन्मयीं परमानन्दनन्दितां स्पन्दरूपिणीम् ।**
**निसर्गसुन्दरीं देवीं ज्ञात्वा स्वैरमुपासते ॥ १८ ॥**

(दी०) तुर्यमन्त्रस्यार्थमाह—तन्मयीमिति। [1]तन्मयीं भारत्यादित्रह्मादि-[2]मिथुनत्रयवाचकबीजत्रयसमष्टिरूपां [3]तुरीयमन्त्रवाच्यां परमानन्दनन्दितां परमशिवसामरस्यपरिस्फुरत्परमानन्द[4]निर्भरां स्पन्दरूपिणीं शिवादिक्षित्यन्तषट्त्रिंशत्तत्त्व[5]स्पन्दरूपेण व्यक्तनिजविभवां निसर्गसुन्दरीं सर्वप्राणिष्वात्मतया [6]परप्रेमास्पदीभूतां देवीं महात्रिपुरसुन्दरीं प्रकाशविमर्शसामरस्यरूपिणीं परां ज्ञात्वा [7]स्वात्मतया स्वैरमुपासते स्वातन्त्र्येण विहरन्ति, स्वैराचारपरा भवन्तीत्यर्थः। अत्रैव वक्ष्यति—

स्वैराचारेण सम्पूज्या त्वहन्तेदन्तयोः समा। इति ॥ १८ ॥
(यो० हृ० सं० १ श्लो० २५)

(से०) एतदेवोपपादयंस्तृतीयकूटं व्याचष्टे—(तन्मयीमित्यादि)। तन्मयीं योगिन्यादिचतुष्टयाभिन्नाम्। अधममध्यमवीराभेदाद् दुःखसंपर्को मा प्रसाङ्क्षीदत आह—परमेति। परमत्वं दुःखासंपृक्तत्वं तादृशानन्देन नन्दितां हृष्टां युक्तामभिन्नामिति यावत्। स्पन्दः षट्त्रिंशत्तत्त्वात्मकं विश्वम्, तद्रूपिणीं तदभिन्नाम्। असुन्दरेणापि पदार्थेनाभेदादसुन्दरत्वं स्यादत आह—निसर्गसुन्दरीं स्वभावमधुराम्। अयं तृतीयकूटलभ्योऽर्थः, उत्तरत्र तृतीये पिण्डके पुनरित्युपक्रम्य कथिता विश्वरूपिणीत्यन्तेनास्यार्थस्य विवरणाल्लिङ्गात्। हृल्लेखया देवीमनूद्य

---

**१. तन्मयीम्। ब्रह्मादि–क०। २. चतुर्मिथुनवाचक–क०। ३. तुरीयमन्त्रवाच्यां–ख० नास्ति। ४. शालिनीं–ख०। ५. स्पन्दरूपिणीम् अध्वत्रयनिज–ख०। ६. पर–ख० नास्ति। ७. स्वा–ख० नास्ति।**

-सकलपदेन सर्वस्याभेदो विधीयते। सर्वं खल्विदं ब्रह्मेत्यर्थः। सकलपदे विभक्ति- से०
लोप आर्षः। समासाङ्गीकारे त्वेकप्रसरताभङ्गः। उद्देश्यविधेयभावानङ्गीकारेऽप्यदोषो वा। हृल्लेखालभ्यमर्थमाह—देवीमिति। ईदृशीं देवीं मन्त्रतो ज्ञात्वा जानन्तः शाब्दबोधविषयीकुर्वन्तः साधकाः स्वैराचार यथातथोपासते भावयन्ति। मुखं व्यादाय स्वपितीतिवत् समानकाले क्त्वा ॥ १८ ॥

**शिवशक्त्यात्मसंघट्टरूपे ब्रह्मणि शाश्वते ।**
**तत्प्रथाप्रसराश्लेषभुवि त्वैन्द्रोपलक्षिते ॥ १९ ॥**
**[1]ज्ञातृज्ञानमयाकारमननान्मन्त्ररूपिणी ।**
**तेषां समष्टिरूपेण पराशक्तिस्तु मातृका ॥ २० ॥**

(दी०) मन्त्रशब्दार्थमाह—शिवशक्त्यात्मेति। शिवशक्त्यात्मसंघट्टरूपे शिवशक्त्यात्मनोः प्रकाशविमर्शमययोः सङ्घट्टः सामरस्यं तद्रूपे, ब्रह्मणि 'बृह् वृद्धौ' इत्यस्माद्धातोर्बृंहणत्वादात्मैव ब्रह्मेति वैयाकरणोक्तरीत्या सर्वप्राणिष्वात्मनि शाश्वते भूतभविष्यत्कालशालिनि, तत्प्रथाप्रसराश्लेषभुवि तच्छब्देन प्रकाशात्मा परामृश्यते। तदुक्तं श्रीभगवद्गीतायाम्—

ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः। इति।

[2]तस्य शिवस्य [3]प्रकाशमयस्य प्रथा विमर्शशक्तिः। यथा [4]दीपस्य प्रभा तद्वत्तस्याः प्रसरः षट्त्रिंशत्तत्त्वात्मना परिणामः, तस्याश्लेषः शिवस्तावन्मात्रस्य पर्यवसानं तस्य भुवि विश्रान्तिस्थाने। अत्र श्रुतिः—"सर्वं खल्विदं ब्रह्म" इति[5]। "तज्जलानिति शान्त उपासीत" इति। [6]ऐन्द्रोपलक्षितं [7]'इदि परमैश्वर्ये', परमैश्वर्यवानिन्द्रः। अत्र श्रुतिः—"इन्द्रो मायाभिः पुरुरूप ईयते" इति। तत्सम्बन्धि ऐन्द्रं कर्म तेनोपलक्षिते। काकवद्देवदत्तगृहमितिवद्विश्वसर्जनादिव्यवहारोऽस्योपलक्षणं न तु स्वरूपधर्म इति यावत्। प्रकाशविमर्शसामरस्यरूपे नित्ये विश्वसृष्टिस्थितिसंहारकारिणि [8]साक्षिणि तत्प्रकृ-

---

१. ज्ञातृज्ञानमयाकारकरणान्मन्त्ररूपिणीम्–ख० ग०। २. तस्य–ख० नास्ति। ३. प्रकाशस्य–ख०। ४. दीपस्य तत्प्रथायाः प्रसरः–ख०। ५. इति। तज्जलानिति शान्त उपासीत इति–क० नास्ति। ६. तत्रोप–ख०। ७. इदि परमैश्वर्ये–ख० नास्ति। ८. साक्षिणि–ख० नास्ति।

दी० त्यात्मकमहदैश्वर्यपरामृष्टे परमात्मनि विषये [1]ज्ञातृज्ञानमयाकारमननाद् [2]ज्ञातुरादरनैरन्तर्यपाटवाभ्याससद्भावतत्प्रकर्षलक्षणमननात्तन्मयाकारभावनालक्षणत्राणान्मन्त्ररूपिणी। कोऽर्थः ? उक्तविशेषण[3]विशिष्टपरप्रकाशविषयमननात् स्वसाधकं तन्मयरूपताप्रतिपादनेन त्रायत इति निरुक्त्या तुरीयलक्षणमहामन्त्ररूपिणीयमित्यर्थः। ननूक्तविशेषणविशेषिता तुर्यमन्त्र[4]रूपिणीयं किं विशिष्टलक्षणेत्यत आह—तेषामिति। तन्मयीमिति पूर्वोक्तमेव तेषां ब्रह्मादीनां भारत्यादीनां च सृष्ट्यादिसमष्टिरूपलक्षणेन लक्षिता परा शक्तिः। तुरवधारणे। परा शक्तिरेव।

न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते।
पराऽस्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च॥

इति श्रुतिप्रतिपादिता परैव मातृका अखिलमनाहतमूर्त्तिमत्युत्तीर्णस्वरूपिणी भवति।

कायति नानानामप्रपञ्चरूपेण मातृका देवी।

[5]इत्यस्मद्गुरूक्तरीत्या [6]परा मातृका पश्यन्ती-मध्यमा-वैखरी-रूपेण व्यापृता। अत्र श्रुतिः—

चत्वारि वाक्परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति॥

[7]अयमर्थः—ब्रह्मादिभारत्यादिसमष्टिरूपतालक्षणा पश्यन्ती-मध्यमा-वैखरी-रूपविस्तारप्रकाशविमर्शसामरस्य[8]रूपा तुरीयमन्त्रवाच्येति॥ १९-२०॥

---

१. ज्ञातृज्ञानमयाकारमननात्—ख० नास्ति। २. ज्ञातुरानन्दनैरन्तर्याभ्यासतद्वासना[त]त्प्रकर्ष—क०। ३. विशिष्ट—ख० नास्ति। ४. रूपिणी किंलक्ष—ख०। ५. इत्यस्मदुक्त—ख०। ६. परा—ख० नास्ति। ७. वदन्ति इति एवमर्थः—ख०। ८. रूपा तुरीयमन्त्रपदवाच्येति—ख०।

(से०) मध्यमकूटस्यार्थमाह—( शिवेत्यादि )। शिवशक्त्यात्मको यः संघट्टः सामरस्यं तद्रूपे ब्रह्मणि विषये ज्ञातुर्ज्ञानमयाकारश्चिन्मयत्वं तत्करणाद्धेतोर्मन्त्ररूपिणीं मन्तारं त्रायत इत्येतदर्थकमन्त्ररूपाम्, देवीमिति पूर्वेणान्वयः। एतेन "चित्तं मन्त्रः" इति शिवसूत्रम्, "चितिरेव चेतनपदावरूढा चैत्यसङ्कोचिनी चित्तम्" इति शक्तिसूत्रं चोपपद्यते। ब्रह्मविषयकज्ञानं तु न सविकल्पकमिति ध्वननाय तत्प्रथेत्यादि। तस्य ब्रह्मणः प्रथा प्रसरो विस्तृतत्वं विश्वमिति यावत्, तदाश्लेषभुवि तत्सम्बन्धाधारेऽप्यैन्द्रेणेष्टशैश्वर्येणोपलक्षितं न तु विशिष्ट इति तदर्थः। विश्वजनकत्वादिधर्मविशिष्टविषयकत्वस्योपलक्षितपदेन निरासाद्धर्मिमात्रविषयकत्वरूपाखण्डत्वं ज्ञानस्य सिध्यति। अखण्डत्वञ्च सविकल्पकप्रज्ञाविलक्षणविषयिताशालित्वम्। एवमुक्त्या च मध्यकूटस्य च्छायाव्याख्याता। हकारः शिवः। सकारः शक्तिः।

कत्रयं हद्वयं चैव शैवो मार्गः प्रकीर्तितः।
शक्त्यक्षराणि शेषाणि ह्रींकार उभयात्मकः॥

इति ब्रह्माण्डपुराणात्। आत्मपदेन सामरस्यस्योभयाभेदात्मकत्वसूचनादनयोरक्षरयोः कर्मधारयो ध्वनितः। हं च तत्सं च हंसः परस्परसमरसापन्नशिवशक्तिरूपम्। ब्रह्मणीति तु ककारस्यार्थः, "कं ब्रह्म" इति श्रुतेः। तुपदेन हंसस्य ककारेण सह कर्मधारय उक्तः। हसं च तत्कं च हसकं समरसशिवशक्त्यात्मकं ब्रह्म। तत्प्रथेत्यादिना हसकपदस्य लक्षणया धर्मिमात्रपरत्वं न तु शक्यतावच्छेदकविशिष्टपरत्वमुक्तम्। हसकं हन्तीति हसकहा तादृशब्रह्मविषयकज्ञानवान्, हन्तेर्गत्यर्थतया ये गत्यर्थास्ते ज्ञानार्था इत्यनुशासनेन च तथोपपत्तेः। सोऽयं समासो ब्रह्मणीति विषयसप्तम्योक्तः। हन्तेर्ज्ञानार्थकत्वं ज्ञातुरिति पदेन ज्ञापितम्। हसकहनं लाति आदत्ते स्वाभिन्नं करोतीति हसकहला। तदिदं ज्ञानमयाकारकरणादित्यनेन ध्वनितम। तस्य हृल्लेखया समासे पुंवद्भावे रूपसिद्धिः। सोऽयमवयवश उक्त एवार्थः संक्षिप्य मन्त्ररूपिणीमित्यनेनोक्तः। इत्थञ्च—

शिवशक्त्यभिदारूपा ब्रह्मविष्णुहरात्मिका।
वाण्यपर्णारमारूपा त्रिविधोपासकात्मिका॥
मिथःसमरसापन्नशिवशक्त्युभयात्मनः।
ब्रह्मणो निर्विकल्पज्ञमाददाना निजात्मना॥
सर्वतत्त्वात्मिका देवी महात्रिपुरसुन्दरी। इति भावार्थः।

तदिदमाह—(तेषामित्यादि)। तेषामेकैककूटार्थत्वेन वर्णितानां विशेषणानां समष्टिरूपेणैकीकृत्य योजनेन पराशक्तिर्माता मन्त्रार्थो भवतीत्यर्थः॥ १९-२०॥

मध्यबिन्दुविसर्गान्तः समास्थानमये परे ।
कुटिलारूपके तस्याः प्रतिरूपे वियत्कले ॥ २१ ॥
मध्यप्राणप्रथारूपस्पन्दव्योम्नि स्थिता पुनः ।
मध्यमे मन्त्रपिण्डे तु तृतीये पिण्डके पुनः ॥ २२ ॥
[1]राहुकूटाद्वयस्फूर्जच्चलत्तासंस्थितस्य तु ।
धर्माधर्मस्य वाच्यस्य विषामृतमयस्य च ॥ २३ ॥
वाचकाक्षर[2]संयोगात् कथिता विश्वरूपिणी ।
तेषां समष्टिरूपेण [3]पराशक्तिं तु मातृकाम् ॥ २४ ॥
कूटत्रयात्मिकां देवीं समष्टिव्यष्टिरूपिणीम् ।
आद्यां शक्तिं भावयन्तो [4]भावार्थमिति मन्वते ॥ २५ ॥

(दी०) नन्वियमकारहकारसामरस्यरूपा परैव तुरीयमन्त्र [5]विशेषणविशेषिता तुरीयपदवाच्येत्युक्तम् । तद्वर्णद्वयं [6]मन्त्रेषु कुत्र कुत्र निवसतीति चेत्, एतन्मन्त्रस्य तद्वर्ण[7]द्वयवाच्यायाः परायाश्च कः सम्बन्ध इत्यत आह—मध्येति । तस्याः परायाः मध्यबिन्दुविसर्गान्तसमास्थानमये । मध्यबिन्दुरूर्ध्वबिन्दुरकारहकारसामरस्यरूपः कामाख्यः । तदुक्तं कामकलाविलासे—

बिन्दुरहङ्कारात्मा रविरेतन्मिथुनसमरसाकारः ।
कामः कमनीयतया······· ········ ······॥ इति ।

[8]विसर्गस्तन्निरासरूपो बिन्दुद्वयात्मकः । अकारः षोडशस्वरः । तदुक्तं तत्रैव–"कला च दहनेन्दुविग्रहौ बिन्दू" इति । तयोरन्तः [9]कामस्य कलायाश्च द्वयोरपि मध्ये समास्थानमये [10]निरासरूपे परे अहाक्षरे । वर्णानामाद्यन्तत्वादन्त्यापेक्षया आदेरकारस्य परत्वमाद्या-

१. राहुकूटद्वय–क० ख० । २. संयुक्ते–क० ख०, संयुक्तेः–ग० से० । ३. पराशक्तिस्तु मातृका–ख० । ४. भावार्थ इति–ग० से० । ५. विशेषणविशेषिता तुरीयपद–ख० नास्ति । ६. मन्त्रे कुत्र नि–ख० । ७. द्वयवाच्यायाश्च–ख० । ८. विसर्गस्य बिन्दुन्यासरूपं बिन्दुद्वयं नत्त्वः(? तत्त्वा)कारः । तदुक्तं–ख० । ९. कामाख्यस्य कलयोर्द्वयोरपि–ख० । १०. निवास–ख० ।

पेक्षयाऽन्त्यस्य हकारस्य परत्वम्। तेन परे [1]अक्षरे वर्णानामाद्यन्ते दी० अकारहकाररूपे अक्षरे कथ्येते। कुटिलारूपके कुटिले अकुलकुलकुण्डलिन्यौ कुटिलरूपत्वाद् एते एव रूपे ययोस्तयोः प्रतिबिम्बरूपे वियत्कले, वियच्छब्देन शून्यं लक्ष्यते। तेन वियद् बिन्दुः, कला बिन्दुद्वयमात्रावती हकारलिपिः। कोऽर्थः? [2]अकारः [3]शिवशक्तिसामरस्यरूपाकारस्तद्व्यासरूपकलाक्षरावयव[4]रूपबिन्दुद्वयान्तर्गतमात्रारूपे निवसति। [5]अहौ एव द्वे अप्यक्षरे अकुलकुलकुण्डलिनीरूपे पराया रूपे तदवयवत्वात्तयोः परारूपयोः प्रतिबिम्बरूपे अहकाराक्षरे अकारहकारयोः [6]स्फुरणत्वादित्यर्थः॥ २१॥

मन्त्रनिदानभूतकामकलायाम् अकारहकारयोः स्थितिमिह उत्पाद्य इदानीं मन्त्रे तद्वर्णद्वयस्य स्थितिक्रमेण [7]वासनामाह—मध्यप्राणेति। मध्यमे मन्त्रपिण्डे वाग्भवशक्तिबीजयोर्मध्यगते कामराजबीजाख्ये षडक्षरपिण्डे मध्यप्राणप्रथारूपस्पन्दव्योम्नि स्थिता। [8]पुनर्मध्यः प्राणः कामकलाशोणबिन्दुमध्यगतप्राणो हकारः, तस्य प्रथा पृथुत्वेन प्रतीतिः, श्रुतिगोचरत्वात् तद्रूपस्पन्दव्योम हकारः, तस्मिन् व्योम्नि पुनः स्थिता हकारस्य विमर्शशक्तेः स्फूर्तिमयत्वात्। तदुक्तं सङ्केतपद्धत्याम्—

हकारोऽन्त्यकलारूपो विमर्शाख्यः प्रकीर्तितः। इति।

तृतीये पिण्डे शक्तिबीजाख्ये चतुरक्षरपिण्डे पुनस्त्वर्थे। द्वितीयबीजवत् स्फुटीभावे न स्फुरति। किन्तु राहुकूटद्वयस्फूर्जत्। राहुकूटः शषसहानां वर्णानां [9]वर्गकूटो वर्णसमूहः। यथा पञ्चकूटः षट्कूट इति। राहुकूटे अद्वयो वर्णो द्वितीयादन्यः, तृतीयः सकारः, तद्वर्गतृतीयवर्णत्वात्, पोढान्यासे शषसहा राहुवर्गः। अत्रैव वक्ष्यति—

वक्रेशादिचतुर्वर्णैः सहितं राहुमेव च। इति।

---

१. अक्षरे पिनामा–ख०। २. अकारः–ख० नास्ति। ३. शिवशक्तिसामरस्यरूपमायोर्बिन्द्वन्तर्गतो निवसति हकारः तस्य व्यासरूपकला–ख०। ४. रूप–ख० नास्ति। ५. अहौ एव–क० नास्ति। ६. स्फुरणमस्फुरितत्वा–ख०। ७. वासनां–ख० नास्ति। ८. पुनः–ख० नास्ति। ९. वर्गः। तथा च पञ्चकूटं षट्कूटमिति। राहुकूटे–ख०। तत्रैव 'पञ्चकूटं षट्कूटमिति' दर्शनं च।

दी० पुना राहुकूटद्वयस्फूर्जदिति। राहुकूटे तृतीयसकारोपरि अविभागेन स्फूर्जत् प्रकाशमानं सकलवर्णाद्यम अनुत्तरम् अक्षरम्। तदुक्तं सङ्केतपद्धत्याम्—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः। इति।

[1]कोऽर्थः? परावयवभूतावकारहकारावेव कामकलोर्ध्वं बिन्दौ मात्रायां [2]च स्थित्वा पुनः स्थूलभावमासाद्य पृथग्भूतौ कामराजबीजान्तर्गतककारलकारमध्यगतहकारे शक्तिबीजादिभूतसकारादूर्ध्वगताकारे चाधिवसत इत्यर्थः। ननु [3]प्रथमपिण्डे विद्यमानेऽपि मध्यपिण्डे तृतीयपिण्डे च परावयवभूतयोरकारहकारयोः कथमवस्थानमुक्तम्? प्रथमबीजे[4] किमिति नोक्तम्? उच्यते। दक्षिणश्रोतःपक्षपातिन्याः सौभाग्यदेवतायाः परायाः परा[5]परशक्तिप्रधानत्वात् स्थितेश्च परापरशक्त्यधिष्ठितत्वान्मध्यबीजस्य स्थितिरूपत्वादत्र विमर्शशक्तेरेव स्थानमुक्तम्। शिवस्य संहाररूपत्वाच्छक्तिबीजस्य च संहारात्मकत्वात्प्रकाशस्य तत्रावस्थानमुक्तं विशेषेण। सामान्यतस्तु वाग्भवे। अत एव तदक्षर[6]द्वयसम्बन्धाद्विश्वरूपत्वञ्चेति न परायाः कथितमित्याह—चलत्तेति। चलतो भावश्चलत्ता तस्यां संस्थितस्य, चलत्वं नामात्र [7]नश्वरम्। अत्र विशिष्टक्रियाविद्याचक्रतत्त्वादिसकलप्रपञ्चस्थितस्य धर्माधर्मस्य पूर्वोक्तनिर्वचनधर्माधर्मपदवाच्यस्य शिवशक्तिद्वयस्य विषामृतमयस्य च[8] विषं संसारः, मोहहेतुत्वात्। अमृतं मृतं[9] मरणं तद्रहितत्वान्मुक्तिः। अत्र श्रुतिः—"तमेवं विद्वानमृत इह भवति" इति, तन्मयस्य तदुभयहेतुत्वात्। तयोर्वाच्यस्याभिधेयस्य वाचकाक्षर[10]संयोगादेतदुभयात्मकशिवशक्तिमयवाच्यवाचकाकारहकारसंयोगाद्विश्वरूपिणी विद्याचक्रतत्त्वादिमयरूपिणी। अत एव [11]च तेषां सर्वेषां समष्टिरूपेण [12]त्रित्रिमयेन सर्वेण पराशक्तिं विश्वोत्तीर्णस्य [13]परमशिवस्य मातृकामुक्तनिर्वचनां [14]कूट-

१. कोऽर्थः—ख० नास्ति। २. चेति—ख०। ३. प्रथमपिण्डे विद्यमानेऽपि—ख० नास्ति। ४. बीजे तु नोक्तं—क०। ५. पर—क० नास्ति। ६. द्वयसम्भवात्। तद्विश्वमयत्वं न परायाः—ख०। ७. नश्वरमात्रावशिष्टक्रियामयविद्या—क०। ८. च—ख० नास्ति। ९. मृतिर्मरणं—क०। १०. संयुक्तस्य—ख०। ११. च—ख० नास्ति। १२. त्रित्रिमयेण—ख०। १३. परशिवस्य—ख०। १४. कूटत्रयात्मिकां—ख० नास्ति।

त्रयात्मिकां वाग्भवकामराज[1]शक्तित्रयात्मिकां देवीं प्रकाशविमर्शसामरस्यरूपाम्। अत एव समष्टिव्यष्टिरूपिणीं ([2]सामरस्याकारेण समष्टिरूपिणीं कूटत्रयात्मना व्यष्टिरूपिणीमिति)। दी०

आद्यां शक्तिं सकलजगदादिभूततयेति पूर्वोक्तक्रमेण भावयन्तो योगिनो भावार्थं मन्वते॥ २२-१

(से०)इदानीं देव्यां मन्त्राभिन्नत्वविश्वाभिन्नत्वयोरुक्त्या मन्त्रविश्वयोः प्रसक्तं मृदभिन्नघटशरावयोरिवाभेदमेकोपादानोपादेयत्वेनोपपादयन् दर्शयितुमाह—(मध्येत्यादि)। कामकलायां ह्यादौ तुरीयबिन्दुस्तदधः कामाख्यो बिन्दुस्तदधो विसर्गाख्य बिन्दुद्वयं तदधो हार्धकलेति स्थितिः। तुर्यविसर्गयोर्मध्ये यो बिन्दुः कामाख्यः स च विसर्गश्च तयोरन्तश्चैतन्यात्मना सम्यगास्थानं ययोस्तन्मये ये द्वे अक्षरे कामान्तर्गतोऽकारो विसर्गान्तर्गतो हकारश्च। परन्तु ते द्वे अपि न वैखरीरूपे, अपि तु परे परामातृकारूपे, शून्याकारे इति यावत्। मातृकाद्यन्तगे इत्यर्थ इति केचित्। ते एते कुटिलारूपके वक्रारूपे वामारूपे सृष्टिजनके इति यावत्। अकुलकुलकुण्डलिनीरूपे इति केचित्। तस्या देव्याः प्रतिरूपं रूपान्तरे अर्थशब्दात्मके परब्रह्मणो द्वे रूपे। तत्रैते अक्षरे शिवशक्त्योः शब्दात्मकरूपे कुलकुण्डलिन्या रूपान्तरे इति केचित्। तत्कुटिलारूपके इत्यनेन पुनरुक्तम्। ईदृशबहुविशेषणैर्निर्दिष्टे अक्षरे नाम्नाऽपि निर्दिशति—वियत्कले इति। वियद् हकारः। कलाप्रकाशोऽकारः, अकारोविकारे "प्रकाशः परमः शिवः" इति कोशात्। वियच्छब्देनाकारः कला हार्धकला हकार इति केचित्। तच्चिन्त्यम्, ईदृशं परारूपमक्षरद्वयं मन्त्रेऽप्यस्तीति प्रदर्शयति—मध्यप्राणेति। मध्यमे मन्त्रपिण्डे द्वितीयकूटे यो मध्यो हकारत्रये मध्यो द्वितीयहकारः स एव च प्राणप्रथारूपः प्राणो विसर्गान्तर्गतः परारूपो हकारस्तस्य प्रथा प्रथन स्थूलता वैखर्यात्मकता तद्रूपो यः स्पन्दव्योमा हकारः, स्पन्दत उत्पद्यत इति स्पन्दम्, स्पन्दं व्योम यस्मात् स स्पन्दव्योमा, "हकाराद्व्योम संभूतम्" इति वक्ष्यमाणत्वात्। प्रथारूपो यः स्पन्दस्तदात्मकं यद्व्योमेति वा। तत्र पुनः स्थिता हकारात्मिका परा मातृका। केचित्तु—मध्यम इति पदं वारद्वयं योजयन्तो मध्यमकूटे यो मध्यमहकारस्तत्रेति व्याचक्षाणा मध्यप्राणपदं विसर्गमध्यचैतन्यपरत्वेन व्याख्यन्।

१. शक्तिबीजात्मिकां—ख०। २. धनुश्चिह्नान्तर्गतं क० नास्ति।

से० इदञ्च सम्प्रदायमनुरुध्य व्याख्यातम्, अन्यथा प्रथमोपस्थितन्यायेन प्रथमहकार एव स्थितेति व्याख्यातुं युक्तत्वात्। ननु द्वितीयकूटमध्यमहकारस्थोऽकारस्तृतीयकूटहृल्लेखास्थहकारश्चेति द्वयपरत्वेनैवायं सन्दर्भः स्वरसः, उपक्रम आदावकारस्य पश्चाद्धकारस्य निर्देशात्तादृशक्रमानुरोधायोपसंहारग्रन्थस्यापि वर्णयितुं युक्तत्वात्, व्योम्नीति सप्तम्याः पर इत्यर्थस्येष्टत्वात्, तथैव राहुकूटाद्वयेति सप्तम्याः सुकल्पत्वात्, अतः कथं सम्प्रदायलब्धत्वमर्थस्येति चेत्सत्यम्, उपक्रम उपस्थितस्याकारहकारयोः क्रमस्य प्रतिरूपमित्येकवचनान्तविशेषणेन विच्छेदात्, 'वियत्कले' इत्यनेन हकारोत्तरमकारनिर्देशेन विपरीतक्रमस्य व्यवह्रियमाणत्वेन तेनैव क्रमेणोत्तरत्र व्यक्तिनिर्देशस्य निराबाधात्। अत एव "सं ते प्राणो वायुना गच्छताम्" इत्येकवचनान्तक्रियापदस्य "सं यजत्रैरङ्गानि" इति बहुवचनान्तान्वयायोग्यतयैव विच्छेदे "सं यज्ञपतिराशिषा" इत्यनेनान्वेतुं योग्यस्यापि नानुषङ्गोऽपि तु पदान्तरमध्याहर्तव्यमिति सिद्धान्तितं भेदलक्षणे। वियत्कले इति पदमप्युपक्रान्तक्रमानुसारेण व्याचक्षाणानां प्राचां तु मते सम्प्रदायरक्षणाय सम्प्रदायान्तरं व्याख्यातांशेऽपि शरणीकरणीयमिति दिक्। सम्प्रदायसिद्धोऽर्थस्तु मध्यमतृतीयकूटयोः प्रतिनियतनिर्देशाज्ज्ञापितः। श्रूयमाणे षोढान्यासीये ग्रहन्यासे शपसहा राहुकूटमिति वक्ष्यते—"वक्रेशादिचतुर्वर्णैः सहितं राहुमेव च" इति। तत्राद्यौ प्राथमिकद्वयाद्भिन्नौ सकारहकारौ तयोर्मध्येऽपि योग्यतया सकार एव, तृतीयकूटे हकारस्याकारयोगाभावात्। उभयत्रापि पुनःशब्दः श्रूयमाणो द्वितीयवारमित्यर्थको वैखरीभिन्नपरामातृकारूपतां द्रढयति। अक्षरमात्रे ध्वन्यंशवर्णांशौ वर्तेते एव, तार्किकमते सुवर्णे परस्परसंसृष्टपार्थिवतैजसांशवत्। अत एव तारत्वमित्यादिध्वनिधर्माणां वर्णेष्वनुभवः। स वर्णे ध्वनिः सर्ववर्णजनको नाद एव, नाद एव हि प्रथमं परारूपो मूलाधारादुत्थितो मणिपूरानाहतयोरागत्य प्राणमनोभ्यां संयोगात् पश्यन्तीमध्यमात्मना परिणतः कण्ठे वैखरीरूपवर्णात्मकतामापद्यत इति सिद्धान्तात्। तस्मिंश्च नादे सर्ववर्णकारिणीभूते सर्वे वर्णाः सूक्ष्मरूपेण वर्तन्त एव, बीजे फलपुष्पादिवत्। यथा बीजरूपे सम्पुट एकस्मिन्नपि पूर्वार्धपरार्धात्मना द्विधा भिन्ने विविधावयवकः सर्वोऽपि वृक्षोऽन्तरस्ति, तथाकारहकाररूपेण द्विधा भिन्ने नादब्रह्मणि सर्वोऽपि वर्णात्मको लौकिकवैदिकप्रपञ्चोऽस्ति। अत एवाकारहकारयोर्मध्ये एव सर्ववर्णपाठः, ळकारस्य लकारेणाभेदात्, क्षकारस्य ककारषकारयोगरूपत्वेनापार्थक्यात्। ब्रह्मणोऽकारहकारसमाहाररूपत्वादेव श्रुतिष्वहंरूपतैव

तस्य प्रदश्यते—ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदमहमिति बृहदारण्यके, तत्राहमहमित्यैतरेये, कस्त्वमित्यहमिति होवाचेत्याद्यपि । विरूपाक्षपञ्चाशिकायामपि—

स्वपरावभासनक्षम आत्मा विश्वस्य यः प्रकाशोऽसौ ।
अहमिति स एव उक्तोऽहंतास्थितिरीदृशी तस्य ।। इति ।

ब्रह्मणोऽहंरूपत्वादेव हि तदुपासनाऽप्यहंग्रहादिरूपैवोपदिश्यते—"अहमित्येव विभावयेद्भवानीम्" इत्यपि। कारणस्याहंरूपत्वादेव हि सर्वस्मिन्नपि प्रपञ्चे तदनुगतिर्मृद इव घटशरावादिषु । अत एवास्मच्छब्दस्य सर्वनामता । तपनीयश्रुतिरपि—"एकमेवेदं सर्वं तस्मादहमिति सर्वाभिधानम्" इति । अत एव चेदृशार्थस्यातिरहस्यत्वाभिप्रायेण तन्त्रराजे—"आदिमान्त्यन्तु वेदयेत्" इति सङ्केतेनोक्तम् । आदिमोऽकारः, अन्त्यो हकारः, तयोः समाहारोऽहमिति तदर्थात् । मालिनीशास्त्रसिद्धान्ततन्त्रयोरपि—

आदिमान्त्यविहीनास्तु मन्त्राः स्युः शरदभ्रवत् ।
गुरोर्लक्षणमेतावदादिमान्त्यं निवेदयेत् ।। इति ।

"मातृकाचक्रसम्बोधः" इति शिवसूत्रे वरदराजेनाप्युक्तम्—

अतोऽकारहकाराभ्यामहमित्यपृथक्तया ।
प्रपञ्चं शिवशक्तिभ्यां क्रोडीकृत्य प्रकाशते ।। इति ।

अन्योऽप्यस्मिन्नर्थे रहस्यनिष्कर्षो वरिवस्यारहस्यव्याख्यानेऽस्माभिः प्रकटीकृतः । अनया च रीत्या सर्वस्याप्यकारहकारसामरस्यात्मकत्वेन मन्त्रस्यापि तथात्वान्मन्त्रे तादृशवर्णद्वयमस्तीत्यविवादम् । यथा हि वटवृक्षे जनकबीजसमानाकारं बीजानन्त्येऽपि स्फुटितजनकबीजांशद्वयमपि क्वचिदस्त्येव, परन्तु तद्दुर्ज्ञानम्, तथा प्रकृतेऽपि ब्रह्मस्वरूपयोर्निखिलशब्दप्रपञ्चाभिन्नमातृकासरस्वत्यभिन्नश्रीविद्याजनकयोर्नादात्मकपरारूपयोरकारहकारयोः क्वाप्यवस्थितेरावश्यकतया तयोरन्यैर्दुर्ज्ञानत्वेन भक्तानुजिघृक्षया सर्वज्ञेन करुणाधनेन जगद्गुरुणैव बहुसङ्केतेन तौ प्रदर्शितौ ।। २१-२२ ।।

तत्प्रदर्शनस्य प्रकृतभावार्थवर्णनप्रकरणे साङ्गत्यमप्याह—(चलत्तेत्यादि) । चलतो भावश्चलत्ता नश्वरताऽनित्यतेति यावत् । धर्मिप्रधानोऽयं निर्देशः । असंस्थितोऽसमाप्तो नित्यः । नित्यानित्यस्येति पर्यवसितोऽर्थः । प्रपञ्चरूपेणानित्यस्य ब्रह्मरूपेण नित्यस्येति यावत् । अत एव—"तत्प्रवृत्तावप्यनिरासः स्वसंवेत्तृभावात्" इति शिवसूत्रे कृष्णदासेनोक्तम्—

से०

अवस्थायुगलं चात्र कार्यकर्तृत्वशब्दितम् ।
कार्यता क्षयिणी तत्र कर्तृत्वं पुनरक्षयम् ॥
कार्योन्मुखः प्रयत्नो यः केवलं सोऽत्र लुप्यते । इत्यादि ।

धर्मो ब्रह्मधर्मत्वाच्छक्तिः । अधर्मो निर्धर्मकः परशिवः । विषं संसारः । अमृतं मोक्षः । अनित्यसंसारात्मना परिणतशक्तेर्वाच्याया वाचकमक्षरं हकारः । नित्यमोक्षात्मकपरशिवस्य वाच्यस्य वाचकमक्षरमकारः । एतदुभयसंयोगान्मन्त्रः शिवशक्तिरूपः । विश्वमपि शिवशक्तिजन्यत्वात्तद्रूपमेव । एकोपादानोपादेयत्वान्मन्त्रविश्वयोरभेद इति तृतीयकूटोदितार्थस्योपपत्तिरुक्ता ॥ २३ ॥

एवं कूटत्रयस्यावान्तरवाक्यत्रयरूपस्य त्रिविधमर्थं सोपपत्तिकं निर्वर्ण्य त्रयाणामेकवाक्यतया महावाक्यरूपस्य मन्त्रस्यार्थं पूर्वमुक्तमुपसंहरन्नाह—( तेषामित्यादि ) । तेषामवान्तरवाक्यत्रयार्थानां समष्टिरूपेण परस्पराकाङ्क्षया पुनरपि वाक्यैकवाक्यताकल्पनेन पराशक्तिं मातृकां मातृकासरस्वत्यभिन्नामाद्यां शक्तिं भावयन्तो मन्त्रजन्यबोधविषयीकुर्वन्त उपासकधौरेयाः स्वभावनीयमर्थं मन्त्रस्य भावार्थ इति मन्वते । कूटत्रयात्मिकामिति तु मन्त्रदेव्योरभेदाभिप्रायेण । तत्राप्येकैककूटमात्रोपासकानामवान्तरवाक्यार्थ एकैक एव भावनीयस्त्रिकूटोपासकानां तु महावाक्यार्थो भावनीय इति द्योतयितुं समष्टिव्यष्टिरूपिणीमित्युक्तम्। तेनावान्तरवाक्यार्थेषु विशेष्यलाभाय हृल्लेखात्रयावश्यकतेत्यपि ध्वनितम् । एवं त्रिप्रकारो भावार्थो वर्णितः । सोऽयं कादिपक्ष एव स्वरसः, शिवशक्तिसमायोगपदस्यैकार एव स्वारस्यात् । हादिपक्षेऽपि योगिनीशिवशक्तिसमायोगपदान्यतरेण हकारसकारान्यतरदक्षरमुच्यत इति यथाकथञ्चिद्योजनीयम् । प्राञ्चस्तु सर्वोऽप्ययं ग्रन्थो हादिविद्यापर एवेति मन्यमानाः प्रकारान्तरेण व्याचक्षते । तथा हि—हृल्लेखास्थैर्हकाररेफेकारैः सह प्रथमकूटे सप्ताक्षराणि । योगिन्यो भारत्याद्या वीरा ब्रह्माद्या इति त्रीणि मिथुनानि । हकारो ब्रह्मा सकारो [ भारती ककारो ] विष्णुर्लकारः पृथिवी हकारो रुद्रो रेफो रुद्राणीत्येवं मिथुनत्रयपराणि षडक्षराणि, समष्टिरूपं शान्ताम्बकात्मकं मिथुनमीकारेणैकेनैव वाच्यम् । मूलस्थं वीरेन्द्रैरिति पदं बहुवचनान्तं केवलं पुंलिङ्गमपि समष्टिमिथुनस्यैव वाचकम् । द्वितीयकूटे मध्यमहकारस्तृतीयकूटारम्भे पठनीयोऽपि तृतीयस्य शक्तिकूटत्वेन शक्त्यक्षरारब्धत्वलिप्सया द्वितीयस्य स्थितिकूटत्वध्वननलिप्सया च द्वितीयकूट एव पठितः । सोऽयमत्र पठितोऽपि तत्रत्य एवेति त्रीण्यपि कूटानि सप्तसप्ताक्षराणि समानरूपाण्येव सम्पद्यन्ते । तेन प्रथम-

कूटवदेवेतरकूटयोरप्यर्थः । इयांस्तु विशेषः—द्वितीयकूटस्य स्थितिरूपताध्वननेनैव प्रथमचरमकूटयोः सृष्टिसंहृतिरूपताध्वनादेकैकस्मिन् कूटे पुनरपि सृष्टयाद्यवान्तरभेदेन त्रैविध्यादाद्यकूटस्थस्य मिथुनत्रयस्य क्रमेण सृष्टिसृष्टिः सृष्टिस्थितिः सृष्टिसंहृतिरित्येतत्त्रयाभिमानिता । द्वितीयकूटस्थस्य स्थितिसृष्टिः स्थितिस्थितिः स्थितिसंहृतिरित्येतत्त्रयाभिमानित्वम् । तृतीयकूटस्थस्य तु संहारसृष्टिः संहारस्थितिः संहारसंहार इत्येतत्त्रयाभिमानित्वम् । अतो न पुनरुक्तिः । वाग्भवकामराजशक्तिकूटानां क्रमेण पूर्वाम्नायदक्षिणाम्नायपश्चिमाम्नायरूपत्वादीदृशमिथुननवकस्य नादनवकरूपत्वाच्च न पौनरुक्त्यम् । ततश्चैतैर्विद्याक्षराभिधेयमिथुनचतुष्टयैः शिवशक्तिसम्पर्कं मिथुनीकृत्यायं मन्त्रराजको हादिविद्यारूपो जनितो भावित इति मूले प्रथमश्लोकार्थः । अथोत्तराम्नायात्मकतुरीयकूटस्यार्थमाह—तन्मयीमिति । भारत्यादिब्रह्मादिचतुर्मिथुनवाचकबीजत्रयसमष्टिरूपवाच्यामित्यर्थः । मन्त्रशब्दं निर्वक्ति—शिवशक्त्यात्मेति । मननत्राणकर्तृत्वात्तुरीयकूटे मन्त्रत्वमुपपद्यत इति भावः । ननु स तुरीयमन्त्रः किंलक्षण इत्यत आह—तेषामिति । त्रीणि कूटानि पश्यन्तीमध्यमावैखरीरूपाणि । इयन्तु परामातृकारूपेत्यर्थः । ननु तुरीयकूटवाच्या शक्तिरकारहकारोभयरूपा तौ च मन्त्रे क्व वसत इत्यत आह—मध्यबिन्द्विति । मन्त्रेऽनयोर्विद्यमानत्वादेव तुरीयविद्याया विश्वमयत्वमित्याह—चलत्तेति । तुरीयाया विश्वात्मकत्वादेव तां परामातृकात्वेन व्यष्टिकूटत्रयं पश्यन्त्यादिरूपत्वेन भावयन्तो योगिनो भावार्थं मन्वत इति । तदिदं व्याख्यानं स्वरूपाख्यानमेवास्य प्रत्याख्यानं प्रकीर्तितमिति न्यायोदाहरणाख्यानम् । एतदनुसारिणावन्यावपि द्वौ पक्षौ वरिवस्यारहस्येऽस्माभिः प्रपञ्चितौ । एवं षट्सु पक्षेषु य एव विदुषामुपासकानां हृदयङ्गमः स एव परशिवाशयो भावार्थ इति दिक् ॥ २४-२५ ॥

**सम्प्रदायो महाबोधरूपो गुरुमुखे स्थितः ।**
**विश्वाकारप्रथायास्तु महत्त्वञ्च यदाश्रयम् ॥ २६ ॥**
**शिवशक्त्याद्यया मूलविद्यया परमेश्वरि ।**
**जगत्कृत्स्नं [1]तया व्याप्तं शृणुष्वावहिता प्रिये ॥ २७ ॥**
**पञ्चभूतमयं विश्वं तन्मयी सा [2]सदानघे ।**
**तन्मयी मूलविद्या च [3]तदद्य कथयामि ते ॥ २८ ॥**

१. यया—ग०से० । २. सदातनी-ख०ग०, सनातनी—से० । ३. तथा च—से० ।

(दी०) भावार्थमुक्त्वेदानीं सम्प्रदायार्थमाह—सम्प्रदाय इति । सम्यग् [1]याथार्थ्येन कर्णे शिष्यस्य प्रदीयत इति सम्प्रदायः । महाबोधरूपो महतो देशकालाकारैरनवच्छिन्नस्य प्रकाशस्य बोधः [2]परिज्ञानं रूपं यस्य तादृशो गुरुमुखे स्थितः—

गृणीत तत्त्वमात्मीयमात्मीकृतजगत्त्रयम् ।
उपायोपेयरूपाय शिवाय गुरवे नमः ॥

इत्यभियुक्तवचनोक्त[3]रीत्या स्वात्मपरमार्थप्रकटनपरो गुरुः, तस्यैव मुखे स्थितो नान्यस्य अनाकलितागमशास्त्रस्य अनधिगताखिलवेदवेदान्तस्य अनवधारितपरमार्थस्य [4]परप्रतारणपरस्य मुखे स्थितः । अत्र प्रमाणवचनम्—

सर्वज्ञो हि शिवो वेत्ति सदसच्चेष्टितं नृणाम ।
तेनासौ नानुगृह्णाति किञ्चिज्ज्ञस्य गुरोर्गिरा ॥ [5]इति ।

अत्र गुरोरिति गुरुमानिनः किञ्चिज्ज्ञस्य गुरुत्वाभावात् । [6]विश्वाकारप्रथाया विश्वं शिवादिक्षित्यन्तं षट्त्रिंशत्तत्त्वात्मकं तदाकारप्रथा चिच्छक्तिः । अत्र श्रुतिः–"[7]स ऐक्षत लोकान् सृजते" । तस्या महत्त्वं [8]तदाकारकारित्वं यदाश्रयम् । कोऽर्थः ? परशिवसामरस्य[9]रूपाया बीजत्रयरूपेण परिण[10]ताया विश्वमयनावासना गुरुमुखेनैव लभ्यत इत्यर्थः ॥ २६ ॥

"विश्वाकारप्रथायास्तु महत्त्वं च यदाश्रयम्" इत्यस्यैवाथ विवृण्वन् वक्तव्यार्थस्य महत्त्वादत्यन्तसावधानतया श्रोतव्यमित्याह—शिवशक्त्येति । शिवः अकारः, शक्तिर्हकारः, तावाद्यौ हेतुभूतौ यस्याः सा तथाविधया पूर्वोक्तरीत्या [11]प्रथाभूतया मूलविद्यया कृत्स्नं [12]जगदुक्तरूपं व्याप्तं शृणुष्वावहिता अत्यन्तसावधाना शृणुष्व ॥ २७ ॥

---

१. याथार्थ्येन वकर्णे–क० । २. परिज्ञानमस्य रूपं गुरु–ख० । ३. रीत्या आत्मपरमात्मप्रक–ख० । ४. परप्रतारण–ख० नास्ति । ५. इति–क० नास्ति । ६. विश्वाकारप्रथायाः–ख० नास्ति । ७. सिसृक्षतो लोकान् सिसृक्षा इति–ख० । ८. तदाकारत्वं–ख० । ९. रूपायाः परायाः बीज-ख० । १०. तायाः चिन्मयता–क० ११. एवंभूतया–क० । १२. जगत् एवंभूतं यया व्याप्तम् उक्तप्रकारेण रूपेणेति । अत एव तास्ववहिता अत्यन्त–ख० ।

[1]विद्याया विश्वव्याप्तिमेव प्रतिजानीते—पञ्चभूतेति। पञ्चभूतमयं दी० विश्वं भूतानि पृथिव्यप्तेजोवाय्वाकाशाः [2]तन्मयं विश्वम् उक्तलक्षणा सा परा सौभाग्यदेवता तन्मयी पञ्चभूतात्मिका। मूलविद्याऽपि [3]तन्मयी तद्वाचिका देवता। वाचिका पञ्चभूतवाचिका च। अत एव [4]तदुभयमयी। तत्प्रकारं कथयामीत्यर्थः। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी" इत्युपनिषदुक्तरीत्या प्रकाशात्मकात्परमशिवात्पञ्चभूताना-मुत्पत्तिः। [5]विश्वात्मिकाया विमर्शशक्तेस्तद्वाचकानां विद्यावर्णानाम् उत्पत्तिरिति [6]हि स्थितिः॥ २८॥

(से०) अथ क्रमप्राप्तं सम्प्रदायार्थं निरूपयति साधद्वाविंशत्या श्लोकैः—(सम्प्रदाय इत्यादि)। पूर्वं हि देव्यां मन्त्रमयत्वविश्वमयत्वे एव प्राधान्येनोक्ते, मन्त्रत्व-विश्वत्वयोः परस्पराभावव्याप्यत्वे देव्यां तदुभयसामानाधिकरण्यं न संगच्छे-तेत्यतस्तदुपपादनार्थत्वेन शिवशक्तिवाचकाक्षरजन्यत्वेन मन्त्रविश्वयोरभेदः साधितो न प्राधान्येन। इदानीं त्वेकोदुम्बरबीजोपादेयानामपि फलपत्रकृमि-काष्ठादीनामत्यन्तभेददर्शनादुक्तोपपत्तिमदृढां मन्वानेन भगवता मन्त्रस्य विश्वात्मना परिणतत्वादुपादानोपादेयभावेनैव मन्त्रविश्वयोरभेदः प्राधान्येन विवक्षितः। अथवा पूर्वं देव्या मन्त्रेणाभेदो मननत्राणद्वारा देवीमन्त्रयोरभेद एवेह प्राधान्येन विवक्षितः। विश्वञ्च षट्त्रिंशत्तत्त्वमयम्। ततश्च पञ्चभूतमय-मित्यत्र भूतपदं तत्त्वान्तराणामुपलक्षणं षट्त्रिंशतोऽपि पञ्चधा विभागस्य वक्ष्यमाणत्वात्तदभिप्रायकं वा। विश्वं सा सनातनी देवी मूलविद्या चेति त्रय-मपि षट्त्रिंशत्तत्त्वमयमिति स्थितिः। तत्र विश्वस्मिन् प्रसिद्धं देव्यामपि विश्वपरिणा-मित्वात्तन्मयत्वमसन्दिग्धमेव। मूलविद्यायास्तु जगत इव शिवशक्तिवाचकाकार-हकारजन्यत्वाविरोधेऽपि कृमिकाष्ठयोरिवात्यन्तं भेदस्यैवावश्यम्भावात्तया कृत्स्नजगदाकारतया कथं परिणतम्, येन तदभेदः स्यात्। ईदृश्या दुर्धरत्वेन सन्दिग्धाया मन्त्रस्य विश्वाकारप्रथाया महत्त्वं सर्वोत्तमत्वमसन्दिग्धत्वं यदाश्रयं येन महता निश्चयात्मकेन बोधेन भाव्यं तस्य महाबोधस्य विषयः सम्प्रदायार्थ

---

१. विद्यायां विश्वव्याप्तत्वमेव–ख०। २. तन्मयं–ख० नास्ति। ३. तन्मयी–क० नास्ति। ४. तदुभयमपि–क०। ५. विमर्शात्मिकायाः शक्ते–ख०। ६ हि–क० नास्ति।

१० पदेनोच्यमानः समीचीनो निर्दिष्टः प्रकृष्टः सर्वातिशायी दायो गुरुपरमगुर्वादि-वंशपरम्परायातोऽथाधनमिव स्थितोऽतो गुरुमुख एव स्थितो गुरुदययैव लभ्यो यथा यादृशस्तथा ते कथयामि परमेश्वरि प्रिये त्वमवहिता शृणुष्वेति योजना। महतो देशकालानवच्छिन्नस्य प्रकाशस्य बोध इति प्राचां महाबोधपदव्याख्यानन्तु "आन्महतः" इति सूत्रविरोधादनादेयम्। शिवशक्त्याद्ययेति हेतुगर्भं विशेषणम् ॥ २६-२८ ॥

**हकाराद् व्योम सम्भूतं ककारात्तु प्रभञ्जनः।**
**रेफादग्निः सकाराच्च जलतत्त्वस्य सम्भवः ॥ २९ ॥**
**लकारात् पृथिवी जाता तस्माद् विश्वमयी च सा।**
**गुणाःपञ्च दश[1] प्रोक्ता भूतानां तन्मयी शिवा ॥ ३० ॥**

(दी०) एवं [2]स्थितेऽस्याः किं वाच्यं किं वाचकमिति शङ्कां परिहरन् वर्णभूतसृष्टिप्रतिपादनपुरःसरं विश्वमयतामेवाह—हकारादिति। हकाराद्व्योम [3]सम्भूतं प्रथमं विमर्शशक्तेराकाशवाचको हकारो जातः। हकारानन्तरं तद्वाच्यं व्योम प्रकाशात्मनः परमशिवात् सम्भूतम्। पश्चाद्वायुवाचककारो जातः। ककारानन्तरं ककारवाच्यः प्रभञ्जनो जातः। तत्पश्चादग्निवाचको रेफः सञ्जातः। तदनन्तरं रेफवाच्योऽग्निः [4]सञ्जातः। ततो जलतत्त्ववाचकः सकारः [5]सञ्जातः। तदनन्तरं तद्वाच्य-जलतत्त्वस्य सम्भवः। तदनन्तरं पृथिवीवाचको लकारो जातः। [6]तदनन्तरं तद्वाच्या पृथिवी जातेत्यर्थः। [7]तस्माच्छिवशक्तिसामरस्य-रूपपरावयवप्रकाशविमर्शाभ्यां [8]पञ्चमहाभूतानि तद्वाचकान्यक्षराणि च यस्माज्जातानि तस्मात्तदुभयसामरस्यरूपा सा परा। स्वावयवभूत-[9]वर्णमयी विश्वमयीत्यर्थः। तदुक्तं कामकलाविलासे—

[10]स्फुटितादरुणाद् बिन्दो[11]र्नादब्रह्माङ्कुरो रवेर्व्यक्तः।
तस्माद् गगनसमीरणदहनोदकभूमिवर्णसम्भूतिः॥

१. दश ख्याताः–ख०, दशाख्याताः–ग० से०। २. एवं स्थितस्य कि वाचकम्–क०। ३. व्योमपर्यन्तं प्रथमम्–क०। ४. सम्भूतः पुनर्जलतत्त्व–ख०। ५. सञ्जातः। सकाराज्जलतत्त्वं सम्भूतं तदनन्तरं पृथिवी–ख०। ६. जातः। लकारात् पृथिवी–ख०। ७. यस्मात्–ख०। ८. पञ्चभूतानि पञ्चभूताक्षराणि च जातानि–ख०। ९. वर्णमयवि–ख०। १०. स्फुरिता–ख०। ११. नादब्रह्माह्वयोऽव्यक्तः–ख०।

अथ विशदादपि बिन्दोर्गगनानिलवह्निवारिभू[1]मिसम्भूतिः । दी०
एतत्पञ्चकविकृतिर्जगदिदम (?)एवाद्यजाण्डपर्यन्तम् ॥
माता मानं मेयं बिन्दुत्रय[2]भिन्नबीजरूपाणि ।
धामत्रयपीठत्रयशक्तित्रयभेदभावितान्यपि च ॥
तेषु क्रमेण लिङ्गत्रितयं तद्वच्च मातृकात्रितयम् ।
इत्थं [3]त्रितयमयी तुरीयपीठादिभेदिनी विद्या ॥

ननु एवंविधक्रमेण विद्यायां वर्णाः कि[4]मिति न स्थिताः? उच्यते, सत्यम् एवंविधक्रमो [5]न भवति, तथापि पूर्वोक्तसृष्टिस्थितिसंहारा[6]-नाख्यावभासनार्थं [7]विद्यायाः क्रमेण वर्णाः पठ्यन्ते । तेन भूतवर्णक्रमो वर्णवासनाक्रमं बाधितुं नोत्सहते, वासनार्थत्वाद्वर्णानाम् । ननु[8] तर्हि [9]भूतसंख्याकान्यक्षराणि किमिति न भवन्ति, अन्यान्यपि बहूनि [10]श्रूयन्त एवेत्यत आह—गुणा इति । भूतानां पञ्चानां व्याप्यव्यापक-भावेन पञ्चदश गुणाः स्युः । अतस्तन्मयी तदात्मिका तत्संख्यावर्ण-वतीयं विद्या शिवा शोकमोहमयसंसाररूपा मङ्गलपरिपन्थिपरमाद्वैत-[11]प्रथापरमार्थरूपा,परममङ्गलात्मकत्वात् ॥ ३० ॥

(से०) हादिविद्यायां प्रथमोपस्थितवर्णमारभ्यैव प्रतिज्ञातमर्थमाह—( हकारादित्यादि ) । हकाराद्यात्मना परिणताया विमर्शशक्तेः सकाशादाकाशादि उत्पन्नम् । न च शब्दादर्थोत्पत्तिवर्णनमिदमपूर्वमिति विस्मयितव्यम् । "शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्" इति वैयासिकसूत्रेऽपि शब्दादर्थप्रभवः श्रुति-स्मृतिभ्यां साधित इत्युक्तेः । तदुपपादनञ्च तद्भाष्ये द्रष्टव्यम् । ककारात्त्विति । कामकलाक्षरादीकारादित्यर्थः । कामकलेतिपदसम्बन्धिप्रथमाक्षरवाचकस्य ककारपदस्य कामकलापदवाच्य ईकारे निरूढलक्षणा, तस्याभिव्यञ्जका पञ्च मकारा इति सूत्र ईदृशलक्षणयैव मकारपदेन मुद्राकारणशुद्ध्यादेर्ग्रहणदर्शनात्,

---

१. भूमिजनिः–क० । २. त्रयविश्वबीज–ख० । ३. तृतयमायी तुरीया पीठ–क० । ४. मिति संस्थिताः, अत उच्यते–क० । ५. न–ख० नास्ति । ६. नाख्यावासनावभा–क० । ७. विद्यायामक्रमेण–ख० । ८. ननु भवतु तर्हि–क० नास्ति । ९. भूतसंख्ययैवाक्षराणि–ख० । १०. श्रयन्त इत्र–ख० । ११. प्रथारूप-परममङ्गलार्थत्वात्–ख० ।

से० "कामपूर्णजकाराख्या" इति तन्त्रारम्भस्तवे जकारेण जालन्धरपीठस्य ग्रहणाच्च, कामकलाक्षरस्य रहस्यतरत्वे कण्ठरवेण तदुच्चारणस्यानुचितत्वेन पारोक्ष्येण साङ्केतिकनिर्देशस्यैव तत्र युक्तत्वाच्च। प्राञ्चस्तु मन्त्रगतैस्त्रिभिः ककारैर्वायुरुत्पन्न इति यथाश्रुतमेव व्याचक्षते। तदसत्, महामायात्रयेणापीत्युत्तरग्रन्थविरोधात्। तत्र हीकाराणां चतुर्णामेव स्पर्शचतुष्टयबोधकतोक्तेः, तत्तद्भूतजनकवर्णानामेव तत्तद्गुणलक्षकत्वस्य "भवेद् गुणवतो बीजं गुणानामपि वाचकम्" इत्यनेन स्पष्टं वक्ष्यमाणत्वाच्च, ककारचतुष्टयस्य विद्यायामभावेन स्पर्शचतुष्टयलक्षकत्वासम्भवाच्च, क्रोधीशत्रितयेनास्येत्यनेन ककारत्रयस्य त्रिविधोपासकबोधकताया एव वक्ष्यमाणत्वाच्च, ककारस्य वायुबीजत्वाभावाच्च। न च यकारस्यैव वायुबीजत्वेन कामकलापरत्वेन भवद्व्याख्यानेऽपि तदभावस्तुल्य इति वाच्यम्, व्रीहिसदृशनीवारवदीकारे यकारसादृश्यात्। अत एवैकस्थानत्वं परस्परादेशस्थानिकत्वञ्च सादृश्येन श्रवणानुभवश्च सञ्चच्छते। किं बहुना, यवनान्या लिपिसङ्केतैक्यमपि प्रसिद्धम्। तत्परस्परसदृशत्वमूलकमेव, लौकिकानुभवनिर्णये तस्यापि प्रमाणत्वात्। कथमन्यथा पिकनेमाधिकरणे म्लेच्छप्रसिद्धिमूलक एव सिद्धान्तः सञ्चच्छताम्। यद्यपि सर्वेऽप्येते हेतव उकारे जलबीजवकारसादृश्ये तुल्यास्तथापि विद्यायां वकारस्येवोकारस्याप्यभावात् सुसदृशालाभे मन्दसदृशानां पूतकानामिव दन्त्यत्वेन वकारसदृशस्य सकारस्य जलतत्त्वजनकत्वोक्तिर्न्याय्यैव। अत एवास्मिन् पक्षे प्रसक्ते भवेद् गुणवतां बीजमिति नियमविरोधे मूलकृतैवाशङ्का परिहरिष्यते। ईदृशं हकारादिभ्यो वैलक्षण्यं द्योतयितुमेव ककारात्त्विति तुशब्दस्तदर्थक एव, सकाराच्चेति चकारोऽपि। तस्मात् पञ्चभूतजनकत्वात् सा विद्या विश्वमयी विश्वापिन्ना भवति ॥ २९ ॥

नन्वेवं सति विद्यायां हकारादिकं व्यञ्जकमेकैकमेवालं किं तेषां बाहुल्येनेत्यत आह—( गुणा इत्यादि )। अपञ्चीकृतेषु पञ्चसु भूतेष्वेकैकं भूतमर्धद्वयात्मकं कृत्वा तयोरेकमर्धं पुनश्चतुर्धा विभज्य तान् भागान् स्वस्वेतरभूतचतुष्टये सम्मेल्यैकैक एवासाधारणोऽपि शब्दस्पर्शादिरितरेष्वप्युपलभ्यते। तत्राप्यात्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवीति क्रमेणैव भूतानामुत्पत्तेर्जनकनिष्ठगुणानामेव जन्यपरम्परायामनुवृत्तिर्न जन्यनिष्ठगुणानां जनकपरम्परायाम्, "कारणगुणाः कार्यगुणानारभन्ते" इत्येव न्यायात्। इत्थं चाकाशगुणस्य शब्दस्याकाशादिक्षित्यन्तमनुवृत्तेः पाञ्चविध्यम्, वायुगुणस्य स्पर्शस्य चतुर्ष्वेवानुवृत्तेश्चातुर्विध्यम्। एवं रूपस्य त्रैविध्यं रसस्य द्वैविध्यं

गन्धस्यैकविध्यं चेति संहत्य भूतानां गुणाः पञ्चदश भवन्ति। तेषु गुहादिषु यः शब्दानुकारी प्रतिशब्दः श्रूयते स आकाशशब्दः । वाय्वादिशब्दाः स्पर्शादयश्च प्रसिद्धा एव । एवंप्रकारेण भूतानां गुणाः पञ्चदशसंख्याका यस्मात्प्रसिद्धास्तस्माच्छिवाः, विद्यापि तन्मयी पञ्चदशसंख्याकहकाराद्यक्षरमयीत्यर्थः । उक्तक्रमेणैव हकाराः पञ्च ईकाराश्चत्वारो रेफास्त्रयः सकारौ द्वौ लकार एकश्च विद्यायां वर्तन्त इति भावः । नन्वेवं सति लकारद्वयमधिकं किमिति पठ्यत इति चेत्, "भुवनत्रयसंबन्धात् त्रित्वं तु महेश्वरि" इति तद्ग्रन्थे मूलकारैरेवास्याः शङ्कायाः समाधास्यमानत्वात् । यद्यपि प्रथमद्वितीयकूटयोर्दुस्पृष्टसंज्ञा लकार एव, मोहार्णपदेन क्वचित्तन्त्रे तयोरुद्धारदर्शनात् । अत एव ब्रह्मसूत्रीये देवीपरं भाष्य ईड स्तुताविति धातुतो निष्पन्नमोल्पदामत्युक्तम् । ततश्च तृतीयकूट एक एव लकार इति नोक्तशङ्कोदयस्तथापि ल(ड)कारलकारयोरैक्याभिप्रायेण प्रकृततन्त्रे कूटत्रयेऽपीन्द्रबीजपदेनैव हल्लेखापूर्वाक्षरोद्धारदर्शनादाशङ्काप्रसक्तौ प्रकारान्तरेण समाधास्यत इति द्रष्टव्यम् ॥ ३० ॥ से

**यस्य यस्य पदार्थस्य या या शक्तिरुदीरिता ।**
**[1]सा सा सर्वेश्वरी देवी स[2] स सर्वो महेश्वरः ॥ ३१ ॥**

(दी०) ननु विद्याक्षरसंख्याया यावन्तः परिगणिताः [3]पदार्थाः किं तन्मयता वासना वक्तुं शक्यते [4]इत्यत आह—यस्येति । लोके यस्य यस्य पदार्थस्य यत्किञ्चित्[5]करणसामर्थ्यलक्षणा या या शक्तिर्विद्यते सा सा शक्तिः सर्वेश्वरी देवी सर्वस्य शिवादि[6]क्षित्यन्तस्येश्वरी [7]नियामिका देवी परा, स स सर्वः पदार्थो महेश्वरो विश्वजगन्नियामकः परमशिवः । [8]लोके यद्यद्वस्तु यत्किञ्चित्करणसामर्थ्यशालि [9]तत्सामर्थ्यरूपेण परैव परिणता [10]तत्सामर्थ्यवद्वस्तुरूपेण परमशिवः परिणत इति वक्तुं शक्यते । [11]क्रमाद्वक्तव्यमेतद् उभय[12]मयविद्यावर्णसमानसंख्यावत्पदार्थरूपेण तावेव परिणतावित्यर्थः । तदुक्तमभियुक्तैः—

१ सा तु—ग० से० । २. स च-ग० से० । ३ पदार्थाः—ख० नास्ति । ४. इत्याह—ख० । ५. स्य या या शक्तिः किञ्चि—ख० । ६. क्षित्यन्तस्येय-मेवेश्वरी—ख० । ७. नियामिका देवी परा—ख० नास्ति । ८. सर्वलोके—ख० । ९. तत्तत्साम-क० । १०. तत्तत्सामर्थ्यवस्तु—क० । ११. किं यक्तव्यमेत—ख० । १२. यमपि वि—क० ।

दी०

त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं
त्वं चेतनाऽसि पुरुषे पवने बलं त्वम्।
त्वं स्वादुताऽसि सलिले शिखिनि त्वमूष्मा।
निः[1]सारमम्ब! निखिलं त्वदृते यदि स्यात्॥ [2]इति॥ १॥

(से०) ननु तथाप्युक्तरीत्या सप्तदशवर्णानामावश्यकत्वेऽप्यधिकाक्षराणामकारककारादीनां वैयर्थ्यमित्यत आह—यस्येत्यादि। नहि बीजप्रयोजनाभ्यां विना किमपि वस्तु समस्ति, "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति न्यायात्। किमुत सर्वज्ञ ईश्वर (इति तदर्थः)। ततश्च वस्तुमात्रे स्वस्वप्रयोजनजनकत्वसामर्थ्यरूपा शक्तिरस्त्येव। सा विमर्शस्तदाधारः प्रकाश इत्यर्थः। उक्तञ्च लैङ्गे—"स्त्रीलिङ्गमखिलं गौरी पुंलिङ्गं नीललोहितः" इति। अयं भावः—नहि पञ्चदशगुणात्मकमेव विश्वम्। तस्य षट्त्रिंशत्तत्त्वात्मकत्वेनातोऽधिकानामपि पदार्थानां सत्त्वात्। ते च सर्वेऽपि शिवशक्त्यात्मकत्रिपुरसुन्दर्या व्याप्ता एव। विद्यायाश्च तद्व्यापकत्वे विद्यादेव्योरभेदः कथं सिध्येत्, शिवशक्त्योरिव सर्वविश्वव्याप्त्यभावात्। अतोऽखिलविश्वात्मना प्रथनबोधनार्थमकारककाराद्यक्षराण्यावश्यकानीति। प्राञ्चस्तु—ननु पञ्चदशाक्षर्यां हकारसलेति पञ्चैवाक्षराण्यलम्, अन्यानि दश किमर्थानीत्यत आह—गुणा इति। तन्मयी पञ्चदशसंख्याकव्यञ्जनस्वरमयी। पञ्चदशाक्षराणि पञ्चदशगुणत्वेन भावनीयानीत्यर्थः। ननु विद्यायाः पञ्चदशात्मकत्ववासना वक्तुमशक्यासम्भवादित्यत आह—यस्य यस्येति। समस्तस्य विश्वस्यैव शिवशक्तिभ्यां व्याप्यत्वेन शिवशक्त्यात्मकविश्वस्य विश्वैकदेशव्याप्तौ कथमसम्भवितता कैमुतिकन्यायेनैव तत्सिद्धेरिति भाव इति व्याचक्षते। तदसत्, उत्तरत्र हकारादिव्यञ्जनानामेव भूतगुणात्मकत्ववासनाया विध्रियमाणत्वेन तद्विरोधात्, स्वरसहितव्यञ्जनानां व्योमादिजनकत्वस्य पूर्वमनुक्तत्वाच्च। हकारादित्यत्र श्रूयमाणोऽकारस्तु न कारप्रत्ययप्रकृतिः, "अकारो व्यवेतो व्यञ्जनानाम्" इति तैत्तिरीयप्रातिशाख्यसूत्रेण प्रकृतिप्रत्यययोर्मध्य उच्चारणीयमात्रत्वेन विधानात्, हयवरडादिसूत्रेष्वकारपाठस्य वर्णात्कार इत्यत्राकारविशिष्टस्यैव ग्रहणमित्येतज्ज्ञापनार्थत्वात्। अत एव रादिफ इत्येवोक्तं न त्वेफ इति। यद्यपि—

रकारादीनि नामानि रामात्त्रस्तस्य रावण।
रत्नानि चैव रामाच्च सन्त्रासं जनयन्ति मे॥

---

१. रमेतदखि–ख०। २. इति–क० नास्ति।

इत्यत्र यथाकारविशिष्टरेफात्मकवर्णसमुदाय एव कारप्रत्ययप्रकृतिः, समुदा- से०
यात्तत्प्राप्तिस्तु वषट्कार इति ज्ञापकात्, एकस्य रेफस्यैव प्रकृतत्वे रादिफ इत्यपवादविरोधेन कारप्रत्ययानापत्तेः। तद्वदिह हकारादित्यादावकारविशिष्टहकार एव प्रकृतिरित्युच्यते, तथापि विद्यायामकारविशिष्टरेफाभावाद्रेफादग्निरिति मूलेऽकारवैशिष्ट्येनानुवादानापत्तिः। अथवा तावन्मात्रेऽकारस्य न प्रकृतिकोटौ निवेशः। तर्हि तत्प्रायपाठात्तद्वद्धकारादावपि तथैवास्त्विति दिक् ॥ ३१ ॥

**व्याप्ता पञ्चदशार्णैः सा विद्या भूतगुणात्मिका।**
**पञ्चभिश्च तथा षड्भिश्चतुर्भिरपि चाक्षरैः ॥ ३२ ॥**
**स्वरव्यञ्जनभेदेन सप्तत्रिंशत्प्रभेदिनी।**
**सप्तत्रिंशत्प्रभेदेन षट्त्रिंशत्तत्त्वरूपिणी ॥ ३३ ॥**
**तत्त्वातीतस्वभावा च विद्यैषा भाव्यते सदा।**
**पृथिव्यादिषु भूतेषु व्यापकं चोत्तरोत्तरम् ॥ ३४ ॥**
**भूतं त्व[1]धस्तनं व्याप्यं तद्गुणा व्यापकाश्रयाः।**
**व्याप्येष्ववस्थिता देवि! स्थूलसूक्ष्मविभेदतः ॥ ३५ ॥**

(दी०) ननु भूतगुणमयी शिवेत्युक्तं [2]शिवायां तत्संख्या कुत इत्यत आह-व्याप्तेति। सा शिवा [3]परैव विद्या वाच्यवाचकयो[4]रभेदात् पञ्चभिरक्षरैर्वा[5]ग्बीजस्यावयवैः षड्भिरक्षरैः कामराजबीजस्यावयवैश्चतुर्भिरक्षरैः शक्तिबीजस्यावयवैः, न क्षरन्तीत्यक्षराणि तेषां [6]नित्यत्वात् स्वांशैर्नाशरहितैः पञ्चदशार्णैर्व्याप्ता, अत एव [7]भूतगुणात्मिका ॥३२॥

बीजत्रयमक्षरशो विभज्य भूतगुणात्मकतावासनामुक्त्वेदानीमक्षराण्यवयवशो विभज्य षट्त्रिंशत्तत्त्वात्मकतावासनामाह—स्वरव्यञ्जनेति। स्वरव्यञ्जनभेदेन प्रथमबीजे अकारचतुष्टयम् ईकारश्चेति पञ्च स्वराः, शिष्टानि [8]षड् व्यञ्जनानि, एवमेकादश। द्वितीयबीजे अकारपञ्चकमीकारश्चेति षट् स्वराः, शिष्टानि व्यञ्जनानि [9](सप्त, एवं

---

१. त्वधस्तरं-क०। २. शिवायास्तत्सं-ख०। ३. परैवाम्बिकाया वाच्य-ख०। ४. रभेदिनी प-ख०। ५. रैर्वाग्भवबीज-क०। ६. नित्यत्वात्, एवं विद्या स्वांशैः-ख०। ७. भूतात्मिका-ख०। ८. षड्-क० नास्ति। ९. धनुश्चिह्नान्तर्गतं क० नास्ति।

दी० त्रयोदश। तृतीयबीजे अकारत्रयमीकारश्चेति चत्वारः स्वराः, शिष्टानि व्यञ्जनानि) पञ्च, एवं नव इत्येवंविभागेन अक्षरावयवाः [1]त्रयस्त्रिंशत्, बीजत्रयान्ते बिन्दवस्त्रय इति [2]षट्त्रिंशत् तत्समष्टिरेका। एवं सप्तत्रिंशत्प्रभेदिनी विद्या समष्टिरूपा। [3]एवं सप्तत्रिंशत्प्रभेदेन षट्त्रिंशत्तत्त्वरूपिणी ॥ ३३ ॥

तत्त्वातीतस्वभावा च विद्यैषा व्यष्टिसमष्टिभेदेन षट्त्रिंशत्तत्त्वात्मिका तदतीतेयं षट्त्रिंशत्तत्त्वानि अवयवभूतानि तेषां रूपवती सप्तत्रिंशत्प्रभेदेन तत्त्वातीतस्वभावा च स्वस्य भावः [4]स्वभावः शिवस्य यादृशो[5] भावस्तादृशोऽस्या इति भावयितव्यमित्यर्थः। तत्त्वानां लक्षणानि मयैव सौभाग्यसुभगोदये निरूपितानि। [6]यथा—

यदयमनुत्तरमूर्तिर्निजेच्छया निखिलमपि जगत्स्रष्टुम्।
प्रस्यन्दे स स्यन्दः प्रथमशिवतत्त्वमुच्यते तज्ज्ञैः॥
इच्छा सैव [7]स्वेच्छा सन्ततसमवा[8]यिनी सती शक्तिः।
सचराचरस्य जगतो बीजं निखिलस्य निजविलीनस्य॥
स्वेच्छाशक्त्युद्गीर्णं जगदा[9]त्माहन्तया समाच्छाद्य।
निवसन स एव निखिलाऽनुग्रहनिरतः सदाशिवोऽभिहितः॥
[10]विश्वं स एव पश्यन्निदंतया निखिलमीश्वरो जातः।
सा [11]भाति शुद्धविद्या ये[12]दन्ताहन्तयोरभेदमतिः॥
माया विभेदबुद्धिर्नि [13]जांशभूतेषु निखिल[14]भूतेषु।
नित्यं तस्य निरङ्कुशविभवं वेलेव [15]वारिधिं रुन्धे॥
स तया परिमितमूर्त्तिः सङ्कुचितसमस्तशक्तिरेष पुमान्।

---

१. विभागत्रय—ख०। २. षट्त्रिंशत् एतत्सम—ख०। ३. एतत्प्र—क०। ४. स्वभावः—क० नास्ति। ५. भावस्तादृशम याः स्वभाव इति भावितव्य—ख०।
६. शिवशक्तिसदाशिवेश्वरशुद्धविद्यामायाकालनियतिकलारागविद्यापुरुषप्रकृतिमहदहङ्कृतिमनोदशेन्द्रियपञ्चतन्मात्रपञ्चमहाभूतानि तत्त्वानि। इति ग्रन्थो 'यथा' इत्यस्याग्रे कपुस्तके टिप्पण्यां वर्तते। अन्वयः क्रमश्छिन्न्यः। ७. स्वच्छा—ख०।
८. वायिनियन्तिः—क०। ९. जगदात्मतया—ख०। १० विश्वं पश्चात्पश्यन्—ख०।
११. भवति—ख०। १२. इदन्ता—क०। १३. निजांशजातेषु—ख०। १४. लजीवेषु—ख०। १५. वारिधे—ख०।

रविरिव सन्ध्यारक्तः संहृतरश्मिः स्वभासनेऽथ पटुः ॥ दी०
सम्पूर्णकर्तृताद्या या [1]बह्व्यः सन्ति शक्तयस्तस्य ।
सङ्कोचात् सङ्कुचिताः कलादिरूपेण रूढयन्त्येनम् ॥
तत्सर्वकर्तृता सा सङ्कुचिता कतिपयार्थमात्रपरा ।
किञ्चित्कर्तारममुं कलयन्ती कीर्त्यते कलानाम्ना[2] ॥
सर्वज्ञताऽस्य शक्तिः परिमित[3]तनुरल्पवेद्यमात्रपरा ।
ज्ञानमुप[4]पादयन्ती विद्येति निगद्यते बुधैराद्यैः ॥
नित्यपरिपूर्णतृप्तिः शक्तिस्तस्यैव परिमिता तु[5] सती ।
भोगेषु [6]रञ्जयन्ती सततममुं रागतत्त्वतां याता ॥
सा नित्यताऽस्य [7]शक्तिर्निकृष्य निधनोदयप्रदानेन ।
नियतपरिच्छेदकरी क्लृप्ता स्यात् कालतत्त्वरूपेण ॥
याऽस्य स्वतन्त्रताख्या शक्तिः सङ्कोचशालिनी सैव ।
कृत्याकृत्येष्ववशं नियतममुं नियमयन्त्यभून्नियतिः ॥
इच्छादित्रि[8]समष्टिशक्तिः शान्ताऽस्य सङ्कुचद्रूपा ।
[9]सङ्कुचितेच्छाद्यात्मकसत्त्वादिकसाम्यरूपिणी तु[10] सती ॥
बुद्ध्यादिसामग्र्य[11]रूपा चित्तात्मिका मता प्रकृतिः ।
इच्छाऽस्य रजोरूपाहङ्कृतिरासीदहम्प्रतीतिकरी ॥
[12]ज्ञानमपि सत्त्वरूपा निर्णयबोधस्य कारणं बुद्धिः ।
तस्य क्रिया तमोमयमूर्तिर्मन इत्युच्यते विकल्पकरी ॥
वागादिपञ्च[13]भेदैः स एव सङ्कुचितविग्रहो देवः ।
ज्ञानक्रियोपरागप्राधान्याद्विविध[14] विषयरूपोऽभूत् ॥
श्रोत्रं चक्षुः स्पर्शनजिह्वाघ्राणानि बोधकरणानि ।
वाक्पाणिपादपायूप[15]स्थाख्याकानि कर्मकरणानि ॥
शब्दस्पर्शौ रूपं रसगन्धौ चेति भूतसूक्ष्माणि ।
अयमेवातिनिकृष्टो जातो भूतात्मनाऽपि भूतेशः ॥

---

१. यावन्त्यः सन्त्यस्य शक्त-क० । २. नाम-ख० । ३. वपु-ख० । ४. मुत्पाद-ख० । ५. तु-क० नास्ति । ६. रञ्जयति-क० । ७. शक्ति प्रकृष्य-क० । ८. समष्टिः-ख० । ९. सङ्कलिते-ख० । १०. तु-क० नास्ति । ११. रस्यस्वरूप-चिन्तात्मिका-ख० । १२. ज्ञानाऽपि-ख० । १३. भेदैः-क० । १४. विषयिरू-ख० । १५. स्थाकनामानि-ख० ।

दी० गगनमनिलश्च तेजः सलिलं भूमिश्च पञ्च भूतानि ।
श्रोत्रादिकरणवेद्याः शब्दाद्यास्तानि वेदकान्येषाम् ॥
वचनकरी वागासीत् पाणिः स्यात्करणभूतमादाने ।
गमनविसर्गानन्दत्रितये [1]पादादित्रिकं करणम् ॥
गन्धवती भूमिः स्यादापः सांसिद्धिकद्रवास्तेजः ।
[2]उष्णस्पर्शमरूपस्पर्शो वायुरम्बरं शब्दः ॥ इति ।

पुनरपि सिंहावलोकनन्यायेन भूतगुणानां पञ्चद[3]शतां विद्यायाश्च तन्मयरूपतां विवृणोति—पृथिव्यादिष्विति । पृथिव्यादिषु । आदिशब्देनापतेजोवाय्वाकाशा [4]गृह्यन्ते । तेषूत्तरोत्तरं व्यापकमधिकवृत्ति । [5]अधस्तनं भूतं व्याप्यं न्यूनवृत्ति । कोऽर्थः ? [6]आकाशमधस्तनानां भूतानां व्यापकम्, अधिकवृत्तित्वात् । अन्यान्यपि चत्वारि भूतानि व्याप्यानि, न्यूनवृत्तित्वात् । एवं वायुरग्न्यादीनां त्रयाणां व्यापकः, तानि त्रीणि व्याप्यानि । एवं तेजः अधस्तनभूतयोर्व्यापकं ते द्वे व्याप्ये । एवमापः पृथिव्या व्यापिका पृथिवी व्याप्येत्यर्थः । तेन व्यापकगुणा [7]व्याप्ये स्थिता इत्याह—तद्गुणा इति । व्यापकाश्रयास्तद्गुणा [8]व्यापकगुणा व्याप्येष्ववस्थिताः स्थूलसूक्ष्मविभेदतः । स्थूलम् अधिकवृत्ति व्यापकम्, सूक्ष्ममल्पवृत्ति व्याप्यम् । व्यापकव्याप्ययोः स्थूलसूक्ष्मविभेदाद् व्यापकगुणा व्याप्येषु तिष्ठन्तीत्यर्थः ॥ ३४–३५ ॥

(से०) ननु तथापि विद्यायां पञ्चदशाक्षराणीति तन्त्रेषु पुराणेषु च श्रूयमाणो घण्टाघोषो विरुध्यते, अतो नाधिकाक्षरसद्भावो युक्तः, येन निखिलविश्वव्याप्तिस्तद्द्वारोपपाद्येत, तत्सद्भावे वा पञ्चदशाक्षरीसमाख्याविरोधः । सेयमुभयतः पाशारज्जुरित्याशङ्क्य व्यवस्थाभेदादुभयमपि युज्यत इति समाधत्ते—( व्याप्तेत्यादि ) । उत्तरत्र स्वरव्यञ्जनभेदेनेत्युक्त्येह स्वरव्यञ्जनैक्येनेत्येतदाक्षितम् । ऐक्यं चाङ्गविशिष्टस्याङ्गिन एकत्वाभिप्रायेण । ततश्च द्वितीयतृतीयौ केवलस्वरौ निरङ्गावेव । लकारीयाकारा ईकाराश्चोभय एकैकाङ्गविशिष्टाः

---

१. पादादिकं–ख० । २. उष्णस्पर्शरूपं सुस्पर्शो वायुस्त्वपरं शब्दः–क० । ३. दशार्णवि–क० । ४. गृह्यन्ते । पृथिव्यादिषु भूतेषु उत्तरं भूतं व्या–ख० । ५. अधस्तरं व्याप्यं–क० । ६. आकाशः स्वाध–क० । ७. व्याप्येष्वर्थेषु–ख० । ८. व्यापकगुणाः–क० नास्ति ।

षट्, संयोगादिमाक्षरस्यानुस्वारस्य च याजुषप्रातिशाख्ये पूर्वाङ्गत्वविधानात्। इतरे सप्त स्वराः स्वपूर्वाङ्गविशिष्टाः। हल्लेखायाश्चरस्य बह्वृचादिप्रातिशाख्यरीत्योत्तराङ्गत्वमपि सम्भवतीत्यन्यदेतत्। नादत्रयस्य तु प्रातिशाख्यादौ पार्थक्येनाङ्गत्वावर्णनेऽपि बिन्दुसन्नियोगशिष्टत्वाद् बिन्दुवदङ्गत्वमेव। एवं द्वाविंशतेर्व्यञ्जनानां स्वराङ्गत्वेन तेषाञ्च पञ्चदशत्वादुक्तसमाख्योपपत्तिः, "एष वै सप्तदशः प्रजापतिः" इत्येतदुपपादनपरायामाश्रावयेति चतुरक्षरमित्यादिश्रुतौ "चतुरश्छ्रयताबाद्याक्षरलोपश्च" इति स्मृतावन्यत्राप्यनयैव रीत्याऽक्षरगणनस्य प्रसिद्धत्वात्। विद्या च भूतानि च गुणाश्चेति द्वन्द्वः। विद्येति तत्त्वान्तराणामुपलक्षणम्। तेन षट्त्रिंशत्तत्त्वात्मिका सा मूलविद्येत्यर्थः। चिच्छायाभूता विद्यात्मतामापन्ना ये गुणाः सत्त्वादयस्त्रयस्तदात्मिकेति वा। आत्मविद्याशिवतत्त्वरूपेति तु फलितम्। भूतगुणवाचकव्यञ्जनघटिता विद्येत्येव वा तदर्थः। तेन नात्र पञ्चदशस्वराणां पञ्चदशगुणात्मकत्वं कीर्तितमिति प्राचीनैरिव मन्तव्यम्, हकारादिव्यञ्जनानामेव गुणात्मकताया उत्तरत्र कथनात्। अत एव सप्तत्रिंशदक्षराणां क्रमेण षट्त्रिंशत्तत्त्वानि तत्त्वातीतमेकमित्येवंरूपतोत्तरश्लोके कथ्यत इति प्राचां व्याख्यापि न साधीयसी, तस्य ग्रन्थस्य तदुत्तरत्र विविच्यमानानां सप्तत्रिंशदक्षरार्थानां सङ्क्षेपेणोद्देश्यमात्रार्थत्वात्। नहि सम्प्रदायो महाबोधरूप इत्युपक्रमेण सम्प्रदायार्थ ईरित इत्युपसंहारेण च सम्प्रदायाभिधेकार्थमात्रबोधकत्वेन मध्यग्रन्थस्य सर्वस्यैकवाक्यतासिद्धौ सम्प्रदायार्थातिरिक्तभवदुक्तवासनयोर्मध्येऽवसरोऽस्ति, वाक्यभेदापत्तेः। अत एव वैश्वानरेष्टिवाक्ये पुत्रे जात इत्युपक्रमाद्यस्मिञ्जात इत्युपसंहाराच्चैकवाक्यतासिद्धावष्टाकपालादिवाक्यानां मध्ये पठितानामपि द्वादशकपालफलोपपादकत्वेन तच्छेषत्वमेव, न पार्थक्येन हविरन्तरविधायकत्वमिति स्वीकृतं प्रमाणलक्षणे। एवमनयोर्वासनयोर्वक्ष्यमाणार्थस्य संक्षिप्योपक्रममात्रार्थत्वेन तच्छेषतोपपत्तौ न स्वातन्त्र्यकल्पनमुपपत्तिमदिति मन्तव्यम्। पञ्चदशाक्षराणि न्यूनाधिकसंख्याव्यवच्छेदाय कूटभेदेन विभजते—पञ्चभिश्चेति। स्वरेति। स्वयं राजन्ते स्वरास्तैर्व्यङ्ग्यानि व्यञ्जनानि। "तेषु स्वराः स्वतन्त्रत्वात्तैर्व्यङ्ग्यं व्यञ्जनं भवेत्" इति तन्त्रराजोक्तेः। एवं निर्वचनबलेनैव व्यञ्जनानामापतदक्षरसंख्यापरिपूरणसामर्थ्यमपवदति—भेदेनेति। सर्वेषां भिन्नपदत्वकल्पनयेत्यर्थः। न चैवं सति ककारत्रये जश्त्वापत्तिः, एकाक्षरपदे व्यपदेशिवद्भावेनापततः पदान्तत्वस्य सुप्तितौ टकितावित्यादिज्ञापकैरनित्यत्वेन तदभावात्। सप्तत्रिंशत्संख्याः प्रभेदा

से० अवयवा अस्यां सन्तीति तथा। सप्तत्रिंशत्प्रभेदशब्दादौ मत्वर्थीय इनिर्द्वितीयेऽर्शआद्यच्। तेन प्रभेदेनेत्यत्र न बहुवचनापत्तिः। इयं विद्या सप्तत्रिंशदवयववता समूहेन षट्त्रिंशत्तत्त्वानि निरूपयति बोधयति। तथा तत्त्वातीतः स्वीयोऽभिप्रायो वेद्योऽर्थो यस्यास्तादृशी चेति योगिभिः कालत्रयेऽपि भाव्यते चिन्त्यत इत्यर्थः। सदेत्यत्र मयेत्यपि क्वचित्पाठः। एकादशस्वर एकश्चन्द्रबीजे द्वे रेफभूबीजक्रोधीशबिन्दुनादास्त्रयस्त्रयः कामकलाश्चतस्रो व्योमबीजानि पञ्च श्रीकण्ठा दशेत्येवं सप्तत्रिंशताक्षरैस्तत्त्वानि तदतीतञ्च प्रतिपाद्यते। सोऽयं सम्प्रदायार्थसंक्षेप इत्यर्थः। हादिविद्यायां त्वत्रत्यैका कामकला, एकादशस्वर एक इति द्वयमूनम्, चन्द्रबीजमेकं व्योमबीजमेकं द्वौ श्रीकण्ठौ चेति चत्वार्यधिकानि, तेनैकोनचत्वारिंशत् सम्पद्यन्ते। तेषु द्वितीयकूटमध्यमहकारस्य तृतीयकूटप्रथमसकारस्य च भावार्थप्रकरणे कारणत्ववर्णनात्तदुभयपरित्यागेन सप्तत्रिंशत्ता वर्णनीया। यत्तूक्तं कामकलाविलासे—

अज्व्यञ्जनबिन्दुत्रयसमष्टिभेदैर्विभाविताकारा।
षट्त्रिंशत्तत्त्वात्मा तत्त्वातीता च केवला विद्या॥

इति, तत्कतमतन्त्रस्थगणनमिति न जानीमः। ये च प्राञ्चस्तदनुसारेण प्रकृततन्त्रमेव योजयन्ति ते प्रष्टव्याः—नादत्रयत्यागे समष्टिग्रहणेऽत्र किंमूलमिति? ननु—"त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः" इत्यादिना पाणिनिशिक्षायां वर्णगणनावसरे नादस्य गणनाभावात्तस्य ध्वनिमात्ररूपत्वेन वर्णत्वाभावात् स्वरत्वव्यञ्जनत्वयोश्च वर्णत्वव्याप्यतया तदभावे तयोरभावावश्यम्भावान्मूले च स्वरव्यञ्जनभेदेनैव सप्तत्रिंशत्त्वोक्तेर्न नादानां तेषु गणना युज्यते, ततश्च सप्तत्रिंशत्प्रभेदिताया एव सिद्धेः। सप्तत्रिंशत्तान्यथानुपपत्त्या तत्त्वातीतप्रतिपादकत्वोक्त्या च समष्टिलाभः, तस्य तुरीयतत्त्वात्मकत्वात्,

मायान्तमात्मतत्त्वं विद्यातत्त्वं सदाशिवान्तं स्यात्।
शक्तिशिवौ शिवतत्त्वं तुरीयतत्त्वं समष्टिरेतेषाम्॥

इत्यभियुक्तवचनात्। न च समष्टितत्त्वस्य शोध्यत्वेन नित्यपरिशुद्धस्य तत्त्वातीतस्य कथं तदात्मकतेति वाच्यम्, महाकारणदेहरूपस्य तुरीयस्य स्थूलसूक्ष्मकारणदेहरूपाणि षट्त्रिंशत्तत्त्वान्यतीतस्याप्यानन्दमयकोशरूपत्वेन तस्यान्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासमिति मन्त्रे शोध्येष्वेव परिगणनात्। अत एव न तस्य ब्रह्मरूपतेत्याशयेन तथात्वं मन्यमानानामुपवर्षादीनां मतं निरस्यान्यथैवानन्दमयाधिकरणं वर्णित-

माचार्यभगवत्पादैरिति चेत्, मैवम्। "अनुस्वारो व्यञ्जनं वा स्वरो वा" इति शौनक- से
सूत्रभाष्ये बिन्दोरुभयानात्मकत्वोक्त्या बिन्दुत्रयस्यापि स्वरव्यञ्जनबहिर्भूतत्वेन प्रकृते तदगणनापत्तेः। न च याजुषप्रातिशाख्ये "शेषो व्यञ्जनानि" इति सूत्रेण स्वर-भिन्नवर्णत्वस्यैव व्यञ्जनलक्षणतोक्त्या बिन्दोरपि व्यञ्जनस्यावश्यकत्वं शौनकसूत्रस्थ-वाशब्दस्य नञर्थकत्वेन व्याख्यानमेवानुचितमिति वाच्यम्, स्वरभिन्नत्वस्य नादे विकल्पितत्वेन व्यञ्जनत्वसिद्धेः। न च नादस्य ध्वन्यात्मकत्वेन वर्णत्वाभाव इति वाच्यम्, घटे मृत्त्वस्येव वर्णेष्वपि ध्वनित्वस्येष्टत्वेन तस्य वर्णत्वाभावा-व्याप्यत्वात्। न च तस्य वर्णत्वे शिक्षादौ कथं न वर्णेषु परिगणनमिति वाच्यम्, तदपरिगणितस्यापि दीर्घऌकारस्यास्मन्मते वर्णताया इष्टत्वेन तैरपरिगणनस्या-प्रयोजकत्वात्। ननु दीर्घऌकारस्य पार्थक्येनैकपञ्चाशन्मातृकासु पाठाद्वर्ण-त्वम्। तथा सति केवलबिन्दोरुपध्मानीयादेश्च वर्णत्वानापत्तेः। न च नादस्य वर्णत्वे व्यञ्जनेष्वेव गणनापत्त्या "व्यञ्जनं स्वराङ्गम्" इति सूत्रेण स्वरयोगा-पत्तिः, अनुस्वारे स्वरत्वस्यापि सत्त्वेनेष्टापत्तेः, नवार्णमेरुमन्त्रे ककारीया-कारोत्तरमपि पाठदर्शनाच्च, नादस्य प्राचां पक्ष एकलवन्यूनार्धमात्राकालत्वेन व्यञ्जनत्वाभावाच्च। तस्मात्तत्तच्छास्त्रप्रवर्तकाचार्यैः स्वशास्त्रमात्रोपयुक्तकतिपय-वर्णगणनेऽपि नान्यत्र प्रसिद्धेषु वर्णेषु वर्णत्वपरिसंख्येत्येव तु तत्त्वम्। अथ "बीजबिन्दुध्वनीनाञ्च त्रिकूटेषु ग्रहात्मिका" इति प्रकृततन्त्र एव तस्य ध्वनित्वेन व्यवहारो दृश्यत इति चेत्, "हृल्लेखात्रयसम्भूतैस्तिथिसंख्यैस्तथाक्ष[रैः" इत्या-दावक्षरत्वव्यवहा]रोऽप्यस्तीति किन्तेन ध्वनित्वस्य सर्वानुस्यूतत्वाच्च। किञ्च, नादस्य केवलध्वनिरूपत्वे तन्त्रेष्वर्थवर्णनं तदवयवानामष्टानां विभज्य काल-वर्णनञ्च न स्यात्। न च रथघोषवत् पदार्थस्मारकत्वोपपत्तिः। माहेन्द्रस्तोत्रो-पाकरणेन सह तस्यैककालत्वविधानेन तत्रैव तस्य स्मारकत्वेऽपि रथघोषान्तरे तदभावात्, प्रकृते च नादस्यार्थविशेषे शक्तिविधानेन सर्वत्र तथात्वेन वैषम्यात्। किञ्च, शौनकादिसूत्रोक्तस्य बिन्दोर्व्यञ्जनत्वाभावस्य कामकलाविलासकृतापि व्यञ्जनेभ्यो बिन्दुत्रयं पृथग्गणयतानुमतत्वेन मूलस्थव्यञ्जनपदेन बिन्दूनामनु-पस्थितावप्युत्तरत्र विवरणदशायां "बिन्दुभिस्त्रिभिरुच्यन्ते रुद्रेश्वरसदाशिवाः" इत्यर्थवर्णनदर्शनादेव लिङ्गादत्रत्यव्यञ्जनपदेन बिन्दवोऽपि विवक्षिता इत्यकामे-नापि भवता व्याख्येयम्। तदिदं नादत्रयेऽपि तुल्यम्, "शान्तिः शक्तिश्च शम्भुश्च नादत्रितयबोधनाः" इत्युत्तरत्रार्थवर्णनस्य व्यञ्जनान्तरवदर्धमात्राकालस्य चाविशे-षात्। तस्मान्न कथञ्चन नादत्रयत्यागे बीजमाकलयामः। ततश्च तेनैव

से० कादिविद्यायाः सप्तत्रिंशदवयवत्वे सिद्धे तदन्यथानुपपत्तेरभावात् समष्टिग्रहणमप्यसमञ्जसमेव, तत्त्वातीतवाचकस्याप्यक्षरस्य लाभात्। वस्तुतस्तत्त्वातीतपदस्यानन्दमयकोपपरत्वे मानाभावात्तस्य देहत्रयातीतत्वेऽपि तुरीयतत्त्वरूपतया तत्त्वातीतत्वासम्भवाच्च। परब्रह्मपरताया एव वक्तव्यतया न समष्टिसंग्रहावश्यकता, प्रत्युत हादिविद्यायां चत्वारिंशत्प्रभेदापादकञ्च। समष्टेः स्वरव्यञ्जनोभयाभिन्नत्वेन स्वरव्यञ्जनभेदेन सप्तत्रिंशत्प्रभेदिनीति मूलविरोधश्च। तस्माद्धादिविद्यायां प्रकृततन्त्रानुरोधेन नादत्रयसमष्टिहानोपादानाभ्यां सप्तत्रिंशत्प्रभेदितावर्णनं गीर्वाणगुरूणामपि दुःशकमिति मन्तव्यम्। एतेन कादिविद्यायां हादिविद्यावत्सप्तत्रिंशत्ता कथं स्यादिति चिन्तया सन्तपन्ती कादिविद्याया एव प्रत्युत शून्यतेति भ्राम्यन्ती तत्परिजिहीर्षया सप्तत्रिंशत्त्वमुपपादयन्ती द्वितीयस्य सन्ध्यक्षरत्वेन तृतीयस्य दीर्घत्वेन द्विद्विवर्णात्मकत्वेन गणनं सम्प्रदायसिद्धमिति शिष्येभ्य उपदिशन्ती तत्तद्गुरुपरम्पराचिद्वल्लयादिग्रन्थपरम्परा चामृतानन्दनाथीयभ्रमव्यापारमूलकत्वादन्धेनैव नीयमाना यथान्धा इति न्यायानुकारित्वादेव निरस्ता वेदितव्या, अवशिष्टकामकलात्रयस्यापि दीर्घत्वाविशेषेणाक्षराधिक्यापादकत्वाच्च। तस्मात्कार्याक्षराणि सप्तत्रिंशदित्येव तत्समर्थनं युक्तम्। वाक्यार्थवर्णनन्तु कारणवर्णयोर्मेलनेनैव, पदद्वयं परित्यज्य वाक्यार्थवर्णनस्यानुचितत्वादित्यलं पल्लवितेन ॥ ३२-३३ ॥

एतावता प्रबन्धेन विद्याया भूतगुणादितत्त्वातीतान्तपदार्थजातस्वरूपत्वं सम्मुग्धाकारेणोक्तं तदेवेदानीं तत्तल्लक्षणकथनपूर्वकं विशदीकृत्योपदिशति—(पृथिव्यादिष्वित्यादि)। पृथिव्यादीत्यादिपदेनाप्तेजोवाय्वाकाशपरिग्रहः। एतत्पूर्वत्तरोत्तरं व्यापकं जनकं प्रयोजकञ्च। मृत्तिकायाः स्वजन्ये घटे व्याप्तिदर्शनाद्व्यापकपदेनोपादानकारणमुच्यते। तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपं व्यापकत्वमप्यक्षतमेव। परन्तु तद्वत्त्वमभेदसम्बन्धेन। अभावस्तु परिणामित्वसम्बन्धावच्छिन्नप्रतियोगिताक इति विशेषः। अधस्तनं पूर्वपूर्वव्याप्यं जन्यप्रयोज्यम्, प्रयोज्यञ्च परिणाम्यभाववदवृत्तित्वरूपञ्च। अभाववृत्तित्वं पूर्वोक्तसम्बन्धाभ्यामवच्छिन्नमेव। तत्तस्मात्कारणाद्व्यापकाश्रया जनकप्रयोजकसमवेता गुणा व्याप्येषु जन्यप्रयोज्येष्वप्यवस्थिता भवन्ति। ते च कारणे स्थिता गुणाः स्थूला इत्युच्यन्ते। त एव कार्येषु स्थिताः सूक्ष्मा इत्युच्यन्त इत्यर्थः ॥ ३४-३५ ॥

तस्माद्व्योमगुणः शब्दो वाय्वादीन् व्याप्य संस्थितः ।
व्योमबीजैस्तु विद्यास्थैर्लक्षयेच्छब्दपञ्चकम् ॥ ३६ ॥
तेषां कारणरूपेण स्थितं ध्वनिमयं परम् ।
भवेद् गुणवतां बीजं गुणानामपि वाचकम् ॥ ३७ ॥
कार्यकारणभावेन तयोरैक्यं विवक्षया ।
महामायात्रयेणापि कारणेन च बिन्दुना ॥ ३८ ॥
वाय्वग्निजल[1]भूमीनां स्पर्शानां च चतुष्टयम् ।
उत्पन्नं[2] भावयेद् देवि ! स्थूलसूक्ष्मविभेदतः ॥ ३९ ॥

दी० ननु[3]कस्य कस्य भूतस्य गुणाः केषु केषु भूतेषु स्थिताः [4]विद्यायाः कानि कान्यक्षराणि [5]कस्य कस्य भूतस्य गुणान् लक्षयन्तीत्यत आह—तस्मादिति । तस्माद् व्योम्नः स्वे[6]तरभूतेभ्यः स्थूलत्वाद् व्यापकत्वम्, तेन व्योमगुणः शब्दो वाय्वादीन् वायुतेजःसलिलपृथिव्यात्मकान् व्याप्य स्थितः विद्यास्थैर्व्योमबीजैः पञ्चभिः पञ्चभूतेषु स्थितानां शब्दानां पञ्चकं लक्षयेत् । व्योमवाचकत्वाद्धकारपञ्चकं तद्गुणं शब्दपञ्चकं लक्षयतीत्यर्थः ॥ ३६ ॥

ननु विद्यायां षड्धका[7]राः सन्ति, अन्यस्य हकारस्य किम्प्रयोजनमित्यत आह—तेषामिति । तेषां शब्दानां कारणरूपेण स्थितः कारणात्मना स्थितो ध्वनिर्नादः शब्दानां कारणम् । तदुक्तमभियुक्तैः—

पिण्डो वाचकविस्तरस्य [8]महतः संस्कारशे[9]षस्थिति-
र्नादोऽसौ तव देवि ! मूर्ध्नि समनासीमानमुल्लङ्घयन् ।
(घ[10]ण्टाक्काण इव क्रमेण विरमन्नन्यामणीयस्तरी-
माजिघ्रन् परचिद्दशामनुभवन् मूर्ति पुराणीं मम ॥ इति ।)

तन्मयं [11]तल्लक्षकत्वात् । परं कामराजबीजस्थितककारलकारमध्यगतहकारात्परम् । कोऽर्थः ? कामराजमध्यस्थितः षष्ठो हकार आकाशादि-

१. भूमिषु स्पर्शनानां चतु—क० । २. उत्पन्नं तदेतत्स्थूल—क० । ३ कस्य—क पुस्तके नास्ति । ४. विद्यायां—ख० । ५. कस्य कस्य भूतस्य गुणान्—ख पुस्तके नास्ति । ६. स्वेतरेभ्यः—ख० । ७. कारा निवसन्ति—ख० । ८. महतः—क पुस्तके नास्ति । ९. दोषास्थिति—ख० । १०. घनुश्चिह्नान्तर्गतं क पुस्तके नास्ति । ११. तल्लक्ष्यत्वात्—ख० ।

दी० पञ्चभूतगतशब्दपञ्चककारणनादरूपः कामराजबीज[1]स्थितस्य स्थितिरूपतां [2]लक्षयतीत्यर्थः। ननु हकारादिवर्णा आकाशादिभूतवाचका इत्युक्तं कथं शब्दादि[3]पञ्चभूतगुणानामपि वाचका इत्युच्यन्त इत्यत आह—भवेदिति। गुणवतां गुणाः शब्दादयः पञ्च तद्वतामाकाशादीनां पञ्चभूतानां बीजम्। जातावेकवचनम्। अत्र विद्यायां हकारादीनि पञ्चभूताक्षराणि व्यञ्जनानि। अत्रैवोक्तम्—"हकाराद्व्योम संभूतम्" (यो० हृ०सं०२ श्लो० २९) इत्यादिना। अतो बीजान्युच्यन्ते। ककारादिक्षकारान्तानां व्यञ्जनानां बीजत्वमुक्तं चिद्गगनचन्द्रिकायाम्—

पण्डवर्जमहिमद्युतेः[4]कलाः
बिन्दुसर्गरहिताश्च ये शुचेः।
सर्व एव शशिनः[5]कलाः शिवे
योनयो विधृतबी[6]जतः स्वराः॥

परापञ्चाशिकायामप्युक्तम्—

द्विधेयं मातृका देवी बीजयोन्यात्मना स्थिता। इति[7]।

तानि तद्गुणानां शब्दादीनां वा[8]चकं लक्षकाणि हकाराद्यक्षराणि आकाशाद्यर्थेषु सङ्केतितत्वात्तद्गुणेषु शब्दादिषु [9]लक्षकाण्येव। तदुक्तमभियुक्तैः—

साक्षात्सङ्के[10]तितं योऽर्थमभिधत्ते स वाचकम्। [11]इति।

कोऽर्थः? शब्दादिगुणवतामाकाशादिभूतानां यानि बीजानि वाचकानि [12]हकारादीनि तानि तद्गुणानां शब्दादीनां [13]लक्षकाणीत्युक्तम्॥३७॥

लक्षणायां निमित्तमाह—कार्यकारणेति। तयोर्गुण[14]गुणिनोः कार्यकारणभावेन। गुणी कारणम्, गुणः कार्यम्। अतः कार्यकारणभावेन एक[15]त्वविवक्षया विवक्षितमेवैकत्वं न तु तात्त्विकम्, गुण-

१. स्थितस्य—ख पुस्तके नास्ति। २. तां च लक्ष—क०। ३. पञ्चदशगुणा—क०। ४. द्युतेस्वराः सर्गबिन्दुर्रहि—क०। ५. कलाश्च ये योन—ख०। ६. बीजकांस्तदा—ख०। ७. इति—क पुस्तके नास्ति। ८. वाचकानि—ख०। ९. लक्षणान्ये—क०। १०. तितो योऽर्थ अ—क०। ११. इति—क पुस्तके नास्ति। १२. हकारादीनि—ख पुस्तके नास्ति। १३. लक्षणानीत्यर्थः—क०। १४. गुणिनोः गुणिनः कार्यकारणगुणाः अतः—ख०। १५. एकत्वं विवक्षितं न तु—ख०।

गुणिनोः कार्य[1]कारणभावादेकत्वमारोप्य [2]तत्सम्बन्धं निमित्तीकृत्य दो० लक्षणया गुणिशब्दा गुणेषु यो[3]ज्यन्ते । तदुक्तं महास्वच्छन्दसंग्रहे—

[4]शब्दः शान्तत्वघोरत्वविशेषापन्नरूपकः ।
शब्दस्तु शब्दतन्मात्रं मृदूष्णकठिनश्चलः ॥
विशिष्टस्पर्शरूपश्च स्पर्शतन्मात्रसंज्ञितः ।
नीलपीतत्वशुक्लत्वविशिष्टं रूपमेव च ॥
रूपतन्मात्रमित्युक्तं [5]मधुरत्वादिसंयुतम् ।
रसतन्मात्रसंज्ञं तु सौरभ्यादि[6]विशेषितः ॥
गन्धः स्याद्गन्धतन्मात्रं तेभ्यो वै भूतपञ्चकम् ।
आकाशः शब्दतन्मात्रं नित्यं शब्दगुणं महत् ॥
व्यापकं निर्मलं तत्त्वमवकाशप्रदानकम् ।
स्पर्शतन्मात्रतो [7]वायुश्चलद्रूपोऽनिलोऽभवत् ॥
[8]जगत्प्राणोऽनिलो व्यूहप्रेरणं च लघुर्भवेत् ।
शब्दस्पर्शगुणः प्रोक्तो गमागमनकर्मकृत् ॥
[9]शब्दस्पर्शरूपगुणं तेजस्तत्त्वन्तु भास्वरम् ।
रूपतन्मात्रकार्यं च पाककर्मकरं शिवे ! ॥
रसतन्मात्रतो जातं वारितत्त्वं द्रवात्मकम् ।
शब्दस्पर्शरूपरसगुणसंग्रहकर्मकृत ॥
शब्दस्पर्शरूपरसगन्धपञ्च[10]गुणान्वितम् ।
पृथिवीतत्त्वमाख्यातं [11]कठिनं सर्वधारणम् ॥
पृथ्व्यादिव्योमतत्त्वान्तपञ्चकं पूर्वपूर्वकम् ।
[12]कार्यं सृष्ट्या समावृत्य वर्तते पञ्चकं क्रमात् ॥ इति ।

[13]( एवमन्यत्रापि—

---

१. कारणत्वमावा–क० । २. तदेव सम्बन्ध–क० । ३. योज्या इत्यर्थः–ख० । ४. शब्दः सान्तद्वयोरर्थविशेषोऽयं न रूपकः–ख० । ५. मधुरत्वोष्णसं–ख० । ६. विशेषतः–क० । ७. वायुश्छिद्ररूपो नभसोऽभवत्–क० । ८. एष प्राणोऽलघुव्यूहप्रेरणश्च–क० । ९. शब्दः स्पर्शो रूपगुणौ–क० । १०. गुणात्मकम्–ख० । ११. कथितं–ख० । १२. कार्यदृष्ट्या समावर्त्या–क० । १३. धनुश्चिह्नान्तर्गतं ख पुस्तके नास्ति ।

दी० समष्टिबिन्दुना वायुः स्थूलसूक्ष्मविभेदतः ।)

पूर्वं विद्यास्थहकारपञ्चकस्य पञ्चभूतस्थितशब्द[1]पञ्चकं पूर्वं कथयित्वेदानीं वाय्वादिभूतचतुष्टयगतं स्पर्शचतुष्टयं [2]वायुवाचकबीजैर्लक्षयति—महामायेति । महामायाः ईकाराः, [3]तेषां क्रमेण बीजत्रयशिखरवर्तिनामीकाराणां बिन्दुद्वयहार्धमात्रामयानां [4]त्रयाणां कारणेन च बिन्दुना तदक्षर[5]त्रयकारणेन अकारहकारसामरस्यरूपेण कामाख्येनोर्ध्वबिन्दुना वाय्वग्निजलभू[6]मिष्ठानां स्पर्शानां [7]चतुष्टयमुत्पन्नं लक्ष्यं भावयेत् । स्थूलसूक्ष्मविभेदतः सूक्ष्माणि पृथिव्यप्तेजांसि, स्थूलः वायुरर्वाचीनेभ्यः । अत एव [8]एवंविधेन ईकारत्रयेणापि लक्षिता बिन्दवः [9]षट्सङ्ख्याकाः । कारणं बिन्दुः समष्टिवृत्तं हि षड्बिन्दुलाञ्छितवृत्तात्मकत्वाद् वायुमण्डलस्य । दुक्तमभियुक्तैः—"कण्ठादितालुपर्यन्तं वृत्तं षड्बिन्दुलाञ्छितम् । धूम्रम" इति । तद्वायुमण्डलवाचकेन ईकारत्रयेण समष्टिबिन्दुना च स्थूलसूक्ष्मविभेदतो वाय्वादि[10]भूतचतुष्टयस्थितं स्पर्शचतुष्टयं [11]लक्षयेदित्यर्थः ॥ ३८-३९ ॥

(से०) तावता प्रकृते किमायातमित्याशङ्क्य षट्त्रिंशत्तत्त्ववाचकान्यक्षराणि प्रदर्शयति—(तस्मादित्यादि) । यस्माद्व्यापकगुणा व्याप्येषु तिष्ठन्ति तस्माद्व्योम्नो व्यापकस्य गुणः शब्दो वाय्वादीन् वायुतेजोजलपृथिवीर्व्याप्य तिष्ठतीति पञ्चविधः शब्दो भवति । अतो विद्यास्थैः पञ्चभिर्व्योमबीजैर्हकारैः शब्दपञ्चकं लक्षयेत् । उपासक इति शेषः । शक्यादशक्योपस्थितिर्लक्षणेति प्राचां पक्ष उपस्थित्याश्रयः साधक एव कर्ता, शक्यसम्बन्धरूपलक्षणाया वृत्तिरूपत्वात् । पदनिष्ठत्वपक्षेऽपि विवक्षातः कारकविभक्तयो भवन्तीति सिद्धान्तात् पदस्य करणत्वविवक्षायामुपासकस्य प्रयोजककर्तृत्वम् । ननु मध्यमहकारस्य विमर्शवाचकत्वम्भावार्थप्रकरणे कथितम् । तस्यापि शब्दलक्षकत्वे युगपद्वृत्तिद्वयविरोध इत्यत आह—तेषामिति । तेषां पञ्चानां हकाराणां मध्ये कारणरूपेण श्रीचक्रा-

---

१. पञ्चकलक्षकतामुक्त्वा इदानीं वायुवाचकैरक्षरैस्तद्गुणस्पर्श—ख० । २. वायुवाचकबीजैः—ख पुस्तके नास्ति । ३. तेषां त्रयं त्रिबीजशिखर—ख० । ४. त्रयकारणेन—ख० । ५. त्रय—ख पुस्तके नास्ति । ६. भूमीनां—ख० । ७ चतुष्टयं भाव—क० । ८. एवंविध ईकारत्रयेण बिन्दवः—क० । ९. षट् सन्ति कारणं—ख० । १०. भूत—ख पुस्तके नास्ति । ११. च लक्ष—क० ।

त्मकजगत्कारणकामकलाशरीरघटकत्वेन वा स्थितं विसर्गरूपं हकाराक्षरं तत्तु से०
ध्वनिमयं नादैकमयम। अत एव परं सूक्ष्मादपि सूक्ष्मं वासनामयशरीरमिति यावत्। स्थूलतमस्य वैखरीरूपहकारस्यैव शब्दलक्षकत्वं परारूपस्य हकारस्य विमर्शशक्तिवाचकत्वमिति पदव्यक्तिभेदेनार्थद्वयबोधकत्वस्योक्तेर्न वृत्तिद्वयविरोध इति भावः। हादिविद्यापक्षे त्वेतदर्धं षष्ठहकारप्रयोजनवर्णनपरत्वेन योजयन्ति परं षष्ठ हकाराक्षरं पञ्चानां हकाराणां कारणभूतो यो नादस्तद्बोधकमिति। षट्त्रिंशतस्तत्त्वानामपि यत्कारणं तत्त्वातीतं नादब्रह्म तत्परः कामराजमध्यमहकार इत्यपि तदर्थः सुवचः भावार्थप्रकरणे कथितेनार्थेन सह संवादसम्भवात्। तस्यार्थस्य तद्वाक्यार्थेऽनन्वितत्वेनैव तदुपयोगस्यावश्यकत्वाच्च। नन्वाकाशवाचकस्य हकारस्य वाय्वादिशब्दे लक्षणा कथं शक्यसम्बन्धाभावादित्यत आह—भवेदिति। यद्गुणवद्वाचकं यदक्षरं तत्तत्समवेतगुणलक्षकमिति सामान्यनियमानुसारेण व्योमवाचकहकारस्य शब्दे लक्षणासिद्धौ तस्यैव शब्दस्य तत्त्वान्तरसम्बन्धेऽपि पूर्वक्लृप्ता लक्षणा न विहन्यते। नहि यष्टिशब्देन लक्षितानां यष्टिधराणां देशान्तरगमने लक्षणायाः काचन हानिः। न च तेषां देशान्तरगमनेऽपि यष्टिसम्बन्धानपायाल्लक्षणा युक्तेति वाच्यम्, शब्दस्य वाय्वादिनिष्ठत्वेऽपि कार्ये कारणानुवृत्तेरावश्यकतया वाय्वादिचतुष्टयेऽप्याकाशानुवृत्तेः सत्त्वेन व्योमसम्बन्धानपायस्य प्रकृतेऽपि तुल्यत्वादिति भावः। अत एव "प्रधानं तेजसो रूपं तद्बीजेन हि जन्यते" इति [तेजोक्षरार्थानि]रूपणे वक्ष्यति। स्वबोध्याभिन्नत्वस्य वाचक इव लक्ष्यकेऽपि सद्भावप्रदर्शनाय गौण्या लक्षकं निर्दिशति—वाचकमिति। वाच्यवाचकयोरिव लक्ष्यलक्षकयोरप्यभेद इति भावः। यद्वा गुणवतां वाचकं बीजं गुणानामपि वाचकं भवतीत्यन्वयः। तेन हकारस्य शब्दवत्येव शक्तत्वाच्छक्यतावच्छेदके शब्देऽपि शक्तेरनपायाच्छब्दस्यापि हकारो वाचक इत्यर्थः। तेन लक्षयेदित्युपक्रमस्थमपि पदमुपासककर्तृकत्वाज्जानीयादित्यर्थकम्। कार्येति। वाय्वाकाशयोः कार्यकारणभावेनाकाशस्य वाय्वादावनुवृत्तिविवक्षया तदीयशब्दे लक्षणा युज्यते। यद्वा आकाशं शब्दतन्मात्राज्जातं शब्दगुणं विभिरिति स्वच्छन्दसंग्रहोक्तरीत्याकाशाच्छब्द इति नैयायिकरीत्या वा शब्दाकाशयोः कार्यकारणभावेन तयोरभेदविवक्षया हकारस्याकाश इव शब्देऽपि शक्तिर्लक्षणा वा युज्यत इत्यर्थः। वस्तुतस्तु गुणवतां वाचकं सदेव बीजं गुणानां वाचकमपि भवतीत्यर्थः। विशिष्टवाचकमिति यावत्, मन्त्रे भूतवाचकेनाक्षरान्तराणामनिर्देशात्। शब्दादीनां तन्मात्रपदपरित्यागेन

से० गुणपदेनैव निर्देशात् सत्त्वरजःतमस्स्वपि वक्ष्यमाणोऽयमेव न्याय इति ध्वनितं तेषां गुणत्वाविशेषात् । ननु व्योमादिबोधकहकारादिजन्ये बोधे शब्दादिः किं विशेष्यः प्रकारो वा ? नाद्यः, सकृदुच्चरितन्यायाविरोधाय हकारादेरावृत्त्यापत्तेः, अनेकार्थपदादनेकविशेष्य(प्र)कारोपस्थित्योरावृत्तिमन्तरेणायोगात् । नान्यः, वाच्यतावच्छेदकत्वेन पर्यवसितैर्गुणैः सह वाचकस्याभेदायोगेन विवक्षितार्थासिद्धेः । नहि शब्दवर्णाक्षरादिपदानां वाच्याभेदेऽपि शब्दादिजात्याभेदः समस्तीत्यत आह—कार्येति । वाच्यवाच्यतावच्छेदकयोः कार्यकारणभावाभावे विवक्षितासिद्धावपि प्रकृते वाच्यतावच्छेदकस्य वाच्यजन्यत्वेन प्रकारतया तस्य बोधस्वीकारेऽपि वाचकाभेदोऽनावृत्तिश्चाक्षराणां युज्यत इति भावः ॥ ३६-३७ ॥

एवं व्योमाक्षराणि निर्दिश्य क्रमप्राप्तत्वाद्वाय्वक्षराणि व्याचष्टे—( महामायेत्यादि )। महामाया त्रयं हृल्लेखाघटकमीकारत्रयं कारणबिन्दुः कामकला। "ईस्त्रिमूर्तिर्महामाया" इत्यधिकृत्य "शिवोत्तमः शिवा तुष्टिश्चतुर्थी बिन्दुमालिनी" इति कोशात् । श्रीचक्रस्थबिन्दुव्यावर्तनाय कारणेति । कामकलात्मकबिन्दोश्चक्रबिन्दुं प्रति कारणतायाः पूर्वमुक्तत्वात् । तेन चक्रबिन्दुभिन्नस्य कौलिकार्थे वक्ष्यमाणस्याक्षरस्य व्युदासः । निर्बिन्दुक ईकारश्चतुर्थ इति यावत् । स्थूलो वायुगत एकः सूक्ष्मा अग्न्यादिगतास्त्रय इत्येवं स्पर्शचतुष्टयमीकारचतुष्टयेन जातं विभावयेदित्यर्थः । हादिपक्षे तु तृतीयकूटस्थप्रथमाक्षरस्थोऽकारः कारणबिन्दुपदेनोपादेयः । तस्य सर्वकारणस्य स्पर्शकारणतायाः कैमुतिकन्यायसिद्धत्वध्वननाय कारणेति विशेषणम् । बिन्दुः शून्यमकारः । अत एवाकाराधिकारे "कामेशीवासिनी वियत्" इति वियत्पदं कोशे बिन्दुपदेनाकारनिर्देशोऽकारान्तरव्यावर्तनाय । सर्वकारणरूपाकारस्यैव शून्याकारत्वात् । प्राञ्चस्तु कामकलाशरीरघटकेन कामाख्येन बिन्दुर्नीत व्याचक्षते । तन्न, महामायात्रयातिरिक्तरूपस्य तस्य हादिविद्यायामदर्शनात् । त्रयघटकस्य तु सकृद्गणितस्य पुनर्गणनायोगात् । अनापत्त्या पुनर्गणने विनिगमनाविरहात् त्रयाणामपि गणनापत्तिः । इष्टापत्तौ सप्तत्रिंशदाधिक्यम् । द्वयोस्त्यागेन तत्समाधाने त्वस्मदुक्तरीत्यां कः प्रद्वेषः । [ यद्यपि ] प्रद्वेषो द्वयोस्त्यागस्य तुल्यत्वात्तथापि भवन्मते समष्टिग्रहणेन नादत्रयस्य दुस्त्यजत्वेन च संख्याविरोधतादवस्थ्याच्च, एकाक्षरावयवानां पार्थक्येन वाक्यार्थान्वयितायाः सकलदर्शनकाराणामसम्मतत्वाच्चेति न किञ्चिदेतत् ॥ ३८-३९ ॥

रूपाणां त्रितयं तद्वत् त्रिभी रेफैर्विभावितम् । दी०
प्रधानं तेजसो रूपं तद्बीजेन हि जन्यते ॥ ४० ॥

[1]वाय्वादिचक्रवलयेन वायुगुणं स्पर्शचतुष्टयं लक्षयित्वा इदानीं तेजोवाचकैरक्षरैस्तद्गुणं रूपत्रयं च लक्षयति—रूपाणामिति । रूपाणां त्रितयं वह्निवारिभूमिष्ठानां रूपाणां त्रितयं त्रिभी रेफैर्विभावितं लक्षितम् । ननु [2]रूपं पृथिव्यप्तेजसां साधारणं कथं तेजोबीजेन रेफेण लक्षितमित्यत आह—प्रधानमिति । ननु [3]सत्यं त्रिष्वपि भूतेषु विद्यते रूपम्, तथापि वाय्वाकाशयोरभावात्प्रथमं तेजस [4]एव रूपं प्रधानम् । पश्चादितरयोर्भूतयोस्तद्बीजेन रेफेण जन्यते [5]प्रकाश्यते । जननं प्रादुर्भावः ॥ ४० ॥

से० अथ तेजोक्षराणि व्याचष्टे—(रूपाणामित्यादि) । त्रितयं तेजोजलक्षितिगतम् । ननु जलक्षितिगतयो रूपयोस्तेजोबीजेन कथं लक्षणेत्यत आह—प्रधानमिति । व्याख्यातमेतत् ॥ ४० ॥

विद्यास्थैश्चन्द्रबीजैस्तु [6]स्थूलसूक्ष्मो रसः स्मृतः ।
सम्बन्धो विदितो लोके रसस्याप्यमृतस्य च ॥ ४१ ॥

(दी०) पूर्वं तेजोवाचकैरक्षरैस्तेजोगुणं रूपत्रयं लक्षयित्वेदानीमब्वाचकैरक्षरैस्तद्गुणं रसद्वयं [7]लक्षयति—विद्यास्थैरिति । [8]विद्याबीजस्थैश्चन्द्रबीजैः सकारैः । अभिधानमात्रमेतत् । तदुक्तमभियुक्तैः—

व्योमेन्दुवह्न्यधरबिन्दुभिरेकमन्यत्
([9]शक्ताच्छिवेन्दुशिखिभिः सरमार्यचन्द्रैः ।
अन्यद्युशीतकरपावकमन्त्यमन्त्यै-
र्बीजैरमीभिरुदिता त्रिपुरेति विद्या ॥)

---

१. वायुवाचकैः वायुगुणं–ख० । २. रूपं–क पुस्तके नास्ति । ३. सत्यं–ख पुस्तके नास्ति । ४. तेजसो रूपं–ख० । ५. प्रकाश्यते । जननं प्रादुर्भावः–ख पुस्तके नास्ति । ६. स्थूलः सूक्ष्मो–ख० ग० । ७. च लक्ष–क० । ८. विद्याबीजस्थैः–ख पुस्तके नास्ति । ९. धनुश्चिह्नान्तर्गतं ख पुस्तके नास्ति ।

दी० [1]स्थूलसूक्ष्मः, स्थूलो रसः, अप्तत्त्वगतो व्यापकत्वात्, सूक्ष्मरसो भूतत्त्वगतो व्याप्यत्वात् स्मृतो भावितः। स्मृतिर्हि भावना।

ननु [2]विद्यायां सकारत्रयमस्ति, अप्पृथिव्योस्तु रसद्वयमेवेतरेण सकारेण किमुच्यत इत्यत आह–सम्बन्ध इति। अमृतस्य सुधाया रसस्यापि सम्बन्धो लोके विदितः—सुरासुरैरपान्निधौ मथ्यमाने तत्सार-भूतममृतं [3]समुदितमिति पुराण[4]प्रसिद्ध्या लोके विदितः परि[5]ज्ञातः। अत्राप्तत्त्वसारभूतत्वात्तद्गुणो रसस्तृतीयसकारेण लक्ष्यते। कोऽर्थः? अप्तत्त्वं स्थूलम्, अमृतं तत्सारभूतं सूक्ष्मम्, तद्व्याप्या पृथिवी च सूक्ष्मा, तेन सलिलामृत[6]पृथिव्यन्तरे त्रिधा स्थितो रसो विद्यास्थैस्त्रिभिः सकारै लक्ष्यत इत्यर्थः॥ ४१॥

से० अथ जलाक्षराणि व्याचष्टे—( विद्येत्यादि )। [ चन्द्रबीजैः सकारैः। "सो हंसः ] सहजा विष्णुर्भृग्वीशश्चन्द्रसंज्ञकः" इति कोशात् [स्थूलो व्यापको जलगतः। सूक्ष्मो व्याप्यो भूगतः। विद्यास्थैश्चन्द्रबीजैरिति बहुवचनाभ्यामपि द्वित्वसंख्यैव कथ्यते। ] वाच्यस्य रसस्य स्थूलः सूक्ष्म इति प्रत्येकैकत्वेन द्वित्वस्यैव कथनात्, तृतीयरसस्याभावाच्च, 'अक्षीणि मे दर्शनीयानि' पादा मे सुकुमारा इत्यादिप्रयोगवशेन द्वित्वेऽपि बहुवचनस्य साधुताया महाभाष्ये वर्णनात् "कुक्षीशवायुकोणेषु" इति चक्रन्यासप्रकरणस्थस्य कोणद्वयपरतां वीरेन्द्रैरिति भावार्थप्रकरणस्थपदस्य च शान्ताम्बिकोभयमात्रपरतां वर्णयतां प्राचामप्यस्यार्थस्य सम्मतत्वाच्च, प्रकृतेऽपि तन्मत उत्तरार्धस्यैव तृतीयसकार-व्याख्यारूपतयात्रत्यबहुवचनस्य द्वित्वसंख्याबोधकत्वावश्यंभावाच्च। एतेनात्र बहुवचनवशात् सम्प्रदायार्थग्रन्थः सर्वोऽपि हादिविद्यापर एवेति मन्यमानानां तत्पक्षपातिनां तोष आपातरमणीयत्वान्निरस्तः। पदमप्यधिकाभावस्मारकान्नाति-रिच्यत इत्याशयेनाह—स्मृत इति। द्वाभ्यां साभ्यां द्वौ रसौ स्मरेदित्यर्थः। ननु चन्द्रसूर्याग्नीनां तेजस्त्वाविशेषेणाग्निबीजस्य रेफस्यैव चन्द्रबीजस्य सकारस्यापि रूपलक्षकत्वमेव युक्तन्न रसलक्षकत्वं शक्यसम्बन्धाभावादित्यत आह—सम्बन्ध इति। रसामृतयोः सम्बन्धः प्रसिद्ध एवेत्यर्थः। अमृतपदं सुधापरं जलपरञ्च।

१. स्थूलः सूक्ष्मः–ख०। २. विद्यायामस्यां–ख०। ३. समुदितं–ख पुस्तके नास्ति। ४. प्रसिद्धं–ख०। ५. ज्ञातम्। अतोऽमृतस्य सार–ख०। ६. पृथिव्यन्तरस्थितो–ख०।

अयं भावः—न तावच्चन्द्रमण्डलन्तेजोरूपम्, अपि तु जलरूपम्। जलमण्डले सौरकिरणानां सन्निकर्षविप्रकर्षतारतम्येनांशतः सम्बन्धे सति तत्र प्रतिफलनेन ततः परावृत्तास्त एव सौरकिरणा उपाधिवशादनुष्णतामापन्ना दर्पणान्तःप्रतिफलितसौरकिरणा इव भुवि प्रसरन्तश्चन्द्रिकापदवाच्या भवन्ति। तदिदं ज्योतिःशास्त्रवेदिनां स्पष्टम्। तन्मण्डलजलन्तु अमृतरूपं केवलं वेत्यन्यदेतत्। ततश्च वकारो यथा जलसामान्यस्य वाचकं बीजं तथा मकारबीजं जलविशेषस्य वाचकमित्येव विशेषः। न त्वेतावता वकारसकारयोस्तत्समवेतरसलक्षणायां कश्चित्सन्देहो नद्यां घोषो गङ्गायां घोष इति वाक्यस्थपदयोरिव तीरलक्षणायामिति। यद्यपि यकारालाभे तत्सुसदृशमायाया इव वकारालाभे तत्सुसदृशस्याप्यलाभे मन्दसदृशसकारस्य ग्रहणमिति पाष्ठन्यायेनाप्येतत्सुसमर्थं तथापि मन्दसदृशग्रहणस्यागतिकगतित्वेन ततोऽपि मुख्यमेव समाधानं मूलकारैरुक्तमिति द्रष्टव्यम्। हादिविद्यापक्षे तु द्वयोरन्यतरो रसः सकारद्वयेन लक्षणीयः, लक्ष्ये बहुत्वस्य लक्ष्ययोर्द्वित्वस्य चोक्तिबलेन तथैव सिद्धेः। एकस्य जीवस्य बोधनाय दशानामकाराणां वक्ष्यमाणानां दृष्टत्वाच्च। प्राञ्चस्तु—तृतीयसकारः किमर्थमित्यत आह—सम्बन्ध इति। अमृतस्य समुद्रादुत्पत्तेः प्रसिद्धत्वेन तस्यापि जलरूपत्वात्तद्गतरसलक्षकस्तृतीयः सकार इत्यर्थ इति व्याचक्षते। तत्र रसपदस्य समुद्रे लक्षणेत्यादिः क्लेशः सोढव्यः॥ ४१॥ से०

**वसु[1]धाया गुणो गन्धस्तल्लिपिर्गन्धवाचिका।**
**भुवनत्रयसम्बन्धात् त्रिधात्वं तु महेश्वरि॥ ४२॥**

दी० पूर्वमब्वाचकैरक्षरैरब्गुणं रसत्रयं लक्षयित्वा इदानीं पृथिवीवाचकैर्वर्णैः पृथिवीगुणं गन्धं लक्षयति—वसुधाया इति। [2]वसुधायाः पृथिव्याः गुणो गन्धः, तल्लिपिः पृथिवी[3]वाचकवर्णोऽपि लकारः, गन्धवाचिका [4]गन्धस्य परिभाषणकरी।

ननु विद्यायां लकारत्रयमस्ति, तत्रैकलकारेण पृथिवी[5]संस्थितो गुणो गन्धो लक्षितः। शिष्टाभ्यां [6]लकाराभ्यां किं क्रियत इत्यत आह—भुवनत्रयेति। भुवनत्रयं लोकत्रयम्, तत्सम्बन्धाल्लोकत्रयाधारत्वादाधारा-

१. वसुन्धरागुणो–ख० ग०। २. वसुन्धरायाः–ख०। ३. वाचकोऽपि वर्णो–क०। ४. गन्धस्य परिभाषणकरी–ख पुस्तके नास्ति। ५. संस्थितो–ख पुस्तके नास्ति। ६. लकाराभ्यां–ख पुस्तके नास्ति।

दी० धेय[1]भावः सम्बन्धः, तस्मात् सम्बन्धाद्धेतोः पृथिव्यास्त्रि[2]धात्वम्, तेन पृथिवी[3]भागत्रयाल्लोकत्रयगतगन्धत्रयलक्षकं लकारत्रयमित्यर्थः ॥ ४२ ॥

से० अथ भूम्यक्षराणि व्याचष्टे—( वसुन्धरेत्यादि ) । तस्या वसुन्धराया गन्धवत्या लिपिर्वाचकं बीजं लकारः । "लः शक्रः पूतना पृथ्वी" इति कोशात् । सा गन्धवाचिका, शक्यतावच्छेदकेऽपि शक्तेः सत्त्वात् । गन्धस्य शक्यतावच्छेदकत्वध्वननायैव गन्धे न गुणत्वानुवादः । तस्य च गन्धस्य स्थूलसूक्ष्मभेदाभावेनैकलकारेणैव चारितार्थ्येऽपि भुवनत्रयस्य गन्धत्रयाभिप्रायेण लकारत्रयमित्यर्थः । भुवनत्रयं तूर्ध्वमध्याधोभेदात् । वस्तुतस्तु "पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात्पुरुषः" इति श्रुत्यानुगुण्याय पृथिव्योषध्यन्नरूपं भुवनत्रयं विवक्षितम् । अत एवोत्तरत्र पुरुषवर्णने सन्दर्भशुद्धिर्भवति । अथवा पञ्चाग्निविद्यायां श्वेतकेतुप्रवाहणसंवादे "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति श्रुतौ गार्हपत्यादौ हूयमानस्य दुग्धादिहविषो द्युपर्जन्यपृथ्वीपुरुषयोषित्कुण्डेषु परिणामविशेषविधानात्तेषु प्रथमत्वेन पृथिव्या एवेह वसुन्धरापदेन निर्देशादवशिष्टयोर्द्वयोर्द्वयोरुत्तरयोर्निर्देशाय पुनरपि द्वौ लकारौ । श्रुतौ हविष आप इत्यनेन निर्देशेऽप्यन्नरूपमेव तद्भवतीति ध्वननाय भुवनत्रयेत्युक्तम्, जलत्रयेति तदर्थः । एकैव क्षितिरोषध्यन्नरेतोरूपा भूत्वा पुरुषो भवति । तदिदं कथनात् पञ्चभूतजन्यानां ज्ञानेन्द्रियाणां कर्मेन्द्रियाणामपि हकारादय एव वाचका इति ध्वनितम् ॥ ४२ ॥

**अशुद्धशुद्धमिश्राणां प्रमातॄणां परं वपुः ।**
**क्रोधीशत्रितये[4]नाथ विद्यास्थेन प्रकाश्यते ॥ ४३ ॥**

दी० हकाराद्व्योमसंभूतिः[5]ककाराच्च प्रभञ्जनः ।
( यो० हृ० सं० २, श्लो० २९ )

[6]इत्यत्र वायुवाचकतयो[7]क्तस्य ककारस्य प्रमातृवाचकत्वेनापि वक्तव्यांशकत्वादन्यै[8]रक्षरैरेव स्पर्शचतुष्टयं लक्षयित्वा इदानीं ककारत्रयेण प्रमातृत्रयं लक्षयति–अशुद्धेति । अशुद्धाः प्रमातरो भेद[9]धीमात्रसाराः शिवाहम्भावभावनाविहीनाः सकलाः पशवः । तदुक्तं स्वच्छन्दसंग्रहे—

---

१. भावः–ख पुस्तके नास्ति । २. त्रित्वं–ख० । ३. भागत्रयगत–ख० । ४. नास्य–ख० ग० । ५. ककारात्तु–ख० । ६. इत्येवं–ख० । ७. तयोक्तस्यापि–ख० । ८. रक्षरैः स्पर्श–ख० । ९. धी–ख पुस्तके नास्ति ।

पशवस्त्रिप्रकाराः स्युस्तेष्वेके सकला मताः ।
प्रलयाकलनामानस्तेषां केचिन्महेश्वरि ! ॥
विज्ञानकेवलास्त्वन्ये तेषां रूपं क्रमाच्छृणु ।
अनादिमल[1]सम्पन्नो मायाकर्मावृतो विभुः ॥
शरीरी[2]शिवतत्त्वाज्ञो भेदैकरसिको लघुः ।
सर्वदा कर्मकर्ता च स्वकर्मफलभोजकः ॥
नित्यं विषय[3]संसक्तो बोध्यः शोध्यः पुमानयम् ।

शुद्धाः प्रमातरः पक्वमलविज्ञानाः शिवत[4]न्मात्रसारा [5]विज्ञान-केवलाः पशवः । तदुक्तं [6]स्वच्छन्दसङ्ग्रहे—

मलमात्रेण [7]सम्बद्धः पशुर्विज्ञानकेवलः ।
सुपक्वमलविज्ञानके[8]वलश्च स्वयं प्रिये ! ॥
[9]सुतीव्रशक्तिपातेन कुरुते [10]तान् स केवलान् ।

मिश्राः प्रमातरः पुर्यष्टकसूक्ष्मशरीरमात्र[11]सम्बन्धाः प्रारब्धकर्मानुभवार्थमनेकयोनिषु संभूय तत्तत्कर्म[12]फलानुभवेन कर्मद्वयसाम्ये सति सुपक्वमलकर्माणो गुरुं [13]विनाऽपि शिवानुग्रहशालिनः क्रियाज्ञानसाधारणाः प्रलयाकलाः पशवः । तदुक्तं स्वच्छन्दसंग्रहे—

मिश्राः प्रमातृरूपाः स्युः प्रलयाकलसंज्ञकाः ।
पुर्यष्टकशरीराश्च [14]स्वस्वकर्मवशात्प्रिये ! ॥
सर्वयोनिषु [15]सम्भूय भोगार्थं स्वस्वकर्मणाम् ।
भुक्त्वा भोगानि तेषां तु कर्मसाम्ये शिवः स्वयम् ॥
सुपक्वमलकर्माण[16]स्तान् केचिदनुगृह्य च ।
जलतत्त्वादितत्त्वानां मध्ये लोकेश्वरास्त्रिधा ॥ [17]इति ।

---

१. सञ्छन्नो–ख० । २. स्वशिवत्याज्ञो–क० । ३. संरक्तो भाव्यः साध्यः–ख० । ४. शिवतावन्मात्र–क० । ५. वि–ख पुस्तके नास्ति । ६. महास्वच्छन्द–ख० । ७. सम्बन्धः–क० ख पुस्तके च 'निर्मुक्तः' इति पाठभेदोऽपि दृश्यते । ८. केवलः स स्वयं–ख० । ९. स्वतीव्र–ख० । १०. तांश्च केवलाम्–ख० । ११. सम्बद्धाः प्राक् स्वस्वकर्मा–ख० । १२. फल–ख पुस्तके नास्ति । १३. विना–ख० । १४. पृथुकर्म–ख० । १५. संप्राप्य भागार्थं–ख० । १६. स्तान् किञ्चि–ख० । १७. इति–क पुस्तके नास्ति ।

दी० तेषां [1]त्रिविधानां प्रमातॄणां [2]परं वपुः स्वरूपं परमन्यत् । क्रोधीशत्रितयेनेति । अनेन श्रीकण्ठन्या[3]सपरिपाट्या क्रो[4]धीशाः ककारास्तेषां त्रितयेन विद्यास्थेन बीजत्रितयस्थेन प्रकाश्यते व्यज्यते । कोऽर्थः ? बीजत्रितयगतककारत्रयेण सकलविज्ञानकेवल-[5]प्रलयाकलाख्यत्रिविधपशुरूपाऽशुद्धशुद्धमिश्रप्रमातृत्रितयस्वरूपं व्यज्यत इत्यर्थः ॥ ४३ ॥

से० अथ ककारान् व्याचष्टे ( अशुद्धेत्यादि )। शैवदीक्षादीक्षिता अपि मालिन्यतारतम्येन त्रिविधाः प्रमातारोऽप्युपासकाः सन्ति । तेषाञ्च दीक्षारूपं जन्मान्तरं प्राप्तानां यत्परं वपुरुत्कृष्टशरीरं तत्ककारत्रयेणोच्यते । क्रोधीशः ककारः । कः क्रोधीशः, "महाकालो कामदेवः प्रकाशकः" इति कोशात् । अत्रेदं बोध्यम्—अणुः कर्म माया चेति त्रयः पाशाः । तत्राणुर्नामाज्ञानं तच्च द्विविधं चैतन्यस्वरूप आत्मनि आत्मत्वेन ज्ञानाभावः, देहादावनात्मन्यात्मज्ञानं चेति भेदात् । इदं द्विविधमपि सम्भूयाणवं मलमुच्यते । अपरिच्छिन्नस्यात्मनः परिच्छेदकत्वात् । आत्मनोऽणुत्वहेतुत्वाद् "अणुर्मालिन्यतो मलम्" इति सौरसंहितोक्तेः । विहितनिषिद्धक्रियाजन्यशरीरदानक्षममदृष्टं कर्म, तदपि पुण्यपापभेदेन द्विविधमपि सम्भूय कार्मणं मलमुच्यते । एकस्यैवात्मनो नानात्वं माया । सा चानेकविधापि सम्भूय मायीयं मलमुच्यते । एतेषु त्रिषूत्तरोत्तरं पूर्वपूर्वव्याप्यम् । तदिदं ज्ञानं बन्धः, "योनिवर्गः कलाशरीरम्," इति शैवसूत्रयोर्भाष्ये प्रत्यभिज्ञायामपि स्पष्टम् । एतेषु त्रिभिरपि पाशैर्बद्धः पशुरशुद्धः । अणुकर्मभ्यामेव बद्धो मिश्रः । अणुमात्रेण बद्धः शुद्धः । एतेषामेव च क्रमेण "सकलः प्रलयाकलो विज्ञानकेवलः" इति तन्त्रान्तरे संज्ञाः । एताः संज्ञाः परित्यज्याशुद्धादिपदैर्व्यवहारस्तु तत्तल्लक्षणध्वननार्थः । तत्र शुद्धत्वं यद्यपि मलसामान्याभावस्तथापि तस्य ब्रह्मातिरिक्तेष्वसम्भवात् किञ्चिन्मलवत्त्वे सतीतरमलाभाव एव जीवेषु शुद्धत्वं वाच्यम्, तच्च किञ्चिदेकं मलं त्वाणवम् । कार्मणमायीययोः पूर्वपूर्वव्याप्यत्वेनैकैकस्यावस्थानायोगात् । एवमशुद्धत्वं विनिगमनाविरहात् सर्वमलवत्त्वम्, मिश्रत्वं शुद्धाशुद्धलक्षणयोः साङ्कर्यं शुद्धलक्षणस्याणवस्याशुद्धलक्षणस्य कार्मणस्य च योग इति यावत् । मायीयस्य पूर्वद्वयव्याप्यत्वेन तद्योगेनाशुद्धत्वस्यैवापत्तेः । अत एवाशुद्धमिश्रशुद्धानामिति युक्तोऽपि क्रमो

---

१. एतेषां–ख० । २. परं–ख पुस्तके नास्ति । ३. न्याय–क० । ४. क्रोधीशः ककारः–ख० । ५. प्रलयकला–क० ।

-नादृतः, शुद्धताज्ञानोत्तरमेव तद्योगेन मिश्रज्ञानात्। एतेनानभ्यर्हितस्यानल्पा- से च्तरस्याशुद्धपदस्य कथं पूर्वनिपात इति शङ्का निरस्ता, अजाद्यदन्तमित्यस्य परेणाल्पाच्तरेण बाधात्। एतेष्वाद्यौ मलपाकापाकाभ्यां प्रत्येकं द्विविधौ। अन्त्यस्तु कलुपसमाप्त्यसमाप्तिभ्यां द्विविधः। तेष्वशुद्धाः पक्वमलत्रयाः क्रोधभट्टारकादयोऽष्टादशोत्तरशतमुपासकाः सन्ति। अन्यानप्याचार्यरूपेण शिव एवानुगृह्णाति। अपक्वमलत्रयांस्तु भोगेन मलपाकाय नानायोनिषु विनियुङ्क्ते। सोऽपि चानुग्रह एव।

मलादीनामपाके तु सामान्यानुग्रहो भवेत्।
नानायोनिषु पाकाय नियुङ्क्तेऽजिघृक्षया ॥

इति वचनात्। मिश्राः पक्वमलद्वयास्तु लोकपालादय आधिकारिकाः पुरुषाः। अपक्वमलद्वया मिश्रास्तु कर्मवशादुत्तमयोनिष्वेव जायमानाः पुरुषाः। शुद्धाः समाप्तकलुपास्तु विद्येश्वरा नवनाथादयः। असमाप्तकलुपाः शुद्धास्तु सप्तकोटिमहामन्त्राः। न च तेषां जडत्वमिति शङ्क्यम्, शब्दशरीरस्य जडत्वेऽपि शरीरिणामस्माकमिव चेतनत्वोपपत्तेः। अत एवापक्वाणवमलवज्जीवत्वाभिप्रायेण मन्त्राणामणुसंज्ञा। उक्तञ्च मृगेन्द्रसंहितायां विद्येश्वरजन्मनिरूपणावसरे—

अथानादिमलापेतः सर्वकृत्सर्वदृक्शिवः।
पूर्वं व्यत्यासितस्याणोः पाशजालमपोहति ॥ इति।

आधिकारिकजन्म निरस्य मन्त्रजन्मप्रापितस्येति व्यत्यासितपदस्यार्थः। इतोऽप्यन्यो विस्तरः शैवशास्त्रे द्रष्टव्यः। ईदृशा द्विद्विरूपास्त्रयः प्रमातारः ककारत्रयबोध्या इत्यर्थः ॥ ४३ ॥

**श्रीकण्ठदशकं तद्वद्[1]व्यक्तस्यापि वाचकः।**
**प्राण[2]रूपस्थितो देवि तद्वदेकादशः परः ॥ ४४ ॥**
**एकः सन्नेव पुरुषो बहुधा जायते हि सः।**

दी० पूर्वं विद्यास्थक्रोधीशत्रितयेन प्रमातृत्रयं लक्षयित्वा इदानीं विद्यास्थश्रीकण्ठद्वादशमध्ये आद्यदशकेन अव्यक्तमनन्तरेण प्राणं [3]चरमेणेशं च लक्षयति—श्रीकण्ठेति। श्रीकण्ठदशकं हृल्लेखात्रयवर्जितहकारादिद्वादशाक्षरोपरिगतानामकाराणां मध्ये [4]श्रीकण्ठदशकम् अकारदशकम्,

---

१. दव्यक्तस्य हि वाचकम्—ख० ग०। २. प्राणभूत—ख० ग०। ३. प्राणं रमेशं च०—क०। ४. श्रीकण्ठदशकं श्रीकण्ठा अकाराः, तेषां दशकम्। अव्यक्तः—ख०।

दी० अव्यक्तो जीवः [1]करणेन्द्रियसञ्छन्नतया स्वशिवत्वं जडवर्गान्तःपातितया [2]च केवलचिन्मात्र[3]तया न मन्यते, अनादिमलसञ्छन्नतया स्वशिवत्वापरिज्ञानात्। तदुक्तं स्वच्छन्दसंग्रहे—

अनादिमलसञ्छन्नो मायाकर्मावृतो विभुः।
[4]शरीरी शिवतत्त्वाज्ञो भेदैकरसिको लघुः॥

तस्य [5]वाचकः।

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः॥

इति सङ्केतपद्धत्युक्तरीत्या अकारवाच्यः [6]परमशिवः परमशिवांशत्वात् [7]तद्वत् परशिववत्। यथा परमशिवोऽकारवाच्यः तथा तदंशभूतो [8]जीवोऽपि अकारदशकेनोच्यत इत्यर्थः। तद्वद् [9]जीववत् यथा, शिवांशो जीवः परमशिववाचकश्रीकण्ठेन लक्ष्यते तद्वद् जीववदेका[10]दशश्च श्रीकण्ठो जीवाधारभूतप्राणरूपः [11]स्थितः। प्राणो [12]हि जीवस्याधारः, प्राणेन विना जीवस्यानवस्थानात्। परः परो द्वादशश्रीकण्ठः [13]पुरुषः पुरुषस्य वाचको विश्वस्य पूरणात् परमशिवः [14]पुरुषः। तदुक्तं चिद्गगनचन्द्रिकायाम्—

विश्वसद्मनि [15]चिदात्मनीश्वरे पूरणात् पुरुषतामुपेयुषि।
ये मनः प्रणिदधुमहर्षय[16](स्तान् पतञ्जलिमुखानुपास्महे॥) इति।
[17]श्रुतिरपि—"पुरुष एवेदं सर्वम्" [18]इति॥ ४४॥

---

१. अनादिमलसञ्छन्नतया स्वशिवत्वापरिज्ञानकारणेन्द्रियादिजड—ख०। २. च—ख पुस्तके नास्ति। ३. तया न्यस्तः। तदुक्तम् अनादि—ख०। ४. शरीरी स्वशिवत्वाज्ञो—क०। ५. वाचकम्—ख०। ६. परशिवः परशिव—ख०। ७. तद्वत् परशिववत्—क पुस्तके नास्ति। ८. जीवोऽकारेणोच्यते—ख०। ९. तद्वत् जीववत्—क पुस्तके नास्ति। १०. दशश्रीकण्ठेन—क०। ११. प्राणस्य निरूपितः स्थितः—क०। १२. हि—ख पुस्तके नास्ति। १३. पुरुषः—ख पुस्तके नास्ति। १४. पुरुषः—ख पुस्तके नास्ति। १५. शिवात्म—ख०। १६. धनुश्चिह्नान्तर्गतं क पुस्तके नास्ति। १७. श्रुतिरपि—ख पुस्तके नास्ति। १८. इति श्रुतेः—ख०।

(से०) अथ ये तावदणवकमलत्रया अशुद्धा जीवास्तेऽपि द्विविधाः—वीरकर्मठास्तद्भिन्नाश्च । तेषु प्रथमे ककारेणोक्ताः, तेषु दीक्षितानामेव ग्रहणात्, पृथिवीनिरूपणानन्तरं श्रौतक्रमेण सर्वजीवोपस्थितावपि तेष्वभ्यर्हितानामेव प्रथमं निरूपणीयत्वाच्च । अनभ्यर्हिताश्चरमे त्वनन्ताः । अत एव तान् बहुभिरकारैर्निर्दिशति—(श्रीकण्ठेत्यादि) । श्रीकण्ठोऽकारः, "अः श्रीकण्ठः सुरेशश्च ललाटश्चैकमातृकः" इति कोशात् । ते च दशैव विद्यायां वर्तन्तेऽत आह—दशकमिति । यद्यपि तृतीयकूटस्थप्रथमाकारः प्रकाशवाचकत्वेन भावार्थप्रकरणे निर्णीत इति तत्परित्यागे नवकमित्येव वक्तव्यम्, तथापि तत्रोक्तोऽर्थः परारूपस्यैवाकारस्य न तु वैखरीरूपस्येति तदन्तर्भावेन दशकमित्युक्तम् । इमे च शङ्कासमाधाने हकारार्थनिरूपणावसरे युगपद्वृत्तिद्वयविरोधपरिहाराय तत्रैव मूलकारैः प्रदर्शिते इति नात्र पुनरुट्टङ्किते । तद्वत्तथा, किञ्चेत्यर्थः । परमशिववदित्यर्थ इति केचित् । अकारो यथा शिवस्य वाचकस्तथा जीवस्यापीति । एते दशाप्यव्यक्तस्य वीरकर्मठेतरसकलजीवानां वाचकाः, "परिहृत्य विशेषविषयं सामान्यविषयः प्रसजति" इति न्यायेन जीवसामान्यवाचकस्याव्यक्तपदस्य विशेषे पर्यवसानात् । इदञ्च प्राचां मतमनुसृत्योक्तम् । वस्तुतस्तु क्षित्यादिशिवान्तषट्त्रिंशत्तत्त्वानि तल्लक्षणानि तदक्षराणि च वर्णयितुं प्रवृत्तेन भगवता पञ्चभूतमात्रांशेष्वप्युक्तसृष्टिक्रममनुसृत्य तानि निर्वर्ण्य तदभेदादेव तज्जन्यगुणास्तज्जन्यान्येव ज्ञानकर्मेन्द्रियाणि च कार्यकारणैक्योक्त्या संमुग्धाकारेण वर्णितान्येव, तेषां सर्वेषां पाञ्चभौतिकविकारमात्ररूपत्वेन ततोऽधिकस्य वर्णनीयांशस्याभावात् । हकारादिजन्यत्वबोध्यत्वे उक्ते एव । एवं क्षित्यादिपञ्चकं गन्धादिपञ्चकमुपस्थादिपञ्चकं प्राणादिपञ्चकं चेति विंशतौ तत्त्वेषु निरूपितेषु क्रमप्राप्तमपि मनोबुद्ध्यहङ्कारप्रकृतिचतुष्टयमुल्लङ्घ्य पञ्चविंशस्यापि पुरुषस्य पृथिव्यनन्तरं श्रुतौ कथनमनुसृत्य तस्यैकविंशस्थाने निरूपणेऽपि पुरुषनिरूपणोत्तरं तच्चतुष्टयत्यागे मानाभावात्तन्निरूपणपरमेव श्रीकण्ठपदम् । अत एव पूर्वत्राशुद्धपदेन मलत्रयबद्धत्वाविशेषात् सकला अपि सकला उक्ता एव, न वीरकर्मठा एव; मानाभावाच्च । ततश्च जीवनिरूपणे समाप्ते पुनरिह तन्निरूपणोक्तिरयुक्तैव । किञ्च, अव्यक्तपदं प्रकृतावेव, न जीव इति । तथा चोक्तं पञ्चशिखाचार्यैः—

"अनादिमध्यं महतः परं ध्रुवं प्रधानमव्यक्तमुशन्ति सूरयः" इति ।

सांख्यसप्तत्यामपि—

सूक्ष्ममलिङ्गमचेतनमनादिनिधनं तथा प्रसवधर्मि ।
निरवयवमेकमेव हि साधारणमेतदव्यक्तम् ॥ इति ।

से॰ अत एकैकवचनमपि। जीवपक्षे ह्यव्यक्तानां हि वाचकमित्येव ब्रूयात्। सा च प्रकृतिर्गुणत्रयसमष्टिस्तन्तुरूपा, "सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात्" इति सांख्यप्रवचनसूत्रे तथा निर्णयात्, तदिदं लक्षणं बोधयितुं तद्वदित्युक्तम्, गुणत्रयवदित्यर्थः, भवत्पक्षे तस्यानतिप्रयोजनकत्वापत्तेः। गुणवच्च तदव्यक्तञ्चेति समासः। एवमुक्तिश्च 'भवेद् गुणवतां बीजम्' इत्युक्तन्यायस्मारणार्था। ततश्च गुणवत्प्रधानस्य वाचका अकारा गुणानां वाचका अपि भवन्तीत्यर्थः। अहङ्कारबुद्धिमनोरूपतत्त्वत्रयस्यापि वाचका इति यावत्, तेषां क्रमेण रजःसत्त्वतमोरूपैकैकगुणात्मकतायाः सिद्धान्तसिद्धत्वात्। सर्वनाम्नां पूर्वोपस्थितवाचकत्वेन पूर्वानुपात्तगुणवाचकत्वं तच्छब्दस्य कथमिति चेत्; परशिवो वा पूर्वं क्वोपात्तः। 'स सर्वो महेश्वरः' इत्यत्रेति चेत्; ततोऽपि सन्निकृष्टे 'भवेद् गुणवतां बीजम्' इत्यत्र गुणा अप्युपात्ता एव। श्रीकण्ठपदेनैव शिवस्याप्युपादानमिति चेत्, अस्माकमपि तुल्यम्। श्रीर्विषम्, कं जलं गङ्गायाः, ठश्चन्द्रमण्डलम्। "बृहद्ध्वनौ च ठः प्रोक्तस्तथा चन्द्रस्य मण्डले" इत्यनेकार्थध्वनिमञ्जरी। एतत्त्रयं व्युत्क्रमेण सत्त्वरजस्तमसामुपलक्षणम्। तथा च शिवस्तुतावुक्तमस्माभिः—

इन्दुज्वलनक्ष्वेडं शितशोणश्यामलं क्रमाद्दधता।
सत्त्वरजस्तमसां किमु तरतमभावस्त्वया च दिष्टो नः॥ इति।

प्रकृतेऽपि गङ्गायाः पार्वत्या सह मात्सर्यादिदर्शनाद्राजसत्वम्। नन्वेतत्त्रयमकारवाचकश्रीकण्ठपदात्पदार्थमर्यादया नोपस्थितमिति चेत्; तुल्यं भवतोऽपि।

नालीकासनमीश्वरः शिखरिणां तत्कर्पणात्थायिनो
गन्धर्वाः पुरतस्तदध्वचरितो चक्रे तदुद्धारकः।
पत्री तत्प्रभुवैरिणां परिवृढो जीवा च यस्याभवत्
तस्यान्तेवसतां रिपुत्त्रयविधौ देवाय तस्मै नमः॥

इत्यत्र पूर्वपदाद्वाक्यार्थान्वयित्वेनानुपस्थितस्यापि यथाकथञ्चिदुपस्थितिमात्रेणोत्तरोत्तरवाक्यगतसर्वनामभिः परामर्शदर्शनाच्च। नालीकासनं शरासनं कमलासनञ्च। गन्धर्वा अश्वा देवविशेषाश्च। चक्रं रथचक्रं सुदर्शनञ्च। पत्री बाणः पक्षी च। जीवा मौर्वी बृहस्पतिश्च। एतेषु प्रथमेऽर्थाः पूर्ववाक्यार्थान्वयिनः चरमे तूत्तरवाक्यस्थसर्वनामभिः परामृश्यन्त इति स्थितिः। तस्माद्दशभिरकारैर्मनोबुद्ध्यहङ्कारविशिष्टा प्रकृतिर्बोध्यत इत्यर्थः।

'तदव्यक्तमाह हि' इत्यधिकरणे परब्रह्मणोऽप्यव्यक्तपदेन निर्देशस्य साधितत्वादिह प्रकृत्यर्थमुपात्तेनाव्यक्तपदेन तत्त्वातीतस्य परमशिवस्योपस्थितेरिहैव तद्बो-

धकं पदमेकारं व्याचष्टे—( प्राणेत्यादि )। एकादश एकारः एकाराधिकारे- सै॰
"सन्धिरेकादशो भद्रा पद्मनाभः कुलाचलः" इति कोशात्, मातृकाक्रमे तस्यै-
कादशत्वाच्च, "यदेकादशमाधारं बीजं कोणत्रयात्मकम्" इति प्रयोगाच्च। स
प्रकृतेस्तत्त्वानां तत्त्वातीतस्य वा प्राणभूतः, प्राणो यथा शरीरान्तःस्थितः
सन् शरीरं चेष्टयति तादृशः मन्त्रे स्थित इत्यर्थः। शक्तेरेव सर्वजनकत्वेऽपि शिवस्य
निष्क्रियस्यापि सन्निधिमात्रेण कारणत्वमिति सिद्धान्तात् परं ब्रह्मैवेह तत्त्वा-
तीतं प्राणपदेनोच्यते। अत एव प्राणाधिकरणे प्राणपदस्य परब्रह्मपरता
निर्णीता। अत एव चेतराक्षराणामिवैकारेण प्राणो जन्यत इति वा एकार-
स्तद्वाचक इति वा नोक्तम्, नित्यस्य निर्धर्मकस्य तदुभयायोगात्। शब्दार्थयोरभे
दाभिप्रायेण वर्ण एव प्राणभूत इत्येतावदेवोक्तम्। अथवा पञ्चविंशतेस्तत्त्वानां पूर्वं
निरूपणादवशिष्टेष्वेकादशः शिव एव। तस्यापि तत्त्वान्तर्गतत्वेन तदतीतत्वद्योत-
नाय पर इति विशेषणम्। अनया रीत्यैकादशपदमेवावृत्तं सच्छब्दमर्थञ्च
बोधयति। तद्वदिति पदं तु पूर्ववत् किञ्चेत्यर्थकम्। अनन्तशक्तिमदित्यर्थकं
नपुंसकं तद्ब्रह्मपरं वा। एतस्यैव लक्षणमाह—एक इति। सन्पुरुषः। "ऋतं
सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्", "पुरुषो वै रुद्रः" इत्यादिश्रुतिषु प्रसिद्धेः।
परशिव एक एव सन्ननन्तशक्तिमत्त्वाद् बहुप्रकारो यस्माद्भवति तस्मात्तस्य
प्राणरूपताशक्तेरित्यर्थः। हादिविद्यायां तु यद्यपि द्वादश श्रीकण्ठास्तथापि
तेष्वेको वायुगतस्पर्शपर इति पूर्वमुक्तः। अत एकादशैवावशिष्टाः, तेषु दशा-
व्यक्तादिपरा एकादशोऽकारस्तत्त्वातीतपर इति व्याख्येयम्। प्राञ्चस्तु—द्वाद-
शानां मध्ये दश जीववाचकाः। एकादशो जीवाधारस्य प्राणवायोर्वाचकः।
परो द्वादशस्तु पुरुषः परमशिववाचकः। ननु त्रिभिरकारैरेव विवक्षितसिद्धौ
नवानां किं प्रयोजनमित्यत आह—एक इति। "इन्द्रो मायाभिः पुरुरूप ईयते",
"एक एव हि भूतात्मा भूते भूते व्यवस्थितः" इत्यादिश्रुतिसिद्धमर्थं द्योतयितुं
तद्बाहुल्यमिति भाव इत्याहुः। इदञ्च तत्त्वान्तः पञ्चविंशत्वेन गणितः. "पुरुषो
वै रुद्रः" इति श्रुतिप्रसिद्धो जीव इति पक्षमाश्रित्योक्तम्। यदा तु विराट्पुरुष एव
स गणितः, जीवस्त्वहङ्कारादिरूप एव;

इन्द्रियाण्यान्तराण्यत्र विषयेभ्यो हि देहिनाम्।
आन्तरं मन एतेभ्यो बुद्धिस्तस्मादिहान्तरा॥
बुद्धेरप्यान्तरो जीवो गतोऽहंतामिति स्थितिः।
अस्मात्परं सदा ज्ञेयम॰ इत्॥

से० इत्यात्मपुराणवचनादित्यालोच्यते, तदा तु प्रमातृत्वस्य वस्तुतोऽन्तःकरणनिष्ठत्वात्तस्य च मनोबुद्ध्यहङ्कारभेदेन त्रिधा तत्त्वेषु गणितत्त्वात्त एवाशुद्धादयः प्रमातारः। अत एवाशुद्धशुद्धमिश्राणामिति क्रमोऽप्युपपद्यते, तेषां तमःसत्त्वरजोरूपत्वात्। यद्यपि प्रमातृपदेन जीवा एवोच्यन्ते, तथापि तेषां ब्रह्माभेदात् प्रमातृत्वं परं निष्कृष्टं वपुः शरीरं मन आदिरूपमेवेति त एवाकारत्रयवाच्याः। ततः क्रमप्राप्तमव्यक्तं निरूप्य तदुत्तरमेकादशेनाक्षरेण विराट्पुरुष एवोच्यते। स च जीवसमष्टिरूपत्वात् प्राणभूत एव। एकः सन्नेवेत्यपि तत्रैव सामञ्जस्येनोपपद्यते। एवं सति तत्त्वानां प्रसिद्धः क्रमो न लोपितो भवति। तत्त्वातीतं तु सर्वान्ते शान्तिपदेन वक्ष्यते ॥ ४४ ॥

**रुद्रेश्वरसदेशाख्या देवता मितविग्रहाः ॥ ४५ ॥**

**बिन्दुत्रयेण कथिता अमितामितविग्रहाः।**

**शान्तिः शक्तिश्च शम्भुश्च नादत्रितयबोधनाः ॥ ४६ ॥**

(दी०) ननु [1]श्रीकण्ठद्वादशकं विद्यायां विद्यते। एकेन शिवः कथ्यते, एकेन जीवः, एकेन प्राण इति त्रिभिरेवालं किमन्यैरित्यत आह—एक इति। सत्यमेकेन [2]शिव उच्यते, द्वाभ्यां जीवप्राणौ; तथापि स एकः सन्नेव "एकमेवाद्वितीयं ब्रह्म", "सच्च त्यच्चाभवत्" इत्युपनिषदुक्तरीत्या सद्रूपः [3]एको हि पुरुषो बहुधा जायते। हिशब्दः प्रसिद्धौ। [4]अपि च अस्मिन्नर्थे प्रमाणम्—"इन्द्रो मायाभिः पुरुरूप ईयते" [5]इति।

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥

इति [6]रीत्या सत्यमेक [7]एव शिवो भवति, [8]तथापि जीवप्राणात्मना [9]बहुधा भिन्नमितीममर्थं द्योतयितुं विद्यायां बहवः श्रीकण्ठाः स्थिता इत्यर्थः ॥ ४५ ॥

---

१. श्रीकण्ठकद्वादशकण्ठविद्यायां—क०। २. पुरुषः कथ्यते—ख०। ३. एकोऽपि—ख०। ४. अपि च—क० नास्ति। ५. इति—क०नास्ति। ६. रीत्या—ख०नास्ति। ७. एव—ख०नास्ति। ८. तथापि—ख०नास्ति। ९. बहुधा—ख०नास्ति।

[1]अक्षराणां वासनामुक्त्वा बिन्दूनां नादादीनां च वासनामाह— दी० रुद्रेश्वर इति। रुद्रस्ते[2]जस्तत्त्वाधिपतिः, तेजस्तत्त्वान्तर्भूतपुरुषरागविद्या [3]कलानियतिकालमायान्तम्। तदुक्तं स्वच्छन्दसंग्रहे—

पुरुषादिकमायान्तं तेजस्तत्त्वं महेश्वरि। [4]इति।

[5]शुद्धविद्येश्वरसदाशिवा वायुतत्त्वात्मकाः। [6]तदुक्तं स्वच्छन्दसंग्रहे-

विद्या चेश्वरशादाख्यौ वायुतत्त्वं [7]समीरितम्। इति।

अतो रुद्रेश्वरसदेशाख्या देवता मितविग्रहाः परिच्छिन्नरूपाः। [8]तदुक्तं स्वच्छन्दसंग्रहे—

यत्सदाशिवपर्यन्तं [9]विनाशोत्पत्तिसंयुतम्। [10]इति।

बिन्दुत्रयेण कथिताः। बिन्दुत्रयं त्रिबीजशिखरवर्तिकामकलोर्ध्वगतानां बिन्दूनां त्रितयम्। [11]अमितामितविग्रहाः। शान्तिः शक्तिश्च शम्भुश्च नादत्रितयबोधनाः। शान्तिरव्यक्तध्वनिलक्षणो नादोऽखिलं जगदधरीकृत्य यत्र लयमेति [12]सा ब्रह्मरन्ध्रावसानभूमिः, ऊर्ध्वशक्तीनां प्रशान्तस्थानहेतुत्वात्। तदुक्तं स्वच्छन्दसंग्रहे—

नाड्याधारस्तु [13]नादो वै भित्त्वा सर्वमिदं जगत्।
अधः शक्त्या [14]विनिर्गत्य ऊर्ध्वशक्त्यवसानकः॥
नाड्यां ब्रह्मबिले लीनस्त्वव्यक्तध्वनिलक्षणः। [15]इति।

[16]शक्तेरूर्ध्वशक्तेरुपरिगतं शक्तितत्त्वम्। तदुक्तमत्रैव—

ब्रह्माणी [17]त्वं परा शक्तिः [18]ब्रह्मणोत्सङ्गगामिनी।
द्वारं सा मोक्षमार्गस्य रोधयित्वा व्यवस्थिता॥
तां भित्त्वा तु वरारोहे ऊर्ध्वशक्तिं परां शिवाम्।

१. अक्षराणां हि—ख०। २. तेजोऽधिप—ख०। ३. विद्यानियतिकालकलामायान्तम्—ख०। ४. इति—क० नास्ति। ५. ईश्वरसदाशिवौ वायुतत्त्वात्मकौ—ख०। ६. तदुक्तमत्रैव—विद्या—ख०। ७. रितम्। अत एव रुद्रे—क०। ८. तदुक्तमत्रैव—यत्सदा—ख०। ९. विभागोत्प—ख०। १०. इति—क० नास्ति। ११. अमितामितविग्रहाः—क० नास्ति। १२. मेति सब्रह्म—ख०। १३. नादान्तो—ख०। १४. विनिर्भिद्य—ख०। १५. इति—क० नास्ति। १६. शक्तिरूर्ध्वशक्ति—ख०। १७. त्वपरा—ख०। १८. ब्रह्मणो सङ्ग-ख०।

दी०

शक्तितत्त्वात्मिकां [1]देवीं प्रसुप्तभुज[2]गाकृतिम् ॥
शक्तितत्त्वं समाख्यातं भुवनै[3]राश्रितं महत् ॥ इति ।

[4]शम्भुः शिवतत्त्वं शक्तितत्त्वोपरि स्थितम् । तदुक्तमत्रैव—

[5]शक्तितत्त्वं समाख्यातं शिवतत्त्वं तदूर्ध्वतः । [6]इति ।

अमि[7]तामितविग्रहाः । [8]एते अनन्ता अपरिच्छिन्नरूपाः, व्योमतत्त्वान्तर्गतत्वात् । तदुक्तमत्रैव—

"[9]शक्तितत्त्वं शिवो व्योम" इति । नादत्रितयबोधनाः । वाग्भवकामराजशक्तिबीजोपरिगतबिन्दुत्रयोपरिगतरोधिनीत्रित[10]योर्ध्वगतानां नादानां [11]त्रितयम् । एवंक्रमेण बोधकं लक्षाकम्, तेन नादत्रितयबोधनाः । वाग्भवबीजोपरिगतबिन्दुपरिवर्तिना नादेन शान्तिः, कामराजबीजशिखरवर्तिना नादेन शक्तिः, तार्तीयबीजशिखरवर्तिना नादेन च शिवो [12]व्यज्यते ॥ ४६ ॥

(से०) इदानीमवशिष्टानामेकादशतत्त्वानां वाचकानि बिन्द्वक्षराणि नादाक्षराणि च व्याचष्टे—( रुद्रेत्यादि ) । नियतिः कालो रागो विद्या कला माया शुद्धविद्येश्वरः सदाशिवः शक्तिः शिवश्चेत्येकादश । [ तत्र जगदहंतया पश्यन् ] सदाशिवः । तदेव जगदिदंतया पश्यन्नीश्वरः । अहंतेदंतयोरभेदबुद्धिः शुद्धविद्या । तयोरेव भेदबुद्धिर्माया । ततश्च याः परब्रह्मणि विद्यमानाः सर्वकर्तृत्वसर्वज्ञत्वनित्यतृप्तत्वनित्यत्वस्वतन्त्रत्वाख्याः पञ्च शक्तयो निरवग्रहदेवताः स्थितास्ता एव सावग्रहाः सत्यः सङ्कुचिताः क्रमेण कलादिसंज्ञापञ्चकं भजन्ते । तादृशसङ्कुचच्छक्त्याधारः पुरुष एवैकारेणोक्तः । तदिदं सौभाग्यसुधोदये प्रतिपादितममृतानन्दैः । अत्र यथा सर्वतत्त्वातीतं ब्रह्म देशकालादिभिरनवच्छिन्नं तथैव शिवशक्ती अप्यनवच्छिन्ने एव । अहंतेदंताबुद्ध्योश्च उक्तमरीत्या भेदकलितत्वादनवच्छिन्नतातः किञ्चिदूनत्वं परिच्छिन्नतातः किञ्चिदाधिक्यंचेति सदा-

१. देवि—ख० । २. गाकृती—क० । ३. रावृतं महत्—क० । ४. शम्भुः शिवः शिव—ख० । ५. शिवतत्त्वं समाख्यातं तदूर्ध्वं शक्तितत्त्वतः—ख० । ६. इति—क० नास्ति । ७. ताम्बित—क० । ८. अत एवमनन्तापरि—ख० । ९. शिवतत्त्वं शिवाविति—ख० । १०. तयोर्ध्वभागगतानां—ख० । ११. त्रयमेषांक्र—ख० । १२. व्यज्यते इत्यर्थः—ख० ।

शिवेश्वरशुद्धविद्या अनुग्णशीतस्रशविन्मध्यविद्याः । यादयस्तु देवताभेदैक- ३०
घटितत्वात् परिच्छिन्ना एवेति स्थितिः । किञ्चैतेषु षट्त्रिंशत्तत्त्वेषु क्षित्यादि-श्रोत्रान्तं ततः प्रकृत्यन्तं ततो मायान्तं ततः सदाशिवान्तं ततः शिवान्तमेवं क्रमेण पृथिव्यादितत्त्वपञ्चकता । तदिदं पञ्चभूतमयं विश्वमित्यनेनैवोक्तम् । तथा क्षित्यादिमायान्तं सद्रूपं प्रकटं चिदानन्दांशावावृतौ । तादृशत्वादेवैषामात्मतत्त्व-रूपता । शुद्धविद्यादित्रये सच्चिदंशावनावृतौ, आनन्दांशस्त्वावृतः । तादृशत्वादेव तेषां विद्यातत्त्वरूपता । शक्तिशिवयोस्तु न कोऽप्यंश आवृतोऽतः शिवतत्त्वरूपता । अत्र सर्वत्र मूलभूतानि वचनानि प्राचां टीकासु द्रष्टव्यानि । एवं स्थिते प्रकृते रुद्रशब्दस्तेजोवचनः, "रुद्रो वा एष यदग्निः" इति श्रुतेः । तेन तेजस्तत्त्व-पदवाच्यानां पुरुषादिमायान्तानां सप्तानामुपस्थितिः । तेषु पुरुषस्य वर्णितत्वेन रुद्रशब्देन षडेव देवता गृह्यन्ते । ईश्वरः प्रसिद्धः । सदेशः सदाशिवः ।

एतासां लक्षणमाह–मितेति । परिच्छिन्नस्वरूपा इत्यर्थः । एते त्रयो बिन्दुत्रयेण प्रतिपाद्यन्ते । शुद्धविद्या त्वीश्वरसदाशिवौ प्रत्येव गुणभूतत्वात् "भवेद् गुणवता बीजम" इत्युक्तन्यायेन सापि बिन्दुनैव प्रतिपाद्यते । यत्तु प्राञ्चोऽपि रुद्रपदं तेजस्तत्त्वसप्तकपरत्वेनैव व्याचक्षते, तदयुक्तम्; प्रसिद्धार्थपरित्यागापत्तेः । भवन्मते हि पञ्चदशगुणपरत्ववासनासप्तत्रिंशत्तत्त्ववासनाद्वयाद्भिन्नैवैषा वासना; अस्यां सर्वतत्त्वानां निरवशेषगणनस्यानावश्यकत्वात्, क्षित्यादिपञ्चकस्येन्द्रियदशकस्य च वाच्यत्वेन भवद्भिरवर्णितत्वात्, तत्त्वान्तर्गतानां कतिपयानां त्यागस्येव तत्त्वानन्तर्गतानामपि संग्रहे बाधकाभावात्, शान्तेस्तत्त्वानन्तर्गताया भवद्भि-रिह वर्णनाच्च । न च तत्त्वातीतपरं तत्, तस्याप्यनावश्यकत्वात् । द्वादशस्य श्रीकण्ठस्य तदर्थत्वेन सप्तत्रिंशत्पदार्थबोधकत्वविधेरुपक्रमस्थस्य तात्पर्यग्राहकत्वा-नुरोधेनेदृशः क्लिष्टोऽप्यर्थो न दोषावह इति ज्ञेयम् ।

नादान् व्याचष्टे–अमितामितेति । वीप्सयौत्पत्तिकानवच्छिन्नत्वमुच्यते । तेनेष-दवच्छिन्नयोरीश्वरसदाशिवयोर्निरासः । तत्र शक्तिशिवौ शक्तिशम्भुपदाभ्यामुक्तौ । शान्तिपदेन तत्त्वातीतं ब्रह्मैव, "ब्रह्म शान्तिः" इति श्रुतेः, "तया ह शान्त्या सर्व-शान्त्या मह्यं द्वि[पदे] चतुष्पदे च शान्तिं करोमि" इति मन्त्रैः शान्तेः सर्वशान्ति-रूपत्वविशेषणेन तत्त्वातीतस्वरूपतायाः स्पष्टीकरणाच्च । न च ब्रह्म शान्तिरित्यत्र ब्रह्मशब्दो वेदपर इति मन्तव्यम्; ब्राह्मणः शान्तिरित्येतत्समभिव्याहारेण तस्य [ब्रह्म]परत्वनिश्चयात् । "ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्" इति श्रुतौ, "मूलं कृष्णो

से० ब्रह्म च ब्राह्मणाश्च" इति स्मृतौ च ब्राह्मणपदसमभिव्याहारस्य तादृशनिर्णायकताया दीक्षितादिभिरुक्तत्वात्। पृथिवी शान्तिरित्यादयस्तु ब्रह्मणः सर्वात्मत्वपराः सत्यो न विरुध्यन्ते। ब्रह्मविद्याद्यन्तयोः "शान्तिः शान्तिः शान्तिः" इति मन्त्रपाठोऽपि शान्तिपदस्य ब्रह्मपरत्व एव लिङ्गम्, जगदाद्यन्तयोर्ब्रह्मण एव विशेषात्। यद्यप्येवं सति शक्तिः शम्भुश्च शान्तिश्चेत्येव वक्तुमुचितम्, उपक्रान्तक्रमानुगुण्यात्; तथापि तत्त्वातीतज्ञानस्य तन्निष्ठत्वेनेक्षणात्मकशक्तिज्ञाने कारणत्वात्तादृशशक्त्युपलक्षितत्वेन शिवज्ञाने शक्तिज्ञानस्यापि कारणत्वादीदृशलक्षणध्वननायशक्तिशिवयोः पूर्वं शान्तिर्निवेशिता भगवतेति। प्राञ्चस्तु नादोऽखिलं जगत्,

अधःशक्त्या विनिर्भिद्य ऊर्ध्वशक्त्यवसानकम्।
नाड्या ब्रह्मबिले लीनस्त्वव्यक्तध्वनिलक्षणः॥

इति वचनादित्याहुः। परन्तु तादृशस्य लीननादस्य शान्तिरिति संज्ञायां किं प्रमाणं तैरुपन्यस्तमिति विचार्यम्॥ ४५-४६॥

**वागुरामूलवलये सूत्राद्याः कवलीकृताः।**
**तथा मन्त्राः समस्ताश्च विद्यायामत्र संस्थिताः॥ ४७॥**
**गुरुक्रमेण संप्राप्तः संप्रदायार्थ ईरितः।**

(दी०) पूर्वं विद्याया बिन्दुनादमयवासनामुक्त्वा इदानीं सर्वमन्त्रमयतामपि [1]वासनां सोदाहरणमाह—वागुरेति। वागुरा मृगबन्धिनी, अत्र तु वागुराशब्देन मत्स्यग्रहणहेतुर्जालं लक्ष्यते, प्राणिग्रहणसामान्यात्। अन्यथा मूलवलये [2]सूत्राद्या इत्यनुपपन्नं स्यात्, मृगबन्धिन्या मूलवलयस्याभावात्, रज्जुनिर्मितत्वात् सूत्रादीनामपि अभावात् सूत्राद्याः सूत्राणि [3]तन्तवः, आद्यशब्दाज्जालप्रान्ते आयसगुलिकाः प्रोता गृह्यन्ते, यथा लोहमये वलये जालाव[4]यवभूतानां तन्तूनां [5]मूलमाकलितं तथा समस्तमन्त्राणां मूल[6]भूता वैखर्यपि विद्यायामस्यां विश्रान्ता। [7]अतोऽत्र विद्यायां समस्त[8]मन्त्राश्च संस्थिता इत्यर्थः॥ ४७॥

गुरूपदेशक्रमेणायमर्थः संप्राप्यत इत्याह—गुरुक्रमेणेति। गुरुक्रमः पारम्पर्यक्रमः, तदुपदेशक्रमेणैव। [9]तदुक्तमत्रैव—

१. वासनामाह—ख०। २ सूत्राद्या—ख० नास्ति। ३. तन्तव इति—ख०। ४. वयवानां तन्तूनां—ख०। ५. मूल कवलितं—ख०। ६. भूतायां वैखरीवि—ख०। ७. अतो विद्यायामत्र—ख०। ८. मन्त्राः स्थिता—ख०। ९. तदुक्तमत्रैव—ख० नास्ति।

शिवादिविग्रहात् पूर्णात् सर्वकारणकारणात्। दो०
ध्वनिरूपं परं सूक्ष्मं शुद्धं सकलतेजसाम् ॥
वाग्रूपं प्रसृतं तत्त्वमुन्मनाशक्तिकेवलम् ।
अव्यक्तं व्यक्तरूपेण निष्कलक्रमकारणम् ॥
परानन्दस्वरूपं तत् स्वच्छन्दादिप्रभेदतः ।
अनुष्टुपूछन्दसा बध्वा प्राह स्वच्छन्दभैरवः ॥
तद्वि[1]मृश्य प्रपञ्चेन प्रोवाचानाश्रितेश्वरः ।
तत्सर्वं शान्त्यतीतांशे कथितं बहुविस्तरम् ॥
तदेतत् पररूपेण सदाख्येन विवेन तु ।
मन्त्रासिंहासस्थेन पञ्चमन्त्रशरीरिणा ॥
[2]कौलिकादिषु सिद्धान्तपूर्वाद्य[3]मखिलागमम् ।
साधनं पुरुषार्थस्य कौलिकं चा[4]ध्य कौलिकम् ॥
असंख्यमप्रमेयं च शिवेन कथितं पुरा ।
तज्ज्ञानमीश्वरे दत्तमीश्वरेण शिवेच्छया ॥
विद्यायामादितो दत्तं विद्येशाय च तत्त्वतः ।
विद्येश्वरेण [5]तद्दत्तं ज्ञानं निर्यामिकं[6] क्रमात् ॥
दत्तं रुद्रेभ्य एतच्च गणतत्त्वेश्वराय च ।
श्रीकण्ठायेश्वरेणैव दत्तं तेन ततः परम् ॥
श्रीकण्ठेन [7]प्रधानादिदश रुद्रान्तिकं क्रमात् ।
दीक्षयित्वा विधानेन दत्तं वै ज्ञानमम्बिके ॥
दीक्षयित्वाऽभिषिच्याथ श्रीकण्ठेन मयाऽपि च ।
दत्तं श्रीदक्षिणं सर्वं सर्वकामार्थसाधनम् ॥

इति स्वच्छन्दभैरवोक्तरीत्या मयोदितस्वगुरुपारम्पर्योपदेशक्रमेणैव विषमपदैरसम्प्रदायविद्भिरपरिज्ञातार्थकोशैः[8]पूर्वोक्तरीत्या कथितः सम्प्रदायार्थो विना गुरूपदेशं व्युत्पत्तिबलेन पुराणादिश्लोकवद् ग्रहीतुमशक्य इत्यर्थः ॥ १७ ॥

१. तद्विमर्शप्र–ख०। २. कालिकादिषु–ख०। ३. ह्यखिलमागमम्–ख०। ४. कच्चातिकौ–ख०। ५. दत्तं तज्ज्ञानं–ख०। ६. नियमकं–क०। ७.प्रदानादि–ख०। ८. श्लोकैः–ख०

(से०) अथास्य मन्त्रस्य सर्वमन्त्रोत्तमत्वमुक्तं सम्प्रदायार्थलब्धं वर्णयन्नुपसंहरति — ( वागुरेत्यादि )। वागुरा मत्स्यबन्धनजालम् तस्य मूलस्थान एको वलयस्तत्र प्रोतानि सूत्राणि तेषामन्तेष्वयोगुटिकाः। तेषां सर्वेषां वलय एव यथाधारस्तथा सर्वेषां मन्त्राणामियं श्रीविद्यैवाधारः, तेषामन्तःकलुषशुद्धप्रमातृरूपत्वेन बुद्धितत्त्वेऽन्तर्भावस्य पूर्वं वर्णितत्वात्। प्राञ्चस्तु सर्वमन्त्रमयत्ववासनैषा चतुर्थी स्वतन्त्रैवोपदिश्यत इत्याहुः। अनया रीत्या यः सम्प्रदायार्थः स मया गुरुक्रमेणैव प्राप्तस्त्वयापि गुरुपारम्पर्यक्रमेणैव योग्येभ्य उपदेष्टव्य इत्यर्थः। आदौ निर्गुणाद् ब्रह्मणो ध्वनिरूपोन्मनात्मना सूक्ष्मरूपा वागुत्पन्ना। सा (? ताम्) स्वच्छन्दभैरवो निर्गुणब्रह्मशिष्यो बुद्ध्वा संक्षेपरूपेण तन्त्राणि प्रणीयानाश्रितेश्वरायोक्तवान्। स तानि विस्तृत्य शान्त्यतीतादेव्यै कथयामास। सा सदाशिवायाकथयत्। स पञ्चाम्नायादिभेदेनासंख्यमप्रमेयं बहुविस्तरमपारमर्चीकरत्। तद् ईश्वरो विद्येश्वरः श्रीकण्ठादयो रुद्रा इत्यादिक्रमेणातीव प्रथितमभूदित्येषा गुरुपरम्परा वृद्धैरुक्ता। अत्र सर्वत्र मूलभूतानि वचनानि प्राचां टीकासु द्रष्टव्यानि। अत्र तत्त्वातीतविशेष्यकः सकलतत्त्वप्रकारकोऽभेदसंसर्गको बोधः सप्तत्रिंशतः पदानां सामानाधिकरण्यलब्धः, परन्तु तत्तद्वर्णजन्यत्वस्याप्यस्मिन् प्रकरणे कथनात्तस्यापि शाब्दबोधे विषयत्वमावश्यकम्, तदभावे विद्याविश्वयोरभेदभानासम्भवात्।

ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानामेते [ पृथगवस्थिते ॥

इत्युक्त्या व्यो ] म तद्गुणः शब्दस्तदीयमिन्द्रियं चेत्येतावानर्थो हकारस्य। यत्र चाक्षरजन्यताया बाधस्तत्र तदक्षराभेदमात्रं तदर्थविशेषणम्। ततश्च यथायोग्यं तत्तदक्षरजन्यत्वेन तत्तदक्षरभिन्नत्वेन च तत्तद्वाच्यलक्ष्यार्थानुद्दिश्य तेषु नादाभिन्नतत्त्वातीताभेदविधिरूपोऽर्थः शाब्दः। एवं विश्वजनकत्वाद् देवीविद्ययोरभेदबोधो मानसः पाश्चात्त्य इति द्रष्टव्यम् ॥ ४७ ॥

**[1]निगर्भार्थो महादेवि शिवगुर्वात्मगोचरः ॥ ४८ ॥**
**तत्प्रकारं च देवेशि दिङ्मात्रेण वदामि ते।**
**शिवगुर्वात्मनामैक्यानुसंधानात्तदात्मकम् ॥ ४९ ॥**

(दी०) अथ क्रमप्राप्तं निगर्भार्थमाह—निगर्भार्थ इति। [2]निगर्भार्थः शिवो वाङ्मनसगोचरः सकलनिष्कलभेदविशेष्यः। आत्मादिसकलगुणा-

१. निगर्भोऽपि—ख०। २. निगर्भो निगर्भार्थः—ख०।

भिधस्तादृशमेव स्वात्मतया वीक्षमाणो विदिताखिलागमार्थो गुरुस्ता- **टी०**
दृशगुरुकरुणाकटाक्षपातविगलितसकलपाशविशदचिद्रूपानुभवः [1]शिष्य आत्मा। तदुक्तं [2]स्वच्छन्दसंग्रहे—

तत्त्वातीतं वरारोहे वाङ्मनोऽतीतगोचरम्।
[3]अनिष्कलंचासकलं नीरूपं निर्विकल्पकम्॥
निर्द्वन्द्वं परमं तत्त्वं शिवाख्यं परमं पदम्॥ इति।

सर्वविद्याविदाचार्यो मोक्षधर्म[4]परायणः।
गुरुवक्त्रप्रयोगेण पशुं तत्रैव योजयेत्॥ इति[5]।

गुरुः—

गृणते तत्त्वमात्मीयमात्मीकृतजगत्त्रयम्।
उपायोपेयरूपाय शिवाय गुरवे नमः॥ इति।

एवंविधशिव[6]गुर्वात्मैक्यगोचरानुसंधानात्मको निगर्भार्थ इत्यर्थः॥ ४८॥

[7]ननु केन प्रकारेण शिवगुर्वात्मनामैक्यमनुसन्धीयत इत्यत आह्— तत्प्रकारं चेति। तत्प्रकारं दिङ्मात्रेण वदामि [8]न विशेषप्रतिपादनप्रपञ्चेनेत्यर्थः॥ ४९॥

(से०) एवं सम्प्रदायार्थं निरूप्य क्रमप्राप्तं निगर्भार्थमुपदिशति—( निगर्भेत्यादि )। नितरां गर्भ इव निगर्भो रहस्यतम इत्यर्थः। शिवगुर्वात्मानो यस्मिन्नभेदेन गोचरा विषयास्तादृशबोधविषयोऽर्थो निगर्भार्थ इति यावत्॥ ४८॥

एवं तत्स्वरूपमुक्त्वा तदुपदेशं प्रतिजानीते—(तदित्यादि)। शिवो गुरुः स्वयञ्चेति त्रयाणामैक्यस्य परस्परप्रतियोगिकाभेदस्यानुसन्धानात्तदात्मकाहार्याद् दृढाभ्यस्ताद् मन्त्रज्ञानजन्यशाब्दबोधात्तदात्मकमैक्यात्मकं तत्प्रकारं शिवादिविशेष्यकबोधविशेषणं संक्षेपेण ते वदामीत्यर्थः॥ ४९॥

---

१. शिष्य–ख० नास्ति। २. महास्वच्छन्द–ख०। ३. सुनिष्कलं वा सक–ख०। ४. मोक्षदान–क०। ५. इति गुरुः–क० नास्ति। ६. गुर्वात्मशिष्यपरानु–ख०। ७. ननु–ख० नास्ति। ८. नाशेषविशे–ख०।

**निष्कलत्वं शिवे बुध्वा तद्रूपत्वं गुरोरपि ।**
**तन्निरीक्षणसामर्थ्यादात्मनश्च शिवात्मताम् ॥ ५० ॥**
**भावयेद्भक्तिनम्रः [1]सङ्कोचोन्मेषाकलङ्कितः ।**

(दी॰) तत्प्रकारमाह—निष्कलत्वमिति । कला अवयवाः[2], निष्कलत्वं निरवयवत्वम् । [3]शिवे पूर्वोक्तलक्षणे बुध्वा

गृणते तत्त्वमात्मीयमात्मीकृतजगत्त्रयम् ।
उपायोपेयरूपाय शिवाय गुरवे नमः ॥

इत्यभियुक्तवचनोक्तरीत्या निष्कलं [4]निष्कलात्मकं शिवं स्वात्मतया वीक्षमाणस्यैव गुरुत्वाद् गुरोरपि तद्रूपत्वं [5]शिवात्मत्वं बुध्वा तन्निरीक्षणसामर्थ्यात्

गुरो[6]राज्ञाप्रभावेण केवलं निष्प्रपञ्च[7]कम् ।
निरीक्ष्यैतादृशाद्वैतचिदम्बुधिसु[8]धार्द्रया ॥
यया विशुद्धः शिष्येऽपि[9] लीयेतानन्दचिद्घनः ।

इत्यादिवाक्योक्तरीत्या [10]तस्य गुरोर्नि[11]रीक्षणान्निखिलपाश[12]-भेदसामर्थ्यम्, तत्सामर्थ्यवशाद् विशुद्धः शिष्यो भक्तिनम्रः [13]प्रत्युत्पन्न-परमशिवाहंभाव[14]भावनाप्रवणः । प्रत्यहमा[15]दरान्नैरन्तर्याभ्यासवशात् [16]सङ्कोचोन्मेषाकलङ्कितः । [17]सङ्कोचः संसारित्वाभिमानः, तस्योन्मेषः पुत्रभार्यादिबाह्यार्थाभिरतिः, तेनाकलङ्कितो विगताहंममताभिमान आत्मनश्च शिवात्मतां भावयेत् । जपाकुसुमसामीप्य[18]विरहात् स्फटिकस्य नैर्मल्यमिवात्माद्वैतभावनाभावितगुरुकटाक्षपातपाटितपाशपटलः परिपूर्णस्व[19]भावं पश्येदित्यर्थः ॥ ५० ॥

---

१. नम्रः सन् शङ्कोन्मेषा—ख॰ ग॰ । २. वाः तद्रहितत्वं निष्क—क॰ । ३. शिवेन पूर्वोक्तलक्षणेन—क॰ । ४. निखिला—ख॰ । ५. शिवात्मकत्व—ख॰ । ६. राज्ञापालनेन—ख॰ । ७. निष्प्रपञ्चनिरीक्षयाता—ख॰ । ८. सुधाद्रवीभूततया—ख॰ । ९. अपि—ख॰ नास्ति । १०. तस्य—ख॰ नास्ति । ११. निरीक्षणं नि—ख॰ । १२. पाशभेदनसमर्थम्—क॰ । १३. भक्त्युत्पन्नः प—क॰ । १४. भावनया प्रवेशः—ख॰ । १५. मादरनैरन्तर्यपटुत्वभ्या—ख॰ । १६. शङ्कोन्मेषा—ख॰ । १७. शङ्का सङ्कोचः—ख॰ । १८. विगमात्—ख॰ । १९. स्वभावः स्यादित्यर्थः । अनन्तरं क्रम—ख॰ ।

(से०) तदेवाह—(निष्कलत्वमित्यादि)। शिवे परमशिवे निष्कलत्वं निर्गुणतां बुद्ध्वा प्रथमोपस्थितवाग्भवकूटजन्यबोधविपर्यीकृत्य स्वगुरोरपि तद्रूपत्वं निष्कलत्वं क्रमप्राप्तद्वितीयकूटप्रतिपादितं निष्कलाभेदानुसन्धानदार्ढ्यलब्धं बुद्ध्वा तत्कृपाकरम्बितकटाक्षनिरीक्षणसामर्थ्यैकलब्धमात्मनोऽपि निष्कलशिवात्मकत्वं तृतीयकूटप्रतिपादितं भावयेत्। हादिविद्यायां हि हस-शब्दो ह्रस्वपरः। रेफवकारयोर्लोपश्छान्दसः। ह्रस्वा स्थूलरूपोज्झिता संस्कारात्मनैव स्थिताः कला गुणादयो यस्मिन् स हसकलः। स चासौ हृल्लेखावाच्यः परशिवश्चेति कर्मधारयः। भावार्थप्रकरणोक्तरीत्या द्वितीयकूटस्थप्राथमिकाक्षरत्रयं निष्कलब्रह्मपरमेव। तद्धलत्याकर्षयति अभेदेनानुसन्धत्ते सोऽयं हसकलहो गुरुः। सोऽपि हृल्लेखावाच्य एव, "मनुष्यचर्मणा नद्धः शिव एव गुरुर्मतः" इत्युक्तेः। तृतीयकूटे सकलपदमुपासकविशेषपरं सत् स्वात्मपरम्, सोऽपि हृल्लेखार्थो निष्कल इति योजना। ननु सकलस्यैव कथं निष्कलत्वमित्याशङ्कायामाह—भक्तिनम्र इति। कलानामौपाधिकत्वेन तदभावस्य नैसर्गिकत्वेन स्फटिकलौहित्यतदभावयोरिवाविरोध इति रीत्या शङ्काकलङ्कापगमो गुरुदेवताभक्तिमतो भवतीति भावः।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥

इति श्रुतेः॥ ५०॥

**कौलिकं कथयिष्यामि चक्रदेवतयोरपि॥ ५१॥**
**विद्यागुर्वात्मनामैक्यं तत्प्रकारः प्रदर्श्यते।**

(दी०) अथ क्रमप्राप्तं कौलिकार्थमाह—कौलिकमिति। कौलिकं कौलिकार्थं कथयिष्यामि चक्रदेवतागुरुविद्यासाधकानामैक्यानुसन्धानं कौलिकार्थ इत्यर्थः। [1]अक्षरार्थः स्फुटः।

तत्प्रकारमाह—तत्प्रकार इति। "तत्प्रकारः प्रदर्शितः" इत्यादि "इत्येवं कौलिकार्थस्तु कथितो वीरवन्दिते" इत्यन्तेन॥ ५१॥

(से०) कौलिकार्थमुपदिशति सार्धैः सप्तदशभिः—(कौलिकमित्यादि)। श्रीचक्रं श्रीमाता श्रीविद्या श्रीगुरुरात्मा चेति पञ्चानामैक्यं कौलिकार्थ इत्युच्यते। कुलं सजातीयसमूहः। "सजातीयैः कुलं यूथम्" इत्यमरः। साजात्यं चैकधर्मा-

1. अक्षरार्थः स्फुटः—क० नास्ति।

से० वच्छिन्नत्वं गणेशादिपञ्चात्मकत्वञ्च । शास्त्रारम्भे मङ्गलाचरणश्लोके यद्देवीनिष्ठत्वेन कथितं स एव पञ्चस्वनुगत एको धर्मः । तद्वन्ति कुलानि तत्सम्बन्धिनं कौलिकमर्थं मन्त्रप्रतिपाद्यं पञ्चानामभेदं कथयिष्यामि । तेषां पञ्चानां यः प्रकार एकधर्मावच्छिन्नत्वरूपं विशेषणं स प्रकर्षेण दर्श्यत उपपाद्यत इत्यर्थः ॥ ५१ ॥

लकारैश्चतुरस्राणि वृत्तत्रितयसंयुतम् ॥ ५२ ॥
सरोरुहद्वयं शाक्तैरग्नीषोमात्मकं प्रिये ।
हृल्लेखात्रय[1]संभूतैरक्षरैर्नवसङ्ख्यकैः ॥ ५३ ॥
बिन्दुत्रययुतैर्जातं नवयोन्यात्मकं प्रिये ।
मण्डलत्रययुक्तं तु चक्रं शक्त्यनलात्मकम् ॥ ५४ ॥
व्योमबीजत्रयेणैव प्रमातृत्रितयान्वितम् ।
इच्छाज्ञानक्रियारूपमादनत्रयसंयुतम् ॥ ५५ ॥
सदाशिवासनं देवि महाबिन्दुमयं परम् ।
इत्थं मन्त्रात्मकं चक्रं देवतायाः परं वपुः ॥ ५६ ॥

(दी०) आदौ विद्याचक्रयोरैक्यमाह—लकारैरिति । लकारैः विद्याबीजत्रयगतैश्चतुरस्राणि भूगृहाणि,

पृथिवीमण्डलं पीतं चतुरस्रं सुशोभनम् ।

इति स्वच्छन्दसंग्रहोक्तरीत्या भूमण्डलस्य चतुरस्ररूपत्वाद् भूतत्त्ववाचकैर्लकारैश्चतुर[2]स्रत्रयं जातमित्यर्थः ।

शाक्तैः [3]( सकारैः । तदुक्तं चतुःशतीशास्त्रे–"मादनं तदधःशक्तिः" । हंसपरमेश्वरेऽप्युक्तम—

शिवो हकार इत्युक्तः सकारः शक्तिरव्यया ॥

विद्याबीजत्रयगतैः )

सकारैर्वृत्तत्रितयसंयुतं सरोरुहद्वयं चतुरस्रान्तरेण एकं वृत्तम्, तद्वृत्तान्तः षोडशदलं सोमात्मकं पद्मम्, तदन्तश्च द्वितीयं वृत्तम्, तदन्तश्चाष्टदलं पद्ममग्न्यात्मकम्, तदन्तश्च तृतीयं वृत्तम् । एवं वृत्तत्रितयसंयुतम् अग्नीषोमात्मकं सरोरुहद्वयम्,

---

१. संयुतैः–ख० । २. स्र जात–ख० । ३. धनुश्चिह्नान्तर्गतं–ख० नास्ति ।

जलबिम्बं सुवृत्तं च [1]श्वेतं वै पद्मलाञ्छितम् । दी०

इति स्वच्छन्दसंग्रहोक्तरीत्या जलबिम्बस्य पद्मलाञ्छितवृत्तरूपत्वाज्जलतत्त्ववाचकैः सकारैर्वृत्तत्रयसंयुतं सरोरुहद्वयं जातमित्यर्थः ।

बीजत्रय[2]शिखरगतहृल्लेखात्रयावयवभूतैरक्षरैर्हकाररेफेकाराख्यैर्बिन्दुत्रय[3]संयुतैर्नवसंख्यात्मकैर्नवयोन्यात्मकं चक्रं जातमित्यर्थः ।

ननु पद्मद्वयानन्तरं चतुर्दशारदशारद्वयात्मकचक्रत्रितयस्य कथने युक्ते तदुल्लङ्घ्य नवयोनिचक्रं कथं [4]कथ्यत इति चेत् ? उच्यते, नवयोनिचक्रस्योपरिष्टात् प्रस्तारे कृते [5]सति तिसृभिः शक्तिभिर्वह्निभिश्च द्विदशचतुर्दश[6]कोणात्मकं [7]चक्रत्रयं जात[8]मतो नवयोनिचक्रानन्तरमेतच्चक्रत्रयं जायत इत्येतन्मनसि निधायाह—मण्डलेति । मण्डलत्रययुक्तं तु[9](वृत्तत्रयान्तर्गतशक्त्यनलात्मकं चक्रं) नवयोनिचक्रस्योपरिष्टात् प्रस्तारे कृते सति तिसृभिःशक्तिभिरनलैश्च [10]त्रिभिर्निष्पन्नत्वाद् द्विदशारचतुर्दशा[11]रादिचक्रत्रयं [12](व्योमबीजत्रयेणैव हकारत्रयेणैव हकारस्य व्योमवाचकत्वात् । हृल्लेखात्रये हकारत्रयं गतं शिष्टेन हकारत्रयेण चतुर्दशारादि चक्रत्रयं) जातमित्यर्थः । प्रमातारस्त्रि[13]विधा उक्तरूपा अशुद्धशुद्धमिश्रात्मानस्तेषां त्रयेणान्वितम् । पश्चाच्छिवानु[14]गृहीतमलकर्मविपाकात् पृथिव्यप्तेजोवाय्व[15]धिपतीनां तेषां त्रयेण[16]व्यष्ट्या समष्ट्या चेदमन्वितं प्राप्तम् । तदुक्तं स्वच्छन्दसंग्रहे—

मलादीनामपाके तु सामान्यानुग्रहो भवेत् ।
आधिकारिकमैश्वर्यं शिवानुग्रहमात्रतः ॥
पशवस्त्रिप्रकारास्तु प्राप्नुयुः परमेश्वरि ! ।
[17]ये पक्वमलकर्माणस्तान् किञ्चिदनु[18]गृह्य च ॥
जलतत्त्वादितत्त्वानां मध्ये लोकेश्वरास्त्रिधा[19] ।

---

१. ज्ञेयं—ख० । २. त्रयं शिखर—ख० । ३. सं—ख० नास्ति । ४. कथितम् ? उच्य—ख० । ५. सति—ख० नास्ति । ६. शारात्मकम्—ख० । ७. त्रयं—ख० नास्ति । ८. तं ततो—ख० । ९. धनुश्चिह्नान्तर्गतं—ख० नास्ति । १०. तिसृभिः—क० । ११. शारकोणात्मकं—ख० । १२. कंसान्तर्गतं—क० नास्ति । १३. त्रिधा—ख० । १४. नुग्रहतो—ख० । १५. य्वधिपतयः—ख० । १६. व्यष्टिसमष्टितया वा—ख० । १७. अपक्व—ख० । १८. ह्यताम्—ख० । १९. धा इति—ख० ।

[1]इच्छाज्ञानक्रियाशक्तिप्रधान[2]मातृत्रयाणां[3] रूपाणां त्रयाणां मादनानां ककाराणां त्रयेण संयुतं सम्मिश्रितं सदाशिवासनं पृथिव्यादिवायुतत्त्वा[4]न्तचतुस्तत्त्वाधिपतिभिर्ब्रह्मविष्णुरु[5]द्रेश्वरैश्चतुर्भिः पादरूपेण धृतम् पञ्चमहाभूताकाशाधिपतिसदाशिवरूपपञ्चमयासनम् । महाबिन्दुमयं परम् ।

परशिवरविकरनिकरे प्रतिफलति विमर्शदर्पणे विशदे ।
प्रतिरुचिरुचिरे कुड्ये चित्तमये निविशते महाबिन्दुः ॥

इति कामकलाविलासोक्तरीत्या परशिवप्रतिबिम्बमहाबिन्द्वात्मकं पर[6]मुत्कटम्, शिवशक्त्योरधिवासयोग्यत्वात् । तदुक्तं ज्ञानदीपविमर्शिन्याम्—[7]"ओड्याणपीठ[8]मध्ये कदम्बवनान्तरश्रीमञ्च-[9]चतुष्पादके लं पृथिव्यधिपतये ब्रह्मणे नमः । वं अपामधिपतये विष्णवे नमः । रं तेजोधिपतये रुद्राय नमः । यं वाय्वधिपतये ईश्वराय नमः । एतानभ्यर्च्य हं [10]आकाशाधिपतये पञ्चव[11]क्त्रसदाशिव[12]महाप्रेता-[13]सनाय नमः ।" [14] ( इति श्रीमञ्चाकारं सदाशिवमभ्यर्च्य ) इत्थमुक्तप्रकारेण मन्त्रात्मकं चक्रं सौभाग्यविद्यमित्यर्थः ।

इदानीं चक्रेण देवताया ऐक्यमाह—देवताया इति । चक्रं देवतायाः परम् अन्यद् वपुः । "ततः पद्मनिभां देवीम्" इत्यत्र देवतायाः करचरणादि[15]मद्वपुरुक्तम्, तदेव [16]त्रिकोणादिभूगृहान्तश्रीचक्रपदनिवासावरणदेवतारूपेणावयवशो विभज्य बैन्दव[17]निवासिनी स्वसंविद्देवता श्रीचक्रा[18]परवपुषा स्थितेत्यर्थः । तदुक्तमत्रैव—

[19](स्वेच्छाविश्वमयोल्लेखखचितं विश्वरूपकम् ।
चैतन्यमात्मनो रूपं निसर्गानन्दसुन्दरम् ॥

---

१. यारूपमादनत्रयसंयुतम् इच्छाज्ञानक्रिया–ख० । २. प्रमातृ–ख० । ३. त्रयरूपाणां–ख० । ४. त्वान्ताधि–ख० । ५. रुद्रै–क० । ६. मुत्कृष्टं–ख० । ७. उड्डीयान–ख० । ८. ठे मध्ये–ख० । ९. श्रीमञ्चपादचतुष्कादधःकेलं–ख० । १०. हं–क० नास्ति । ११. पञ्चवक्त्राय–ख० । १२. वाय–ख० । १३. प्रेतपद्मा–ख० । १४. धनुश्चिह्नान्तर्गतं ख०–नास्ति । १५. यत् तदेव–ख० । १६. बैन्दवत्रिको–ख० । १७. बैन्दवासनं स्वसं–ख० । १८. चक्रवदुषा–ख० । १९. धनुश्चिह्नान्तर्गतं ख० नास्ति ।

इच्छाशक्तिमयपाशमङ्कुशज्ञानरूपिणम् ।
क्रियाशक्तिमये बाणधनुषी दधदुज्ज्वलम् ॥
आश्रयाश्रयिभेदेन अष्टधा भिन्नहेतिमत् ।
अष्टारचक्रसंरूढं नवचक्रासनस्थितम् ॥ )
एवंरूपं परं तेजः श्रीचक्रवपुषा स्थितम् ।
तदीयशक्तिनिकरस्फुरदूर्मिसमावृतम् ॥ ५६ ॥

(से०) (लकारैरित्यादि) । त्रिभिर्लकारैस्त्रीणि चतुरस्राणि जातानि वाच्यानि वा । उभयथापि तेषां परस्परमभेदः, कार्यकारणयोर्वाच्यवाचकयोश्चैक्यात्, चतुरस्रं भूमण्डलं प्रति जनकता(याः) वाचकता(याः) वा भूबीजे लकारे युक्तत्वात् । अत एव पद्मद्वयलाञ्छितं वृत्तं जलमण्डलं प्रति जनकता वाचकता वा जलविशेषात्मकचन्द्रमण्डलबीजानां त्रयाणां सकाराणां युक्तेत्याशयेनाह— वृत्तेति । षोडशदलं पद्मं सोमात्मकम् । अष्टदलं त्वग्न्यात्मकम् । वृत्तत्रयमेकमेवेति त्रीणि त्रिभिः शाक्तैः सकारैर्जातानि वाच्यानि वा । जलमण्डलस्य तन्त्रान्तरेऽर्धचन्द्राकारत्वोक्तावपि स्वच्छन्दतन्त्रे पूर्णचन्द्राकारतोक्ते, "जलबिम्बं सुवृत्तं च ज्ञेयं वै पद्मलाञ्छितम्" इति । सकाराधिकारे—"जगद्बीजं शक्तिनामा हंसो वेगवती भृगुः" इति नन्दनः ॥ ५२ ॥

( हृदित्यादि ) । हृल्लेखासु यानि त्रयाणि व्योमाग्निकामकलाक्षराणि त्रीणि तदुत्तराणि संभूतानि समुदायात्मकानि यानि तैर्नवसंख्यकैर्बिन्द्वाद्युन्मन्यन्तैरक्षरैः । त्रयोत्तराणि सम्भूतानीति मध्यमपदलोपी समासः । कामकलाया अवयवशो विभज्य गणनमित्याह—बिन्दुत्रयेति । ततश्च प्रतिहृल्लेखं हकारो रेफः कामाख्यबिन्दुर्विसर्गाख्यबिन्दुद्वयमनुस्वारोऽर्धचन्द्रो रोधिनी नादो नादान्तः शक्तिर्व्यापिका समनोन्मनेति चतुर्दशभिः संभूय द्विचत्वारिंशताक्षरैः शक्त्यनलात्मकं पञ्च शक्तयश्चत्वारो वह्नय इत्येवं योन्यात्मकं चक्रं द्विचत्वारिंशत्त्रिकोणात्मकं जातम् । तदिदं मण्डलत्रययुक्तं सूर्यसोमानलात्मकम्, पूर्वचतुःशत्यां "तृतीयं तु हुताशनः" इति चरणेनास्यार्थस्य ज्ञापितत्वात्, नवयोन्यात्मकचक्रस्यैव सर्वचक्रस्वरूपतया अपि तत्रैवोपपादितत्वेनैतावन्मात्र एव मण्डलत्रययोगोक्तेरुपपत्तेश्च । अथवा बिन्दुत्रयेति नादत्रयस्याप्युपलक्षणम् । तद्युतैरिति तु बिन्दुनादविशिष्टस्तुर्यस्वर एक एव गणनीय इति द्योतयितुम् । ततश्च हकारत्रयरेफत्रयेङ्कारत्रयैर्नवभिर्नवयोनिचक्रं जातमित्यर्थः । ननु प्रथमव्याख्यापक्षे त्रिकोणाना त्रिचत्वारिंशत्संख्याकत्वेनात्र कथमेकस्य त्यागः ? न च तस्य पार्थ-

क्येन बिन्दुना सह वासनाग्रे [illegible] इति वाच्यम् ; तथा सत्यष्टयोन्यात्मकत्वोक्तिर्विरुध्येतेति चेन्न, चक्रोद्धारावसरे प्रथमशक्तेर्द्वितीयशक्त्यभेदेन विधानेन प्रथमशक्तीशानाग्नेयकोणयोर्वसुकोणघटकत्वेन तदीयप्रतीचःकोणमात्रस्य पृथक्करणेऽप्यवशिष्टस्य नवयोन्यात्मकत्वानपायात् ॥ ५३–५४ ॥

एवं भूगृहं पद्मद्वयं नवयोनिचक्रं चोक्त्वा क्रमप्राप्तयोर्मध्यत्रिकोणबिन्द्वोर्वासनामाह—( व्योमेत्यादि )। इच्छाज्ञानक्रियापदेन मध्यत्रिकोणमुच्यते, तस्य तद्वासनाकत्वस्य पूर्वमुक्तत्वात्। तद्रूपं यन्मादनत्रयं ककारत्रयं तेन संयुतम्। अत एव प्रमातृत्रितयेन सम्प्रदायार्थप्रकरणोक्तसकलादिसाधकत्रयेणान्वितम्। सदाशिव एवासनं यस्यैतादृशं महाबिन्दुमयं चक्रं व्योमबीजानां हकाराणां त्रयेण जातं वाच्यं वेत्यर्थः। ककारत्रयेण कोणत्रयं हकारत्रयेण बिन्दुरिति यावत्। देवताशरीरान्तरभूतमिदं चक्रं विश्वमनेन प्रकारेण मन्त्रमयं मन्त्राभिन्नमिति। प्राञ्चस्तु—हृल्लेखास्थाक्षरनवकेन त्रिकोणवसुकोणोभयरूपं नवयोनिचक्रमुत्पन्नम्। तदुपरितनं यच्चक्रं शक्तित्रयानलत्रयात्मकं दशारद्वयचतुर्दशाररूपं तदिदं हकारत्रयेणोत्पन्नम्। बिन्दुस्तु ककारत्रयेणोत्पन्नः। मण्डलत्रयपदं शक्त्यनलत्रयपरमेव। एवंरीत्या परं वपुरित्यन्तेन ग्रन्थेन चक्रमन्त्रदेवीनामभेद उक्त इति व्याचक्षते। तच्चिन्त्यम्; मण्डलपदस्यैकैकशक्त्यनलमिथुनवाचकत्वे मानाभावात्, पद्मद्वयकथनोत्तरमुत्प्लुत्य वसुकोणानुधावने बीजाभावाच्च। न च दशारादिभ्यः पूर्वं नवयोनिकस्योत्पत्तेः पूर्वं तत्कथनमिति समाधातुं शक्यम्, बिन्द्वादिभूगृहान्तरूपस्य लेखने क्लृप्तस्य सृष्टिक्रमस्येहाननुसृतत्वात्, पूजायां क्लृप्तस्य संहारक्रमस्यैवेहादृतत्वेन तद्विरोधाच्च। इदं त्विहावधेयम्—चक्रं देवता विद्या गुरुः साधकश्चेति पञ्चानां मध्य एकैकस्य स्वस्वेतरचतुश्चतुःप्रतियोगिकाभेदाश्चत्वार इति सम्भूय विंशतिरभेदाः। तेषु य एव चक्रप्रतियोगिको देवतानुयोगिकोऽभेदः, स एव देवताप्रतियोगिकश्चक्रानुयोगिकश्च भवतीत्यनया रीत्या पुनरुक्तानां दशानामपनये दशैवाभेदा अवशिष्यन्ते। अथ चक्रस्य देवतादिभिश्चतुर्भिः सहाभेदाश्चत्वारो देवताया विद्यादिभिस्त्रिभिः सह त्रयो विद्याया गुरुशिष्याभ्यां सह द्वौ गुरोः शिष्येण सहैक इति। एते दशाप्यभेदा गणेशादिषडात्मकत्वस्य चक्रादिपञ्चक उपपादने वर्णिता भवन्ति। तादृशैकधर्मावच्छिन्नत्वेनैव साजात्यादस्य कौलिकार्थत्वमपि। ईदृशैकार्थप्रतिपादकत्वादेवास्य ग्रन्थस्यैकवाक्यतापि। सा च "कौलिकं कथयिष्यामि" इत्युपक्रमात् "इत्येवं कौलिकार्थस्तु कथितो वीरवन्दिते" इत्युपसंहाराच्चावश्यकी, द्वादशकपालवाक्यतुल्यन्यायात्।

ततश्च विद्याचक्रयोरभिन्नोपादानोपादेयत्वादभेदः, देवीचक्रयोस्त्वेकात्माधिष्ठि- से० तत्वाद्योगिनिर्मितकायव्यूहस्येवाभेदः, देवीविद्यागुरुसाधकानां तु गणेशादिषड-त्मकत्वस्य वक्ष्यमाणत्वादभेद इति वर्णने तु प्रमेयवैलक्षण्याद्वाक्यभेदः, चक्र-गुर्वोश्चक्रसाधकयोश्चेत्यभेदद्वयस्याकथनान्न्यूनता चापद्यते। न च तदुभयं युक्तम्। तस्माच्चक्रे गणेशादिषडात्मकत्वकथनपर एव पूर्वो ग्रन्थसन्दर्भः। उत्त-रस्तु देव्यादीनां चतुर्णां तत्कथनपरः स्पष्ट एव। एवं सति पञ्चानामप्येकधर्मा-वच्छिन्नत्वादेकैकस्य चतुर्भिश्चतुर्भिः सहाभेद उक्तो भवतीति न न्यूनत्वम्, न च वाक्यभेदः। मन्त्राक्षरैश्चक्रावयवानामुत्पत्तिकथनं तु जन्यजनकयोरभेदद्वारा वाच्यवाचकभावे पर्यवसानात्पञ्चानामभेदस्य मन्त्रप्रतिपाद्यत्वस्फोरणाय, तद्विना कौलिकस्य मन्त्रार्थत्वानुपपत्तेः। तत्प्रकारश्चेत्थम्—लकारत्रयं सकारत्रयं चेत्येतैः षड्भिः पदैर्डाकिन्यादियोगिन्य ऐकैकश्येन प्रतिपाद्यन्ते। डाकिन्येका राकिण्येके-त्यादिरीत्या पार्थक्येन तु प्रातिपदिकाभ्यामपेक्षाबुद्ध्यात्मकेषु षट्सु बोधेषु जातेषु एकसमुदायघटकत्वरूपः परस्परसंसर्गो वाक्यार्थमर्यादया बुध्यते। ततः षड्योगिन्य इत्याकारको बोधः। ततश्च योगिनीषट्कात्मकत्वस्य चक्रादिपञ्चकेऽपि सत्त्वात्तत्पञ्चकं परस्पराभिन्नमिति बोधः। अयञ्च पदषट्कघटितवाक्यस्य लक्ष-णया जातत्वाच्छाब्दो मानस एव वेत्यन्यदेतत्। गणेशादिषट्कञ्च गणेशा ग्रहा नक्षत्राणि योगिन्यो राशयः पीठश्चेति। तेषु गणेशपीठयोरेकसंख्याकत्वा-दन्यतरोक्त्यैवेतरच्चरितार्थमित्याशयेन पञ्चात्मकतैवेह वर्ण्यते। तत्र च यद्यपि गणेशादिरूपक एव षोढान्यासे क्रमः क्लृप्त इति तेनैव क्रमेण देवतादीनामिव चक्रस्यापि वक्तुं युक्तम्, तथापि क्लृप्तक्रमपरित्यागे बीजस्य वक्ष्यमाणतया क्रमा-न्तर आश्रयणीये चक्रपूजानुगुण्याय तत्र क्लृप्तेन संहारक्रमेणैव पञ्चात्मकत्व-मुपपादयितुमादौ चक्रस्य योगिन्यात्मकत्वमुपदिशति—लकारैरिति। योगिन्यात्म-कत्वं हि डाकिन्यादिषडात्मकत्वं वशिन्याद्यष्टात्मकत्वं चेति द्विविधं वक्ष्यते। प्रकृते च वृत्तत्रयस्यैक्येन गणनया चतुरस्राणि त्रीणि द्वे सरोरुहे चेति षड् विभज्य गणनयाष्टाविति चक्रं तदवच्छेदेन योगिन्यात्मकमिति भावः। ग्रहात्मकत्वमाह—ह्रल्लेखेति। राश्यात्मकत्वमाह—बिन्द्विति। बिन्दुनादयोरीकारैः सह गणनया तु नवयोनिचक्रं नवग्रहात्मकम्। बिन्दुनादयोरैक्येनेकाराद्भेदेन गणनया नवयोनि-चक्राद् बहिःस्थितवृत्तत्रयस्य बिन्दुनादत्रयजन्यत्वाद् द्वादशभिरक्षरैर्द्वादशावयवानां चक्रसम्बन्धिनां जयत्वाभिप्रायेण द्वादशराशिरूपत्वम्, तदिदमाह—मण्डलत्रयेति। वृत्तत्रयेत्यर्थः। तन्त्रराजे वृत्तषट्कपक्ष उक्त इति तु पूर्वमेवास्माभिः प्रदर्शि-

से० तम्। पूर्वोक्तावयवानां मेलनेन चक्रस्य नक्षत्रात्मकत्वमाह—व्योमेति। अत्र बिन्दुनादयोः पार्थक्येन गणना। ततश्च लकारसकारहकारककारबिन्दुनादा-स्त्रयस्त्रय इत्यष्टादश हृल्लेखास्थाक्षरनवकं चेति सप्तविंशत्याक्षरैर्जन्याश्चक्रावयवा-श्चतुरस्रत्रयं सरोरुहद्वयं वृत्तषट्कं नवयोनिचक्रं मध्यत्रिकोणस्य कोणत्रयं रेखात्रयं बिन्दुरेक इति सप्तविंशतिरिति नक्षत्ररूपतेत्यर्थः। प्रमातृत्रितयस्येच्छा-ज्ञानक्रियारूपस्य च पृथगुपादानमहिम्ना मध्यत्रिकोणस्य रेखाणां कोणानां च पार्थक्येन गणनम्। वक्ष्यमाणश्लेषस्फोरणाय चक्रस्य देवीस्वरूपतामाह—देवताया इति॥ ५५-५६॥

एकादशाधिकशतदेवतात्मतया पुनः।
गणेशत्वं महादेव्याः ससोमरविपावकैः॥ ५७॥
इच्छाज्ञानक्रियाभिश्च गुणत्रययुतैः पुनः।
ग्रहरूपा च सा देवी ज्ञानकर्मेन्द्रियैरपि॥ ५८॥
तदर्थैरेव देवेशि करणैरान्तरैः पुनः।
प्रकृत्या च [1]गुणेनापि पुंस्त्वबन्धेन चात्मना॥ ५९॥
नक्षत्रविग्रहा जाता [2]योगिनीस्तथोच्यते।
त्वगादिधातुनाथाभिर्डाकिन्यादिभिरप्यसौ॥ ६०॥
वर्गाष्टकनिविष्टाभिर्योगिनीभिश्च संयुता।
योगिनीरूपसंस्थाय राजते विश्वविग्रहा॥ ६१॥

(दी०) एतदेवोपपादयति—एकादशेति। [3]एकादशोत्तरशतदेवता-त्रिकोणाग्रदत्तवामकोणेषु कामेश्वर्यादिकास्तिस्रस्तद्बहिरष्टकोणान्तराले त्रिकोणं[4] परितश्चतुर्दिक्षु अष्टौ कामेश्वरकामेश्वर्यायुधदेवता अष्टकोणे अष्टौ वशिन्याद्या अष्टकोणान्तराले षडङ्गदेवताः, अन्तर्दशारे सर्वज्ञाद्या दश[5], द्वितीयदशारे सर्वसिद्धि[6]प्रदाद्या दश, चतुर्दशारे सर्वसंक्षोभिण्या-द्याश्चतुर्दश, अष्टदले अष्टानङ्गकुसुमाद्याः, षोडशदले कामाकर्षिण्याद्याः

---

१. गुणेनाथ—ख०। २. योगिनीनाम्—से०। ३. एता एक—ख०। ४. णान्वित च—ख०। ५. दश द्वियीयं—क० नास्ति। ६. सिद्ध्याद्या दश—ख०।

षोडश, अन्तश्चतुरस्रे मुद्रादेवता दश, मध्ये चतुरस्रे ब्रा[1]ह्म्याद्या अष्टौ, दो[८] बाह्यचतुरस्रे अणिमाद्या दश। एवमेकादशोत्तर[2]शतदेवतात्म[3]तया तासामाधारभूता श्रीचक्ररूपिणी [4]देवतेत्यर्थः। नन्वयं कौलिकार्थो वामकेश्वरतन्त्रे[5] कुत्र सूचित इत्याशङ्कां परिहरन् देवता[6]विद्याचक्र-गुरुशिष्याणामैक्यमेव[7] गणेशेत्यत्र सूचितम्।

कौलिकार्थं विवृणोति—गणेशत्वमिति। ([8] पुनःशब्दादेकादशाधिकशतदेवतात्मतया अस्या गणेशत्वम्। गणेशत्वं महादेव्या इत्यनेनापि काकाक्षिन्यायतः पूर्वोक्तत्रिकोणादिचतुरस्रान्तपदनिवास्यैकादशाधिकशतदेवतात्मतया) [9]तत्सङ्ख्याकदेवतासमुदायो गणः। देव्याः सोमरविपावका नेत्ररूपेण स्थिताः।

"इच्छा शिरःप्रदेशस्था ज्ञाना च तदधोगता।
[10]क्रिया पादगता ह्यस्याः"

इति सङ्केतपद्धत्युक्तरीत्या इच्छादिका मूर्धाद्यवयवाः, गुणाः सत्त्वरजस्तमांसि, [11]एवं स्वावयवभूतैस्तैर्नवभिर्ग्रहरूपा च [12]सा देवी ॥ ५७ ॥

ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि बोधकरणानि, कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि, तेषामर्थाः शब्दस्पर्शरूपरसगन्धा वचनादानगमनविसर्गानन्दाश्च, करणानि मनोबुद्ध्यहङ्कारचित्तान्यान्तराणि च, प्रकृतिः गुणसाम्यमव्यक्तम्, गुणो गुणतत्त्वं सुखदुःखमोहानां मूलम्, पुंस्त्वबन्ध आत्मा पुरुषतत्त्वम्। तदुक्तं स्वच्छन्दसंग्रहे—

एभिर्मायादिभिः षड्भिः परिपूर्णः पशुः पुमान्।
भुङ्क्ते भोगान् यथा देवि तथा पुरुषसंज्ञकः ॥
सैव मायाऽथ भोगार्थं पशोरव्यक्तसंज्ञकम्।
मूलप्रकृतिविश्वस्य गुणत्रितयरूपकम् ॥

---

१. ब्राह्म्याद्या–क०। २. शत–ख० नास्ति। ३. तया समाकारभूतश्री–ख०। ४. श्रीचक्रदेव–ख०। ५. तन्त्रेऽथ कुत्र सूत्रे सूचित–क०। ६. विद्याचक्र–ख० नास्ति। ७. मैक्यार्थमेत्र–ख०। ८. कंष्ठान्तर्गतो ग्रन्थः ख० नास्ति। ९. महादेव्यास्तु तत्सं–ख०। १०. क्रिया पादगता ह्यस्याः–क० नास्ति। किन्तु तत्र 'तस्याः' इत्येव वर्तते। ११. एवं–क० नास्ति। १२. सा देवी–ख० नास्ति।

दी०

अमूर्त्तस्यां प्रकृत्यां तु गुणतत्त्वं बभूव ह
तद्दुःखसुखमोहानां मूलं सत्त्वं रजस्तमः ॥
बुद्धिव्यापारनिचयरूपं व्यक्तगुणात्मकम्[1] ।
विषयात्मा तु बुद्धिःस्याद्[2] गुणास्तत्र प्रयोजकाः ॥
गुणत्रयानुसारेण त्रिधा कर्मानुसारतः ।
तया बुद्ध्या समुद्भूतोऽहङ्कारस्त्रिप्रकारकः ॥
सर्वजीवनसंरम्भरूपेण कमलासने ।
[3]विषयास्तस्य भेदाश्च त्रिधा कर्मानुसारतः ॥
सोऽयं तैजसवैकारिभौतिकाख्यस्वरूपतः ।
विकाराश्च स्वभेदाश्च वागादीन्द्रियसंहतौ ॥
[4]वाचिकाद्याः स्युरेतानि तत्र तत्र नियन्तृभिः ।
प्राप्नोति [5]सात्त्विकाद्याभिर[6]वस्थाभिरगात्मजे ॥
[7]संकल्पकारकं चेच्छारूपं तैजसतो मनः ।
जातं वैकार्यवस्थाभिर्ज्ञानकर्मेन्द्रियाणि च ॥
[8]भूततन्मात्रशब्दस्पर्शरूपरसगन्धकाः ।
जाता वागादीन्द्रियाणां व्यापाराः परमेश्वरि ॥
श्रोत्रत्वक्चक्षूरसनाघ्राणान्येतानि पञ्च च ।
बुद्धीन्द्रियाणि व्यापारास्तेषामेकैकशः क्रमात् ॥
शब्दस्पर्शरूपरसगन्धानां ग्रहणं प्रिये ।
कर्मेन्द्रियाणि वाक्पाणिपादपायुरुपस्थकाः ॥
वचनादानगमनविसर्गानन्दकं क्रमात् ।
कर्मेन्द्रियाणां व्यापाराः पञ्चानां परिकीर्तिताः ॥

---

१. गुणात्मकम् । विषयाध्यवसायात्मा बुद्धिः स्याद् गुणतत्त्वतः—क० ।
२. गुणस्तत्र प्रयोजना । पाठान्तरे तु गुणत्रया—क० । ३. विशतस्तत्र भेदेन—ख० ।
४. वाचकार्थाः स्युरीशानि—ख० । ५. सा तु विद्याभि—ख० । ६. स्थाभिर्नगा—ख० ।
७. संकल्पकारणं वर्ष्मं ज्ञानकर्मेन्द्रियाणि च—ख० । ८. भूतादीन्यथ तन्मात्राः शब्दस्पर्शरूपरसाः । गन्धाद्याः पञ्चका जाताः । देहेन्द्रियाणां व्यापाराः प्रोच्यन्ते परमेश्वरि—क० ।

एतानि दश बाह्यानि क्रमेणाभ्यन्तरत्रयम् ।
मनो बुद्धिरहङ्कारो ह्यन्तःकरण[1]संज्ञकम् ॥ इति ।

एतैः स्वावयव[2]भूतैः सप्तविंशतिभिर्नक्षत्रविग्रहा जाता देवी [3]स्वेच्छागृहीतविग्रहा ।

[4]( त्वगादिधातवस्त्वगसृङ्मांसमेदोमज्जाशुक्राणि धातवः, तेषां नाथा अधिष्ठात्र्यो डाकिन्याद्याः, डाकिनी राकिनी लाकिनी काकिनी साकिनी हाकिनी याकिनी च, वर्गा अकचटतपयशाः, तेषामष्टके निविष्टा ब्रह्माण्याद्या योगिन्यः । तदुक्तं स्वच्छन्दसंग्रहे—

सर्ववाङ्मयमूला या वर्गाष्टकसमावृता ।
विश्वोत्पत्तिक्रमान्ताष्टशक्तिप्रसृतभैरवैः ॥
शक्तिभिश्च समायुक्ता अक्षान्ता मातृकावलिः ।

चतुःशत्यामप्युक्तम्—

वर्गानुक्रमयोगेन यस्यां मात्राष्टकं स्थितम् ।

एभिः संयुक्ता षडाधारेषु डाकिन्यादिभिर्मातृकास्थूलरूपिणी त्वगादिव्यापकत्वतो "योगिन्यः प्रकटा ज्ञेयाः" इति वक्ष्यमाणरीत्या त्वगादिधातुषु ब्राह्म्यादिभिः सेविता सर्वसमष्टिरूपत्वाद्योगिनीरूपमास्थाय राजते विश्वविग्रहा । तत्तद् )योगिनीरूपेण विहरति। अत्रैव वक्ष्यति—

अष्टाष्टकं तु कर्तव्यं वित्तशाठ्यविवर्जितम् ।
त्वमेव तासां रूपेण क्रीडसे विश्वमोहिनी ॥ इति[5] ॥ ६१ ॥

(से०) चक्रस्य गणेशात्मकत्वमाह—( एकादशेत्यादि ) । अणिमाद्या दश, ब्राह्मयाद्या अष्टौ देवताः, मुद्रा दशेति भूगृहेऽष्टाविंशतिः । षोडशदलाद्यष्टारान्तेषु षट्सु चक्रेषु प्रत्यक्षरमेकैका देवता । सम्भूय षट्षष्टिः । तत आयुधदेवता अष्टौ, त्रिकोणे तिस्रः, बिन्दौ षडङ्गयुवतयः षडिति सप्तदश मिलिता एकादशाधिकशतं देवता भवन्ति । एतासां पूजास्थानरूपावयवानां विभज्य गणनया चक्रराजस्य गणेशात्मत्वं पीठात्मत्वञ्च । गणेशानां पीठानाञ्च प्रातिस्विकमेकपञ्चाशद्रूपत्वेऽपि सम्मुग्धाकारेण बहुसंख्याबोधकगणपदस्वारस्येन पूर्वनिर्दिष्टाधिकसंख्या व्यापकसंख्यान्तरमात्रपरतयाऽपरिमिताधिकरणन्यायेना-

---

१. संज्ञकः—क० । २. सम्भूतैः—ख० । ३. स्वयं गृही—ख० । ४. धनुश्चिह्नान्तर्गतो ग्रन्थः ख० नास्ति । ५. इति—क० नास्ति ।

पततीत्याशयेन सप्तविंशत्यधिकसंख्यापरत्वमात्रेण गणेशात्मकत्वमुक्तम्। महादेवीशब्दश्चक्रपरः, एतद्ध्वननायैव देवतायाः परं वपुरित्यनुपदमुक्तत्वात्। यत्तु प्राञ्चः—"राशित्वं चान्त्यवर्जितैः" इत्युत्तरग्रन्थे विद्यायां राशित्वं योज्यम्, चकाराच्चक्रेऽपि गणेशादित्वं योज्यमिति व्याख्याय स्वेच्छयैव तद्योजनाप्रकारमुपपादयन्ति, अकथादित्रयमध्यत्रिकोणरेखाभिर्गणेशत्वम्, नवभिश्चक्रैर्ग्रहरूपत्वम्, भूचतुरस्रमन्वस्रबहिर्दशारैर्नक्षत्रत्वम्, अष्टकोणैर्ब्राह्म्यादिभिर्योगिनीत्वम्, पञ्चशक्तिचतुर्वह्निपद्मद्वयभूगृहै राशित्वमिति। तदिदं मूलानारूढत्वादिविगमनाविरहग्रस्तहतत्वादनादृतम्। एवं चक्रराजे गणेशाद्यात्मकत्वमुक्त्वा क्रमप्राप्तदेवतायां तदात्मकत्वमनेनैव ग्रन्थेन श्लेषेणाह—एकादशेति। एता देवता हि त्रिपुरसुन्दरीमयूखरूपाः। अतो महादेव्याः श्रीमातुर्गणेशत्वम्। ईदृशश्लेषेण ग्रन्थलाघवलिप्सयैव हि चक्रराजे गणेशादिक्रमः परित्यक्तः।

अथ देव्याः क्रमप्राप्तं ग्रहात्मत्वमाह—(ससोमेत्यादि)। सङ्केतपद्धतौ—

इच्छा शिरःप्रदेशश्च ज्ञाना च तदधोगता।
क्रिया पदगता ह्यस्याः शान्ता ह्यर्धार्धमध्यगा॥

इत्युक्तत्वादिच्छादिपदैस्तत्तदवयवा गृह्यन्ते। गुणत्रयं सत्त्वरजस्तमांसि तत्सहितैः। सोमादिसहितैर्नेत्रैश्च संभूय ग्रहरूपेत्यर्थः॥ ५७॥

देव्या नक्षत्रात्मकत्वमाह—(ज्ञानेत्यादि)। शिवादिक्षित्यन्तेषु षट्त्रिंशत्तत्त्वेषु नियतेः पराणि पञ्चविंशतिः। तेषु पुंस्त्वबन्धो नाम पुरुषतत्त्वम्, प्रकृतिर्गुणत्रयसाम्यम्। तद्द्विविधं व्यक्तमव्यक्तञ्चेति। तत्राव्यक्तं प्रकृतिपदेनैवोच्यते। व्यक्तं तु गुणपदेन, स्वच्छन्दतन्त्रे तथा निर्णयात्। तद्वचनानि तु प्राचां टीकासु द्रष्टव्यानि। तेन प्रकृतितत्त्वं विभज्य द्विधा गणनीयम्। आन्तरकरणानि अहङ्कारबुद्धिमनांसि त्रीणि, चित्तस्य पार्थक्येन तेष्वगणनात्। ज्ञानकर्मेन्द्रियाणि दश प्रसिद्धानि, तदर्थास्तद्विषयाः शब्दादयो वचनादयश्च। एतेषु वचनं तेजः। गमनं भूः। आदानं वारि। विसर्गो वायुः। आकाश आनन्दः। एवं षड्विंशतिः। सप्तविंश आत्मेत्येवं नक्षत्रशरीरा जातेत्यर्थः। प्राञ्चस्तु चित्तेन सहान्तरकरणानि चतुर्धा गणयन्त आत्मपदं पुंस्त्वबन्धस्य विशेषणत्वेन व्याचक्षते॥ ५८-५९॥

देव्या योगिनीरूपतामाह—(योगिनीत्यादि)। अथशब्दो विकल्पपरः, अव्ययानामनेकार्थत्वात्। अथवेत्यर्थः,

से०

तस्यां हतायां दुष्टायां सिंहे च विनिपातिते ।
शीघ्रमागम्यतां बद्ध्वा गृहीत्वा तामथाम्बिकाम् ॥

इति सप्तशतीकाश्लोके तथा व्याख्यानदर्शनात्, "जोन्लावथाम्बुधेर्विश्लोकः" इति वृत्तरत्नाकरेऽपि प्रयोगाच्च । त्वगसृङ्मांसमेदोस्थिमज्जनाथा डाकिनीराकिणीलाकिनीकाकिनीसाकिनीहाकिन्यः षट् । एतदात्मकत्वाद्वा देवी योगिनीमयी । वर्गाष्टकमकचटतपयशरूपं तन्निविष्टा वशिन्याद्योऽष्टौ तदात्मकतया वा योगिनीरूपेति विभावयेदित्यर्थः । अत एव—"गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम्" इति श्लोके योगिनीपदस्य वशिन्यादिपरत्वेन काश्मीराणां मनोरमाकारस्य च व्याख्यानमुपपद्यते । ये तु शुक्राधिपत्या याकिन्या सह सप्त योगिन्यः, ता एव वर्गाष्टकनिविष्टाः, मूलाधारादिसहस्रारान्तसप्तचक्रेषु तासामेव प्रतिदलमेकैकाकाक्षरसाहित्येनावस्थानदर्शनादिति व्याचक्षते, तेषामुत्तरत्र विद्यायां योगिनीरूपत्ववर्णनावसरे पूर्वं चक्रे तदुक्त्यवसरेऽपि सप्तात्मकताया अकथनात्तद्विरोधः, याकिन्या डाकिन्यादिषट्समष्टिरूपत्वेन पृथग्वर्णनायोगश्च, डाकिन्यादीनां यथायथं मातृकायोगेऽपि वर्गात्मकताभावाद्वर्गाष्टकपदस्वारस्यविरोधश्च, उक्तकाश्मीरादिप्राचीनव्याख्याविरोधश्च, अपिशब्दचशब्दाभ्यां परस्परविलक्षणयोः स्वरमतः समुच्चयबोधनेन तद्भङ्गश्च । न चैवं भवदुक्तौ विकल्पो विरुध्येतेति वाच्यम्; देव्या अर्थमयशब्दमयशरीरद्वयसमुच्चयशीलत्वेनाप्यन्यतरविभागमात्रेणैवोपास्त्युपकारस्य कल्पयितुं शक्यत्वात् ॥ ६०-६१ ॥

[1]प्राणापानौ समानश्चोदानव्यानौ तथा पुनः ।
नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ॥ ६२ ॥
जीवात्मा परमात्मा [2]चेत्येते राशिस्वरूपिणी ।

(दी०) प्राणादिधनञ्जयान्ता दश वायवः, जीवात्मा उक्तलक्षणः पशुः, परमात्मा "एष त आत्माऽन्तर्याम्यमृतः" इत्युपनिषदुक्तसर्वभूतान्तर्यामी । एतैर्द्वादशभी [3]राशिस्वरूपिणी ॥ ६२ ॥

---

१. प्राणोऽपानश्च समा—क० । २. च एते—क० । ३. राशिरूपिणी—ख० ।

(से०) देव्यां राशिस्वरूपत्वमाह—( प्राणापानावित्यादि )। प्राणादिपञ्चकं नागादिपञ्चकं च शरीराधिष्ठिता वायुविशेषा वैद्यकतन्त्रे प्रसिद्धाः। जीवात्मा पशुः सकलादिरूपत्वेनोक्तः। परमात्मा तु निखिलान्तर्यामित्वेनान्तर्यामिब्राह्मणे प्रतिपादितः। एवं द्वादशात्मकत्वाद्राशिमयी ॥ ६२ ॥

[1]अकथादित्रि[2]पङ्क्त्यात्मा तार्तीयादिक्रमेण सा ॥ ६३ ॥
[3]गणेशोऽभून्महाविद्या परावागादिवाङ्मयी।

(दी०) गणेशेत्यादिपदं विद्यापदेऽपि योजयति—अकथादीति। अकारहकारसामरस्यरूपा परा वागादिर्यासां ताः पश्यन्तीमध्यमावैखर्यो या[4]श्चतस्त्रः परावागादिवाचः। तदुक्तं सङ्केतपद्धत्याम्—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः।
हकारोऽन्त्यकलारूपो विमर्शाख्यः प्रकीर्तितः॥
अनयोः सामरस्यं यत्परस्मिन् महसि स्फुटम्।
वामाद्यैः [5]पञ्चभिर्योऽसावीश्वरः परिकीर्तितः॥
आदावस्य शिरो रौद्री वक्त्रं वामा प्रकीर्तिता।
अम्बिका बाहुरित्युक्ता ज्येष्ठा चैव [6]नखाग्रजा॥
[7]एता ह्यार्धकलारूपा रूपपञ्चतया स्थिताः।
अवर्णः सर्ववर्णानां न पृथग् भासते बहिः॥
इच्छा शिरःप्रदेशस्था [8]ज्ञानं च तदधोगतम्।
[9]क्रिया पादगता ह्यस्य शान्ता हृन्मध्यगा भवेत्॥
अष्टधानाहतः प्रोक्तः शून्यादि[10]प्रविभागतः।
शून्यः स्पर्शस्तथा नादो ध्वनिबिन्दू तथैव च॥
शक्तिबीजाक्षरं चेति ह्यष्टधानाहतः स्मृतः।
चत्वारिंशत्सप्तसंख्यानाहतः[11] परिकीर्तितः॥

---

१. अकारादि–क०। २. पङ्क्त्यात्मता–ख०। ३. सा गणेशो महा–ख०। ४. चश्चतस्त्रः–क०। ५. पिण्डितो योऽसाववर्णः–ख०। ६. नगाग्रगा–ख०। ७. अ इच्छार्धकलारूपा पञ्चधा यो व्यवस्थितः–ख०। ८. क्रिया च तदधोगेता–ख०। ९. ज्ञाना पादगता ह्यस्य शान्ता हार्धार्धमध्यगा–ख०। १०. प्रतिभेदतः–ख०। ११. संख्याहतः स परिकीर्तितः–ख०।

दी०

क्षकारः कथितो योऽसौ संयोगाद् द्विविधः स्मृतः ।
सप्तसृष्ट्याख्यमेवं हि मातृकापीठमुत्तमम् ॥
[1]अनाहतत्रिभिर्भेदैर्हतोत्तीर्णैः समन्ततः ।
स्थितो योऽसौ महा[2]पीठो मातृकाख्यो जयत्यसौ ॥

एवमेतत्प[3]रादिचतुर्विधतया वाङ्मयी अस्वरविमर्शरूपौ म्वांशौ [4]"हित्वा चतुष्कला सैव" इत्यादिसौभाग्यसुभगोदयप्रतिपादितरीत्या परा-पश्यन्ती-मध्यमा-वैखरीमयत्वाद्विद्यायाम् अकथादित्रिपङ्क्त्या-[5]त्मकत्वं तार्तीयादि[6]क्रमेण । अकथादीति आदिशब्दः अकारककार-थकारैस्त्रिभिः सम्बध्यते । आदयो विसर्गान्ताः स्वराः षोडश, कादयस्तान्ताः षोडश, थादयः सान्ताः षोडश । एवमकथादि[7]वर्णा पङ्क्ति-त्रयात्मतातार्तीयादिकामराजादि[8]वाग्भवादिक्रमेणाकारादिपङ्क्तिमयं तार्तीयं ककारादिपङ्क्तिमयं कामराजं थकारादिपङ्क्तिमयं वाग्भवं क्रमेण । पङ्क्तिशब्दो गणपरः, चतुर्विधमातृकामयत्वात्, अकथादि-वैखर्यादि[9]वर्गगणत्रयबीज[10]त्रयावयवत्वाच्च । सेयं महाविद्या गणेशोऽभूदित्यर्थः ॥ ६३ ॥

(से०) अथ क्रमप्राप्तायां विद्यायां गणेशादिरूपतामाह—( अकथेत्यादि ) । अकारादयः ककारादयस्थकारादयश्च षोडश षोडश वर्णा हकारलकार-क्षकाराणामुपलक्षणम् । तेन तृतीयकूटमकारादिस्वररूपं हकाररूपञ्च । द्वितीय-कूटं तु ककारादिरूपं लकाररूपञ्च । प्रथमकूटं तु थकारादिरूपं क्षकारादिरूपं च । एवमेकपञ्चाशत्संख्याकत्वाद्विद्याया गणेशत्वम् । पङ्क्तिशब्दो दशसंख्यायां प्रसिद्धोऽपि प्रकृते षोडशपरः, पकार एकस्तकारः षडिति परिभाषाया अपि प्रसिद्धत्वात् । तयोरङ्कयोः क्रमेणैव लेखे षोडश भवन्ति । पङ्क्तिशब्दो गणपर इति तु प्राञ्चः । त्रिपङ्क्त्यात्मेत्यत्र मन इति ङीब्निषेधः । वैकल्पिको डाप् । परा वागादीत्यादिना पश्यन्तीमध्यमावैखर्यो गृह्यन्ते । ईदृशवाक्चतुष्टय-

---

१. अनाहतहतैर्मन्त्रैस्त्रिभिर्भेदैः समन्ततः–ख० । २. पीठमकाराख्यो–ख० । ३. पराचतु–ख० । ४. भित्वा चतुष्कला इत्यादि–ख० । ५. पङ्क्त्यात्मतार्ती–ख० । ६. क्रमेण च अक–ख० । ७. वर्णात्मकतार्ती–ख० । ८. आदि–ख० नास्ति । ९. वर्ग–ख० नास्ति । १०. त्रयत्वाच्च–ख० ।

से० मयत्वादपि गणेशत्वमिति त्वपरिमिताभिकरणविरोधाद्युक्तम् । अतः स्वरूपकथनमात्रपरमिदम् । तद्रूपत्वं च त्रिकोणवासनायामुक्तमेव ॥ ६३ ॥

**बीजबिन्दुध्वनीनां च त्रिकूटेषु ग्रहात्मिका ॥ ६४ ॥**
**हृल्लेखात्रयसंभूतैस्तिथिसंख्यैस्तथाक्षरैः ।**
**अन्यैर्द्वादशभिर्वर्णैरेषा नक्षत्ररूपिणी ॥ ६५ ॥**

(दी०) बीजेति । कूटशब्दोऽत्राक्षर[1]पिण्डपरः । यथोक्तमभियुक्तैः—"कूटेषु त्रिषु [2]कार्यवशादीकारश्रङ्गक्रमात्" इति । सौभाग्यविद्याया[3] अक्षरपिण्डेषु, बीजबिन्दुध्वनीनां च बीजम् [4]ईकारान्तम्, बिन्दुर् उक्तलक्षणः, ध्वनिर् नादः, बीजबिन्दुध्वनीनां चेति तृतीयार्थे छान्दसः प्रयोगः । कूटत्रयबीजानि त्रीणि, बिन्दवस्त्रयः, [5]नादास्त्रय इति नवभिर्ग्रहात्मिका [6]विद्येत्यर्थः ॥ ६४ ॥

बीजत्रय[7]त्रयशिखर[8]वर्तिहृल्लेखात्रयसंभूतैस्तथाक्षरैर्हकाररेफईकारबिन्दुनादात्मकैस्तिथिसंख्यकैः पञ्चदशभिरन्यैर्हृल्लेखात्रयवर्जितैर्द्वादशवर्णैः कूटत्रयावयवैः पञ्चदशभिर्द्वादशभिश्च [9]सप्तविंशतिवर्णैः सर्वैर्नक्षत्ररूपिणीत्यर्थः ॥ ६५ ॥

(से०) विद्याया ग्रहरूपत्वमाह—( बीजेत्यादि ) । बीजमीकारान्तमेकं बिन्दुरेको ध्वनिरेक इति त्रयाणां कूटमेकम् । एवं त्रिषु कूटेषु नवत्वमापन्ना विद्या ग्रहात्मिका भवति । ध्वनीनामिति सम्बन्धसामान्ये षष्ठी । तृतीयार्थे छान्दसीत्युक्तिरेव तु च्छान्दसी ॥ ६४ ॥

विद्यायां नक्षत्ररूपतामाह—( हृदित्यादि ) । हकाररेफेकारबिन्दुनादाः प्रतिहृल्लेखं पञ्चेति तिथिसंख्यैः पञ्चदशसंख्यैः । अन्यैः सव्यञ्जनरूपैर्वर्णैर्द्वादशभिर्मिलित्वा सप्तविंशत्या नक्षत्ररूपेपा विद्या ॥ ६५ ॥

---

१. पिण्ड–ख० नास्ति । २. कार्या गौरवक्रयादिश्रृङ्गारक्रमात्–ख० । ३. विद्याक्षरपि–ख० । ४. ईकारान्ताक्षरजातं–ख० । ५. नादास्त्रयः–क० नास्ति । ६. विद्या–क० नास्ति । ७. त्रय–ख० नास्ति । ८. वर्ती ह्रींकारत्रयं तत्संभूतैस्था–ख० । ९. च सप्तविंशति–ख० नास्ति ।

विद्यान्तभूतशक्त्याद्यैः शाक्तैः [1]षड्भिस्तथाक्षरैः ।
[2]योगिनीत्वं च विद्याया राशित्वं चान्त्यवर्जितैः ॥ ६६ ॥

(दी०) [3]विद्यायाः पञ्चदशाक्षर्या अन्तर्भूताः शक्त्यो हृल्लेखास्तिस्रः, तदाद्याश्च [4]लकारास्त्रयः, [5]शाक्तैरेतैः षड्भिरक्षरैर्विद्याया योगिनीत्वम् । योगिन्यश्च डाकिन्याद्याः षट् ।

अस्या [6]विद्यायाः पञ्चदशाक्षर्या अन्त्या हृल्लेखास्तिस्रः, तद्वर्जितैर्द्वादशभिर्वर्णै राशित्वं भवेदित्यर्थः । [7](राशयो मेषाद्या द्वादश ॥ ६६ ॥

(से०) योगिनीरूपतां राशिरूपताञ्चाह—( विद्येत्यादि )। विद्यान्तभूता शक्तिहृल्लेखान्त्य ईकारः । तस्मादाद्यं रेफान्तं कूटमेकम् । शाक्त ईकार एक इति प्रतिकूटं द्वौ द्वाविति षड्भिरक्षरैर्योगिनीत्वम् । अथवा शक्तेर्हृल्लेखाया आद्या लकारास्त्रयः शाक्ताः सकारास्त्रय इति षट् । प्रथमपक्षे सम्पूर्णाया विद्याया योगिनीत्वमस्मिन् पक्षे त्वेकदेशस्येति विशेषसत्त्वेऽपि चक्रराजसम्बन्धियोगिनीनां पूर्वोक्तानां लकारसकारत्रयाभ्यामेवोत्पत्तेः कथनेन कार्यकारणैक्यस्य सम्भवतस्त्यागायोगादेषैव व्याख्या युक्ता । तेन हृल्लेखात्रयं लकारत्रयं चेति षट्कं प्राचोक्तमुपेक्ष्यम्, शाक्तपदस्य सकारपरत्वेन पूर्वं भवद्भिरेव व्याख्यातत्वेनेह तस्य हृल्लेखापरत्वेन व्याख्यायाः प्रत्यभिज्ञाविरोधेनायोगाच्च । अन्त्यानि लज्जाबीजानि त्रीणि तैर्वर्जितैः पूर्वाक्षरे मेलनेन गणितैरक्षरैर्द्वादशभी राशित्वम् । हृल्लेखानां पार्थक्येनैव हि पञ्चदशीत्वम् । ततश्च पार्थक्यविशिष्टहृल्लेखानामभाव एवेह वर्जनपदार्थः । स च विशेषणाभावप्रयुक्त एव । विशेष्याभावप्रयुक्त एवेति तु प्राञ्चः । तत्पक्षे विद्यैकदेशस्यैव राशित्वं न पूर्णाया इति ध्येयम् ॥६६॥

---

१. षड्भिरथा—ख० । २. योगिनि त्वं—ख० । ३. विद्यायाः—क० नास्ति । ४. लकारास्त्रयः—क० । ५. शाक्तैः—ख० नास्ति । ६. विद्याया इत्यर्थः । विद्यायाः—ख० । ७. धनुश्चिह्नान्तर्गतं—ख० नास्ति ।

एवं विश्वप्रकारा च चक्ररूपा महेश्वरी ।
देव्या [1]देहे यथा प्रोक्तो गुरु[2]देहे तथैव [3]हि ॥ ६७ ॥
तत्प्रसादाच्च शिष्योऽपि तद्रूपः [4]संप्रजायते ।
इत्येवं कौलिकार्थस्तु कथितो वीरवन्दिते ॥ ६८ ॥

(दी०) उक्तमर्थं चक्रे ऽतिदिशति—एवमिति । एवमुक्तरीत्या योजितगणेशादिविश्वप्रकारा महेश्वरी त्रिपुरसुन्दरी चक्ररूपा) [5]देवता । विद्यापक्षवच्चक्रपक्षेऽपि गणेशत्वादिकं योज्यमित्यर्थः । योजनाप्रकारस्तु अकथादिमय[6]त्रिरेखामध्यत्रिकोणरेखया गणेशत्वम्, नव[7]कोणैर्ग्रहरूपत्वम्, वृत्तत्रयचतुर्दशकोणबहिर्द[8]शारकोणैश्च नक्षत्ररूपत्वम्, अष्टकोणैर्ब्राह्म्यादियोगिनीसंख्यैर्योगिनीत्वम्, पञ्चशक्तिचतुर्वह्निपद्मद्वयभूगृहै राशित्वम् । पुनश्च पूर्वोक्तलक्षणमेवार्थं गुरुशिष्ययोरप्यतिदिशति—देव्या इति । देव्याः त्रिपुरसुन्दर्याः, [9]देहे स्वेच्छा[10]गृहीतलीलाविग्रहे । यथा प्रोक्ता[11]—

"एकादशाधिकशतदेवतात्मतया पुनः[12] ।
गणेशत्वं महादेव्याः" इत्यादिना ।
गृणते तत्त्वमात्मीयमात्मीकृतजगत्त्रयम् ।
उपायोपेयरूपाय शिवाय गुरवे नमः ॥

इत्यभियुक्तवचनोक्तरीत्या [13]देवतादेहस्यैव गुरुत्वाद् गुरुदे[14]हेऽपि यथा देव्या देहे गणेशत्वादिकं योजितं [15]तथैव [16]तद्रूपस्य गुरोरपि देहे तद्योज्यमित्यर्थः ॥ ६७ ॥

---

१. देहो–ख०से० । २. देहस्त–ख०से० । ३. च–ख०से० । ४. संप्रकाशते–ख०से० । ५. देवताविद्यापक्षे । देवताचक्रपक्षे तु गणे–ख० । ६. त्रिरेखा–ख० नास्ति । ७. नवचक्रैर्ग्र–ख० । ८. शाररूपेण नक्षत्र–ख० । ९. देहे–ख० नास्ति । १०. गृहीतविग्रहो–ख० । ११. प्रोक्ता–ख० नास्ति । १२. 'पुनः' इत्यस्याग्रे 'इति गणेश' इतिशब्दः प्रसङ्गपरिसमाप्तिपरः, एवंशब्दः पूर्वोक्तप्रकारानुवादनपरः" इति कपुस्तके यद्यप्यधिकमुपलभ्यते, तथापि तस्य ग्रन्थस्य ६७ श्लोकोत्तरार्धव्याख्यानभूततया तत्र तस्योपलब्धेश्च तस्यात्र लेखनं लेखकप्रमादमूलकमिति भासते । १३. देवतारूपस्यैव–ख० । १४. देहोऽपि देव्या देहवद् गणेश–ख० । १५. तथैव–ख० नास्ति । १६. तद्रूपो गुरुदेहोऽपि तथेष्ट इत्यर्थः–ख० ।

तत्प्रसादात्— दी०

स्वप्रकाशवपुषा गुरुः शिवो यः प्रसीदति पदार्थमस्तके ।
तत्प्रसादमिह तत्त्वशोधनं प्राप्य मोदमुपयाति भावुकः ।।

इत्य[1]स्मद्गुरूक्तरीत्या प्राप्तगुरुप्रसादः शिष्यस्तद्रूपो देवतारूप एव संप्रका[2]शते इत्यर्थः। अतो यथा देव्या [3]गुरोश्च देहे गणेशत्वादिकं [4]योजितं तथैव शिष्यदेहेऽपि योजनीयमित्यर्थः। कौलिकार्थमुपसंहरति—इत्येवमिति। इतिशब्दः प्रसङ्गपरिसमाप्तिपरः। एवंशब्दः पूर्वोक्त[5]प्रकारानुवादनपरः। शेषं स्पष्टम् ।। ६८ ।।

(से०) एवं चक्रदेवताविद्यानामेकधर्मावच्छिन्नत्वेनाभेदमुपसंहरन् गुरुशिष्ययोर्देव्युक्तप्रकारमतिदिश्य कौलिकार्थमुपसंहरति—( एवमित्यादि )। विश्वप्रथाकारा विद्या चक्ररूपा व्यक्तिर्महेश्वरी देवता चेत्येतत्त्रयमेवमुक्तरीत्या पञ्चात्मकत्वादभिन्नम्। इदमर्धं क्वचित्पुस्तके न दृश्यते। स्पष्टमन्यत् ।। ६७–६८ ।।

**तथा सर्वरहस्यार्थं कथयामि तवानघे ।**
**मूलाधारे तडिद्रूपे वाग्भवाकारतां गते ।। ६९ ।।**
**अष्टात्रिंशत्कलायुक्तपञ्चाशद्वर्णविग्रहा ।**
**[6]विद्या कुण्डलिनीरूपा मण्डलत्रयभेदिनी ।। ७० ।।**
**तडित्कोटिनिभप्रख्या बिसतन्तुनिभाकृतिः ।**
**व्योमेन्दुमण्डलासक्ता सुधास्रोतःस्वरूपिणी ।। ७१ ।।**
**सदा [7]व्याप्तजगत्[8]कृत्स्ना सदानन्दस्वरूपिणी ।**
**एषा स्वात्मेति बुद्धिस्तु रहस्यार्थो महेश्वरि ।। ७२ ।।**

(दी०) [9]अत्र क्रमप्राप्त[10]सर्वरहस्यार्थं[11] वक्तुं प्रतिजानीते—तथेति। तथाशब्दः पूर्वोक्तार्थप्रकारपरामर्शार्थः। सर्वरहस्यार्थं पूर्वोक्तसर्वार्थेभ्यो रहस्यं परप्राप्तिरूपत्वात्।

---

१. स्मदुक्त–ख० । २. शते इति । यथा–ख० । ३. गुरोश्च–ख० नास्ति । ४. योज्यं–ख० । ५. प्रकार–ख० नास्ति । ६. कुलकुण्ड–ख० । ७. व्याप्तं–ख० से० । ८. कृत्स्नं–ख० से० । ९. अत्र–ख० नास्ति । १०. सर्व–ख० नास्ति । ११. र्थमाह तथा–ख० ।

दी० सर्वरहस्यार्थमेवाह—मूलाधार इति। मूलाधारे पूर्वोक्तलक्षणे तडिद्रूपे [1]विद्युद्वर्णे, वाग्भवाकारतां गते, वाचः परापश्यन्तीमध्यमा-वैखर्यः, [2]ताभिर्भवं वाग्भवं त्रिकोणम्। तदुक्तमत्रैव–"आत्मनः स्फुरणम्" इत्यादि, "क्रियाशक्तिस्तु रौद्रीयं वैखरी विश्वविग्रहा" इत्यन्तेन। तदा-कारतां गते तद्रूपेण परिणते ।। ६९ ।।

अष्टत्रिंशत्कला[3]युक्ता वह्नेर्धूम्रा[4]र्चिराद्या दश, सूर्यस्य तपिन्याद्या द्वादश, सोमस्यामृताद्याः षोडश, एवमेता अष्टत्रिंशत्कलाः, [5]ताभिर्युक्ताः पञ्चाशद्वर्णाः, सोमकलाभिः षोडशभिर्युक्ता अकारादयः षोडश स्वराः, एवमेते पञ्चाशद्वर्णा विग्रहो यस्याः सा तथा। [6]विद्या सौभाग्यविद्या।

स्वरव्यञ्जनभेदेन [7](सप्तत्रिंशत्प्रभेदिनी ।
सप्तत्रिंशत्प्रभेदेन) षट्त्रिंशत्तत्त्वरूपिणी ।।

इति पूर्वोक्तरीत्या षट्त्रिंशत्तत्त्वावयवपञ्चाशदक्षरमयवैखर्यात्मिका [8]कुण्डलिनीरूपा।

तस्य मध्ये वह्नि[9]शिखा अणीयोर्ध्वा व्यवस्थिता।
[10]नीलतोयदमध्यस्थविद्युल्लेखेव भास्वरा ।।
नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा।

[11]इति श्रुत्युक्तरीत्या भुजङ्गभोगसदृशी ज्योतिर्लता मण्डलत्रयभेदिनी मण्डल[12]त्रयं मूलहृदयभ्रूमध्यस्थितानां वह्निसूर्यसोममण्डलानां त्रयं तद्भेदिनी, मण्डलत्रयं भित्त्वा तन्मध्यमार्गेण अकुलं प्रवेष्टुमुद्यतेत्यर्थः। तडित्कोटिनिभप्रख्या [13]तडित्कोटीनां निभा सदृशा प्रख्या कान्तिर्यस्याः सा, बिसतन्तुनिभाकृतिः बिसतन्तुवत्सूक्ष्मरूपा, व्योमेन्दुमण्डलासक्ता,

---

१. विद्युत्सवर्णवर्णे–ख०। २. ताभिर्वाग्भिर्भवन्तीति वाग्भवं–ख०। ३. युक्ता–ख० नास्ति। ४. र्चिरा–ख० नास्ति। ५. ताभियुक्तैः पञ्चाशद्वर्णैर् इकारादि-क्षकारान्तैर्वह्निकलाभिर्दशभिर्युक्ता यादयो दशवर्णाः सूर्यकलाद्वादशभिर्युक्ताः क्रमोक्रमकभाद्याश्चतुर्विंशतिवर्णाः सोमकला–ख०। ६. विद्या–ख० नास्ति। ७. धनुश्चिह्नान्तर्गतं–ख० नास्ति। ८. कुलकुण्ड–ख०। ९. शिखात्मना योर्ध्वं व्यव–ख०। १०. निलीना पदमध्य–ख०, इदमर्धं च 'नीवार' इत्यर्धस्याग्रे–ख०। ११. इत्यस्मदुक्त–ख०। १२. मण्डलत्रयमाधारत्रयं–ख०। १३. तडितां कोटीनां प्रख्या भासा तस्या निभा सदृशी, बिस–ख०।

[1]ललाटोर्ध्वं समारभ्य कपालोर्ध्वावसानकम् ।
त्र्यङ्गुलोर्ध्वे शिरोदेशे परं व्योम प्रकीर्तितम् ॥ दी०

इति स्वच्छन्दसंग्रहोक्तरीत्या परे व्योम्नि यदिन्दुमण्डलं चिच्चन्द्रबिम्बं तत्रासक्ता सुधास्रोतःस्वरूपिणी तद्विगलितामृतप्रवाहरूपा सदा व्याप्त-जगत्कृत्स्ना सदा कालत्रयेऽपि षट्त्रिंशत्तत्त्वात्मकं जगत् कृत्स्नं व्याप्तं ययेति शेषः । सदानन्दस्वरूपिणी [2]सदानन्दः परमशिवः स्वरूपं यस्याः सा सदानन्दस्वरूपिणी । एषा [3]चिन्मयी कुण्डलिनी[4]शक्तिः स्वात्मेति बुद्धिः, तदात्मतया समावेशो रहस्यार्थ [5]इत्यर्थः । तदुक्तं चतुःशतिशास्त्रे—

[6]पीठाकुलिते शृङ्गारपीठे कुण्डलरूपिणी ।
शिवार्कमण्डलं भित्त्वा द्रावयन्तीन्दुमण्डलम् ॥
तदद्भुतामृतस्यन्दपरमानन्दनन्दिता ।
कुलयोषित् कुलं त्यक्त्वा [7]परं पुरुषमेति सा ॥
निर्लक्षणं निर्गुणञ्च कुलरूपविवर्जितम् ।
ततः स्वच्छन्दरूपा तु तद्विभ्राम्य जगत्प्रभुम् ॥
[8]तेन मार्गेण संतुष्टा पुनरेकाकिनी सती ।
रमते सेयमव्यक्ता त्रिपुरा व्यक्तिमागता ॥ [9]इति ॥ ७०-७२ ॥

(से०) क्रमप्राप्तं सर्वरहस्यार्थमाह चतुर्भिः—( तथेत्यादि ) । मूलाधारपद्मे विद्युन्निभे वाग्भव एकारस्तस्याकारस्त्रिकोणाकृतिर्यस्य सः । तस्य भावस्तत्ता । तां गते प्राप्ते, त्रिकोण इति यावत् । "एकारो वाग्भवः शक्तिर्झिण्टीशोष्ठौ त्रिकोणकः" इति कोशः । एवं द्रविडप्राणायामन्यायेन निर्देशस्तु तस्य वाग्भव-कूटस्थैकारवाच्यत्वद्योतनार्थः । तत्र स्थिता कुण्डलिनीरूपा तदभिन्ना विद्या श्रीविद्यैव । सा च मन्त्रे चतुर्थस्वरेण निर्दिष्टा । ईकाराधिकारे "वैष्णवी बैन्दवी जिह्वा" इति कोशाज्जिह्वापदस्य कुण्डलिनीपरत्वात् । अथवा ईकारस्त्रिकोणपर एकारः कुण्डलिनीपरः । वाग्भवाकारतागता ई इति च्छेदः । एकाराधिकारे—

१. द्वादशीतं ललाटोर्ध्वं कपालो–ख० । २. स्वसंविदानन्दस्य भावः सदा-नन्दः–क० । ३. चिन्मयी–ख०नास्ति । ४. शक्तिरिति बुद्धिः स्वात्मे–ख० । ५. इत्यर्थः–ख०, नास्ति । ६. पीठाकुलितरूपिणी–ख० । ७. परं गृह्यं जगत्प-तिम्–ख०, तत्रैव पाठान्तरतया च 'परं पुरुषमेति सा' इति । ८. इदमर्धं 'निर्लक्षणं निर्गुणं च' इत्यर्धात् पूर्वं वर्तते–ख० । ९. इति–क० नास्ति ।

से० "योषिदाधारशक्तिश्च ज्योत्स्ना कुण्डलिनी भगः" इति कोशः। वाग्भिः परापश्यन्त्यादिभिर्भवतीति वाग्भवं त्रिकोणम्, "आत्मनः स्फुरणं पश्येत्" इत्यत्र तथोक्तेरिति तु प्राञ्चः। कुण्डलिनीं विशिनष्टि—अष्टेति। वह्नेर्दश कला यकारादिदशवर्णवत्यः। सूर्यस्य द्वादश कलाः ककारादिचतुर्विंशतिवर्णवत्यः। सोमस्य षोडश कलाः षोडशस्वरवत्यः। एवमष्टात्रिंशत्कलाः। [तद्युक्ताः] पञ्चाशद्वर्णा विग्रहो यस्याः सा। सोऽयमर्थो हृल्लेखयोक्तः। हकारस्यैकाक्षरनिघण्टुरीत्या चन्द्रमात्रे शक्तस्यापि लक्षणया चन्द्रसूर्योभयबोधकत्वम्, व्योमचरत्वरूपशक्यसम्बन्धात्। लकार एव वा लोचनवाचकोऽपि सूर्यपरः। रेफोऽग्निपरः। ईकारेण तेषां कला लक्ष्यन्ते, "कला तुरीया भेरुण्डा" इति कोशात्। लकारस्त्रित्वसंख्याया हकारोऽष्टत्वसंख्याया बोधकः। तयोः क्रमेण विन्यासेऽष्टात्रिंशद्भवन्तीत्यपि वा सुवचम्। एवं स्थिते परिशेषप्रमाणेन ककारो मूलाधारवाचकोऽवसेयः। लोपामुद्राविद्यापक्षे ककारेण सूर्याग्नी सकारेण चन्द्र उच्यते। तेषां कला यस्यां सा हृल्लेखा॰कुण्डलिनीत्यर्थः। द्वितीयकूटं व्याचष्टे—मण्डलेत्यादिना। मूलाधारे वह्निमण्डलमनाहते सूर्यमण्डलमाज्ञाचक्रे चन्द्रमण्डलं चेति त्रयं निर्भिद्य व्योम्नि चिद्गगने द्वादशान्तोर्ध्वभागे यदिन्दुमण्डलं तस्मिन्नासक्ता। तदासङ्गेन जातं यत्सुधास्रोतोऽमृतलहरी तत्स्वरूपा। हः सूर्यः सश्चन्द्रः कोऽग्निस्तान् हन्ति भिनत्तीति हसकह(ह्री)। सा च सा लहरी चेति तथा, दुर्वासोविद्यायां हकाररेफयोर्विभज्यापि पाठात्। तडित्कोटीति तु स्वरूपकथनमात्रम्। इहापेक्षितानुशासनानां कतिपये भासमाना विरोधा वरिवस्यारहस्यव्याख्यानेऽस्माभिः परिहृताः।

तथा—

धातोर्बह्वर्थत्वाद् बहुलग्रहणात् पृषोदरादित्वात्।
आकृतिगणपाठेन स्वेच्छानुगुणादुणादिकल्पनतः॥
छन्दसि सर्वविधीनां वैकल्पिकतावशादमुष्य मनोः।
सिद्धैः कथितेऽर्थेऽस्मिन् वैयाकरणानुशासनानुमतिः॥ इति।

तृतीयकूटं व्याचष्टे—सदेति। ययेति शेषः। यया सदा सद्रूपेण कृत्स्नं जगद्व्याप्तं सैषा कुण्डलिनी स्वात्मा स्वाभिन्नेति बुद्धिः शाब्दबोधविषयो रहस्यार्थ इत्युच्यते। "व्योम्ना प्रकाशमानत्वम्" इत्यादिस्वतन्त्रतन्त्रोक्तरीत्या तृतीयहृल्लेखया जगद्व्याप्तिरुक्ता। सकलपदेन चोपासक उच्यते। सामानाधिकरण्येन चाभेदो बोध्यत इत्यर्थः॥ ६९–७२॥

महातत्त्वार्थं इति यत्तच्च देवि वदामि ते ।
निष्कले परमे सूक्ष्मे निर्लक्ष्ये भाववर्जिते ॥ ७३ ॥
व्योमातीते परे तत्त्वे प्रकाशानन्दविग्रहे ।
विश्वोत्तीर्णे विश्वमये तत्त्वे स्वात्मनियोजनम् ॥ ७४ ॥ :

(दी०) अथ क्रमप्राप्तं महातत्त्वार्थं वक्तुं प्रतिजानीते—महातत्त्वेति । स्पष्टम् ।

महातत्त्वार्थमेवाह–निष्कल इति । निष्कले निरवयवे, कला अवयवाः, परमे महद्भ्योऽपि महीयसि, सूक्ष्मे अणोरप्यणीयसि, निर्लक्ष्ये करणेन्द्रियाद्यगोचरे, [1]भाववर्जिते "भावना[2]गममतीन्द्रियं च यल्लक्ष्यमुक्तम्" इति चिद्गगनचन्द्रिकोक्तरीत्या भावनागम्ये, व्योमातीते व्योम पूर्वोक्तलक्षणं तदतीते, परे तत्त्वे सकलतत्त्वा[3]तीते परमार्थे, प्रकाशानन्दविग्रहे प्रकाशो ज्योतिषां ज्योतिरनुत्तरा, आनन्दः सकलवैषयिकानन्दसमष्टिभूतपरमानन्दता, प्रकाशानन्दो विग्रहो यस्य तस्मिन् विश्वोत्तीर्णे विमुक्तसकलजगदुत्तीर्णे, विश्वमये तथापि—

देशकालपदार्थात्मा यद्यद्वस्तु यथा यथा ।
तत्तद्रूपेण या भाति तां श्रयेत् संविदीं [4]कलाम् ॥

इति प्रामाणिकोक्तवचनरीत्या तत्तदात्मनाऽवभासमाने तत्त्वे "तत्त्वमसि" इत्युपनिष[5]द्वाक्यपरमार्थ[6](परविद्याप्रदायकपरमशिवरूपे निजगुरुप्रबोधितनिर्मलस्वभावस्वात्मनियोजनं तदेकतानुप्रवेशो महातत्त्वार्थ) इत्यर्थः ॥ ३-७४ ॥

(से०) क्रमप्राप्तं महातत्त्वार्थमुपदिशति–(महेत्यादि) । निष्कले निरवयवेऽखण्ड इति यावत् । परमे महतो महीयसि । सूक्ष्मेऽणोरणीयसि । निर्लक्ष्य इन्द्रियागोचरे । भाववर्तिते भावनैकगोचरे । व्योमातीत आकाशस्यापि जनके । परे तत्त्वे पारमार्थिकसद्रूपे । प्रकाशानन्दविग्रहे चिदानन्दस्वरूपे । विश्वोत्तीर्णे षट्त्रिंश-

---

१. भाववर्जिते–ख० नास्ति । २. गम्ये अती–क० । ३. तीते सकलतत्त्वार्थपर–ख० । ४. श्रयेत्संविदं कलाम्–ख० । ५. षद्वाक्यार्थः परमार्थ–ख० । ६. धनुश्चिह्नान्तर्गतं–ख० नास्ति ।

से० तत्त्वातीते । विश्वमये तत्त्वे षट्त्रिंशत्तत्त्वाभिन्ने । स्वस्य जीवात्मन आत्मनो मनसश्च नियोजनं जीवशिवयोरभेदेन मनसा विभावनम् । "भूयः स्यात्प्रोक्तमिलनम्" इति शिवसूत्रोक्तरीत्या जीवशिवयोरैक्यसिद्धिरिति यावत् । ईदृशार्थस्याखण्डत्वेन तज्ज्ञानस्यापि निर्विकल्पकीयविलक्षणविषयताशालित्वेन तज्जनकस्य मन्त्रस्यापि तत्त्वमस्यादिवन्महावाक्यत्वेऽपि तस्मात्पदपदार्थविभागेन जायमानस्य ज्ञानस्य सखण्डत्वावश्यम्भावेऽप्युपक्रमादिप्रमाणषट्कनिर्णीततात्पर्यानुसारेण सर्वपदलक्षणया पाश्चात्त्याखण्डार्थबोधकल्पनमपेक्ष्य परशिवोक्त्या तात्पर्यग्रहेण तादृशेऽखण्डेऽर्थेऽखण्डस्य मन्त्रस्यैव शक्तिरिति कल्पयितुं युक्तत्वादस्य मन्त्रार्थत्वमुपपद्यते । इदञ्च भावार्थस्याक्षरार्थत्वकथनेनेतरेषामर्थानामक्षरारूढत्वानावश्यकत्वं परशिवेनैव ध्वनितम् । न चैवं सति सम्प्रदायार्थादीनामक्षरारूढताकलनप्रयासो व्यर्थ इति शङ्क्यम्, तेषामर्थानामखण्डत्वाभावेन तदावश्यकत्वात् । यद्यपि बहुपदार्थविशिष्टः सखण्डोऽप्यर्थो व्याप्त्युपाध्यादिपदैः प्रकृतिप्रत्ययादिविभागमन्तरेणैव प्रतिपाद्यमानो दृष्टस्तेन न्यायेन निगर्भार्थादावखण्डस्य मन्त्रस्य शक्तिरिति सुवचम् । शक्तिग्रहश्च परशिववचनादेव, ईश्वरेच्छाया एव शक्तित्वस्य तार्किकाणामङ्गीकारात् । तेन कामराजलोपामुद्राविद्ययोः किं बहुना मनुचन्द्रादिभेदभिन्नानामेकैकं पञ्चाशतोऽपि मन्त्राणामेकार्थत्वं तत्तदुपासकानामङ्गलोपाभावश्च संगच्छते, तथापि सम्भवत्यक्षरार्थत्वेऽखण्डशक्तिकल्पनस्यान्याय्यत्वात्तथोक्तम् । न चैवं भावार्थस्यैवाक्षरार्थत्वमिति मूलोक्तिर्विरुध्येतेति वाच्यम्, "अक्षरार्थो हि भावार्थः केवलः परमेश्वरि" इत्यत्र केवलपदेन भावार्थस्तु केवलमक्षराणां वृत्त्यैव लभ्यः, अन्ये तु शब्दार्थापत्त्यर्थार्थापत्तिभ्यां व्यञ्जनया मानसा अप्यर्था यथायथं सम्भवन्तीति ध्वननात् । कथमन्यथा मूल एव सम्प्रसरे(रो) नानामन्त्रक्रमेणैवेति वदद्भिर्मूलकारैरेव सूचितः । एतेन यः प्राचीनानां लोपामुद्राविद्यापरा एवैते षडर्था इत्याग्रहेण तत्तत्प्रकरणे तस्या एव पुनः पुनरुल्लेखः स केवलं पक्षपातमात्रमूलक एवेति न विश्रम्भणीयः । मूलविरोधस्यापि तत्र तत्र प्रदर्शितत्वाच्च ॥ ७३–७४ ॥

**तदा प्रकाशमानत्वं तेजसां तमसामपि ।**
**अविनाभावरूपत्वं तस्माद्विश्वस्य सर्वतः ॥ ७५ ॥**

(दी०) नन्वेवंविधपरलक्षणं स्वात्मतत्त्वं केन प्रमाणेनावसीयत इत्यत

आह-तदेति । [1]यदा शिवः सर्वप्राणिनां [2]चित्ते परिस्फुरति तदा आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति तन्त्रान्तरोक्तरीत्या तेजसां सूर्यादीनां तमसां घटादीनां जडानामपि प्रकाशमानत्वं चित्ते चिदात्मनि परमशिवे प्रथमं परिस्फुरति सत्येव तत्तदिन्द्रियद्वारा तत्तदर्थानां परिस्फुरणम् । अत्र श्रुतिः—"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति । तस्मात् सर्वतः सर्वस्य विश्वस्य उक्तलक्षणस्याविनाभावरूपत्वं विना न भवतीत्यविनाभावः। कोऽर्थः? विश्वमिदं द्रष्टुः सापेक्षप्रतीतिकं दृश्यत्वाद् यद्यद् दृश्यं तत्तद् द्रष्टुः सापेक्षप्रतीतिकं यथा संप्रतिपन्नो घटः,यद् द्रष्टृसापेक्षप्रतीतिकं न भवति तद् दृश्यमपि न भवति यथा शशविषाणमित्याद्यन्वयव्यतिरेकसिद्धेनानुमानप्रमाणेनावसीयत इत्यर्थः ॥ ७५ ॥ दी०

(से०) इदानीं परशिवस्य विश्वाभिन्नत्वं समर्थयते—(तदेत्यादि) । तमसां जडस्वभावानां घटादीनां तेजसां जडप्रकाशानां वृत्तिरूपज्ञानानाञ्च प्रकाशमानत्वं तत्तत्स्वभावावच्छिन्नचैतन्यनिष्ठावरणभङ्गः । स च तदैव यदा ब्रह्मणः प्रकाश इति शेषः । घटमहं जानामीति ज्ञाने हि घटो जीवात्मा च वृत्तिरूपज्ञाने विषयः । सा वृत्तिस्तु ब्रह्मैकभास्या, ब्रह्म तु स्वप्रकाशमिति स्थितिः, "तमेव भान्तमनुभाति सर्वम्" इति श्रुतेः । अत एव जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगदित्याचार्यभगवत्पादाः । तार्किकैस्त्वयं घट इत्येव घटज्ञानाकारः । निरुक्तं तु ज्ञानज्ञानमनुव्यवसायात्मकं भिन्नमेवेति स्वीक्रियते । औपनिषदैस्तु अनुव्यवसायेऽपि व्यवसायविषयविषयकत्वस्यावश्यकत्वे किमन्तर्गतानुभवविरुद्धव्यवसायेनेति मन्वानैस्तदीयमनुव्यवसायमेव व्यवसायस्थानीयं स्वीकृत्य ज्ञानभासनं तु ब्रह्मणैवेति नानुव्यवसायान्तरापेक्षानवस्थाकलुषितेत्यास्थीयते । उक्तञ्च तन्त्रराजे—

यज्ज्ञानमिदमो ज्ञानं यज्ज्ञानमहमस्तथा ।
द्वयोरपि च यज्ज्ञानं तज्ज्ञानं विद्धि मे वपुः ॥ इति ।

एवं सति प्रतिज्ञानं ब्रह्म प्रकाशत एव । ततश्च यदा यदा ब्रह्मप्रकाशस्तदा तदैव विश्वप्रकाश इति नियमाद् ब्रह्म विश्वाभिन्नमित्यर्थः । न चैतावता ब्रह्मविश्वज्ञानयोः कालिकव्याप्तिरेव सिध्येन्न विषययोरभेद इति वाच्यम्, ब्रह्म

१. यदा स सर्व-ख० । २. चित्तोपरि आत्मा-ख० ।

से० घटाभिन्नं घटज्ञानविषयत्वादित्यनुमानेन तस्यापि सिद्धेरित्यन्यत्र विस्तरः। अविनाभावोऽपृथक्त्वमभेद इति यावत्। सर्वतो ब्रह्मणा सह, सशयोरभेदाच्छ्रुवत इति वा। शिवेन सह विश्वस्याभेदरूपं महातत्त्वं दिव्यक्रीडारसोज्ज्वले साधकेऽपि प्रकाशत इत्यर्थः, दिव्या सर्वोत्तमा या क्रीडोपास्तिस्तस्या रसेनोज्ज्वले निर्मलचित्त इति तदर्थात्। प्राञ्चस्तु स्वयंप्रकाशे किं प्रमाणान्तरगवेषणेनेत्याह—प्रकाशत इति। दिव्यक्रीडेत्यादि देवीसम्बुद्धिरित्याहुः ॥७५॥

प्रकाशते महातत्त्वं दिव्यक्रीडारसोज्ज्वले।
निरस्तसर्वसंकल्पविकल्पस्थितिपूर्वकः ॥ ७६ ॥
रहस्यार्थो [1]मया गुप्तः सद्यः प्रत्ययकारकः।
महाज्ञानार्णवे दृष्टः शङ्का तत्र न पार्वति ॥ ७७ ॥
विद्यापीठनिबद्धेषु संस्थितो दिव्यसिद्धिदः।
कौलाचारपरैर्देवि पादुकाभावनापरैः ॥ ७८ ॥
योगिनीमेलनोद्युक्तैः प्राप्तविद्याभिषेचनैः।
शङ्काकलङ्कविगतैः सदा मुदितमानसैः ॥ ७९ ॥
पारम्पर्येण विज्ञातरहस्यार्थविशारदैः।
लभ्यते [2]नान्यथा देवि त्वां शपेकुलसुन्दरि ॥ ८० ॥

(दी०) अथवा अलं प्रमाणचिन्तया, प्रमाणानामपि चिदनुप्रवेशेनैव प्रमाणत्वात् [3]तेषामप्येतत्सद्भावं साधयितुमलम्, तस्य प्रकाशरूप[4]त्वादाह—प्रकाशत इति। महातत्त्वं देशकालाकारैर्निरवच्छिन्नं तत्त्वं प्रकाशते [5]स्वयमेव, तेन विना न तत्किमपि प्रकाशयितुमलम्, तस्यैव प्रकाशेन [6]सर्वत्र प्रकाशात्। अत्र श्रुतिस्मृती—"तस्य भासा सर्वमिदं विभाति" इति, "न तद्भासयते सूर्यो न शशाङ्को न पावकः" इति च। अभियुक्तवचोऽपि—

---

१. महागुप्तः—ख०से०। २. नान्यथा सिद्धिर्ज्ञानमात्रेण पार्वति—ख०। ३. तेषामपि स्वरूपमेतत्सद्भावं—ख०। ४. त्वादित्याह—ख०। ५. स्वत एवेति विना न किमपि—ख०। ६. प्रकाशेन प्रकाश्यन्ते सर्वाण्यपि—क०।

अवधानैकतानानां मतिरेवात्र साक्षिणी। दी०
किं प्रमाणैर्वराकैस्तैश्चिदनुप्राणितात्मभिः ॥
नहि वैकर्तनं ज्योतिर्दीपालोकमपेक्षते। इति।

दिव्यक्रीडारसोज्ज्वले[1] देव्याः संबुद्धिः। दिवि भवो दिव्यः परमशिवस्तस्य क्रीडा विश्वसर्जनादिव्यवहारक्रियात्मिका चिच्छक्तिः, तयो रसः सामरस्यं तेनोज्ज्वले नित्यं शिवशक्तिसामरस्यपरायण[2] प्रतीते देवि इत्यर्थः।

ननु महातत्त्वार्थ[3] विज्ञानस्य फलं यागादिकर्मणामिव देहान्तरदेशान्तरकालान्तरभावि[4] प्रत्ययः किन्नेत्याह—निरस्तेति। इदमहं करिष्यामीति मानसं कर्म संकल्पः, एवं मया कर्तव्यं न वेति कोटिद्वयावलम्बि ज्ञानं विकल्पः, शिवस्वातन्त्र्याभावहेतुकाले तौ निरस्तौ यत्परिज्ञानमात्रतः। तदुभयनिरासादेव मनःस्थैर्यं स्थितिर्जायते। तत्पूर्वको रह[5]स्यार्थ आकर्णनयोग्यो न भवति, अत एव [6]मया गुप्तो [7]न कस्यापि कथितः, अत्यन्तयत्नेन रक्षितः। सद्यःप्रत्ययकारक एतदाकर्णनेन शिवोऽहमस्मीति प्रत्ययः सद्य एव समुदेतीत्यर्थः।

नन्वयमर्थः कुत्र स्थितः ? कुत्र वा दृष्टस्त्वया ? किं वा तस्य फलम् ? इत्यत आह–महाज्ञानेति। विद्यैव पीठं विद्यापीठं शिवयोर्विश्रान्तिस्थान[8]त्वात्, तन्निबध्यते येषु तानि तदवयवभूतानि वाग्भवकामराजशक्त्याख्यानि बीजानि, तेषु विद्यापीठनिबद्धेषु "अकुले विषुवे च" इत्यत्रोक्तरीत्या बीजत्रयशिखरवर्तिबिन्द्वर्धचन्द्ररोधिनीनादनादान्तशक्तिव्यापिकासमनोन्मनाक्रमेणानुसंधीयमानेपून्मन्यन्तदेशकालानवच्छिन्न[9] वस्तुपरचिदात्मकमहातत्त्वार्थः संस्थित इत्यर्थः। तदुक्तं स्वच्छन्दसंग्रहे—

यावत्सा समनाशक्तिस्तदूर्ध्वे उन्मना स्मृता।
नात्र [10]कालकलाभावो न तत्त्वं न च देवता ॥

---

१. उज्ज्वले दिवः सम्बन्धेन भवो–ख०। २. प्रतिभेदे इत्यर्थः–क०। ३. वि–ख० नास्ति। ४. प्रत्ययो ने–ख०। ५. स्यार्थः कर्मानर्ह आकर्णनायोग्यः, अत–ख०। ६. महागुप्तः–ख०। ७. न कस्यापि कथितः–ख० नास्ति। ८. स्थानं तन्निबन्धनानि–ख०। ९. वस्तु–ख० नास्ति। १०. कालकलाभानं–ख०।

दी० सुनिर्वाणं [1]परं तत्त्वं रुद्रवक्त्रं तदुच्यते।
शिवशक्तिरिति ख्यातं निर्विकारं निरञ्जनम्॥
तत्त्वातीतं वरारोहे वाङ्मनोतीतगोचरम्।
[2]अनिष्कलं चासकलं नीरूपं निर्विकल्पकम्॥
निर्द्वन्द्वं [3]परमं शान्तं शिवाख्यं परमं पदम्।

दिव्यसिद्धिदो दिवि निरस्तनिखिलप्रपञ्चमहाशून्ये भवतीति दिव्यः [4]परमशिवः पूर्वोक्तः, तस्य सिद्धिः स्वाभेदेन परिज्ञानं तल्लक्षणं परमप्रयोजनं ददातीति दिव्यसिद्धिदः, महाज्ञानार्णवे दृष्टः, तादृशपरमशिवसामरस्यसमाधिरेव महाज्ञानं तदेवा[5]र्णवो निस्तरङ्गपारावारभूतपरमामृतपरिपूर्णत्वात्तस्मिन् दृष्टः स्वात्माहंभावभावनया भावितः। कोऽर्थः? अयं परमशिवपरप्राप्तिलक्षणो महातत्त्वार्थः सौभाग्यविद्याबीजत्रयशिखरवर्तिन्युन्मन्यवसानभूमाववस्थितस्तथाविधफलदो मया नित्यं समाधिदशायां निरीक्ष्यत[6] इत्यर्थः। शङ्का तत्र न पार्वति। शङ्का तत्र त्वया न कार्या [7]इति यथार्थदर्शी यथादृष्टार्थवादी तवाहमाप्तः, तेन मदुक्तेऽर्थेऽपि विश्वासः कार्य इत्यर्थः।

नन्वयं महातत्त्वार्थो [8]मया गुप्त इत्युक्तं तर्हि कीदृशैर्लभ्यत इत्यत आह—कौलाचारेति। कुलं शरीरं महाप्रयोजनहेतुतया ज्ञेयं येषां ते कौलाः। तदुक्तं स्वच्छन्दसंग्रहे—

कुलज्ञानमथो वक्ष्ये कौलिकानां हिताय वै।
यस्य विज्ञानमात्रेण योगोपायश्च योगिनाम्॥
[9]योगोक्तविधयः सर्वे भवन्ति सुलभाः प्रिये!।

शरीरं कुलमित्युक्तम्। तेषामाचारः,

सर्वेषामपि शिष्याणां दीक्षि[10]तानां कुलान्वये।
सर्वावस्थागतानाञ्च साधा[11]रणगतं शृणु॥
गुरुभक्तिश्च शान्तिश्च पूजा श्रद्धा क्षमा धृतिः।

---

१. परं शुद्धं रुद्र–ख०। २. सुनिष्कलं वा सकलं–ख०। ३. परमं तत्त्वं–ख०। ४. परमेश्वरः–ख०। ५. र्णवः विस्तारः तरणरहाणां परामृत–ख०। ६ क्ष्यते। अतस्तत्रार्थे शङ्का त्वया–ख०। ७. इति–क० नास्ति। ८. महागुप्त–ख०। ९. सुलभाः सिद्धयः सर्वा भवन्ति–ख०। १०. तानामपि प्रिये–ख०। ११. रणमतं–ख०।

इति स्वच्छन्दसंग्रहोक्तरीत्या समयाचारपरैः पादुकाभावनापरैः । दी०

स्वप्रकाशशिवमूर्तिरेकिका
तद्विमर्शतनुरेकिका तयोः ।
सामरस्यवपुरिष्यते परा
पादुका परशिवात्मनो गुरोः ॥

इत्य[1]स्मद्गुरूक्तरीत्या प्रकाशविमर्श[2]तत्समष्टितया श्रीगुरुपादुका-त्रय[3]भावनापरैर्योगिनीमेलनोद्युक्तैः,

यत्र यत्र मिलिता मरीचय-
स्तत्र तत्र विभुरेव जृम्भते ।
[4]तत्सतां हि नियमावलम्बिनां
ध्यानपूजनकथा विडम्बना ॥

इति [5]प्रामाणिकवचनोक्तरीत्या मातृमानमेयसंविदो योगिन्यः, तासां मेलनम् [6]( अन्तर्मुखभावेन परमप्रमातृविश्रान्तिः, अथवा ब्राह्म्याद्यष्टकार्चनार्थं सामैकशक्तिचक्रमेलनं ) योगिनीमेलनम्, तत्रोद्युक्तैः [7]प्राप्तविद्याभिषेचनैः लब्धपरमशिवप्रायगुरुवराभिमन्त्रितचिद्रसमय-सकलसलिल[8]सेकात् प्रक्षालित[9]मलपाशैः, अत एव शङ्काकलङ्कविगतैः, इदमित्थं भवेन्न भवेदित्यनवधारणज्ञानं शङ्का, सैव कलङ्कः, मालिन्य-हेतुत्वात्, तस्माद्विगतैः । अत एव सदा मुदितमानसैः, मेघावरणविग-मनाद् यथा रवेः स्वरूपं स्फुरति तथा मलपाशविगमनात् सदा येषां मनसि प्रमोदलक्षणं परमशिवस्वरूपं प्रकाशते तैरित्यर्थः । पारम्पर्येण विज्ञातरहस्यार्थविशा[10]रदैः शिवादिस्वगुरु[11]पर्यन्तगुरुपारम्पर्यक्रम-समा[सा]दितसकलरहस्यार्थपर्यालोचनपटुतरमतिभिः । अयं महा-तत्त्वार्थो लभ्यत इत्यर्थः ।

कौलाचारपरैरित्याद्युक्तगुणविहीनैरयमर्थो न लभ्यत इति शपथ-पूर्वकमाह–नान्यथेति । (स्पष्टम्[12] ॥ ७६–८० ॥

---

१ स्मदुक्त–ख० । २. तत्त्वसम–क० । ३. भावना, तत्परैः–क० । ४. तत्सतां निजसभावलम्बनं ध्यान–ख० । ५. प्रमाणवच–ख० । ६. धनुश्चिह्नान्तर्गतं–ख० नास्ति । ७. प्राप्तदिव्याभिषेचनैः–ख० । ८. सेकैः, ततः प्रक्षा–ख० । ९. मल-भयपा–ख० । १०. शारदैः लभ्यते शिवादि–ख० । ११. पर्यन्तपरम्परया विदित-सकल–ख० । १२. धनुश्चिह्नान्तर्गतं–ख० नास्ति ।

(से०) (निरस्तेत्यादि)। सङ्कल्पः कर्म मानसम्। विपरीतनिश्चय इति यावत्। विकल्पः संशयोऽसद्विषयकः शाब्दो वा तेषां स्थितिं सर्वां निरस्य पश्चात् सद्यश्चमत्कारमाधत्ते। एतादृशोऽयं मन्त्रार्थोऽत एवाद्य यावद् गुप्तः। महाज्ञानार्णवे तन्त्रे, विद्यापीठेषु काशीकाश्मीरादिषु, निबन्धेषु ब्रह्मसूत्रादिग्रन्थेषु च दृष्टोऽस्त्यतः सकलार्यसम्मतत्वादिह शङ्का न कार्येत्यर्थः। प्राञ्चस्तु—महाज्ञानार्णवः समाधिः, विद्यापीठानि वाग्भवादिकूटानि, तन्निबन्धा बिन्द्वर्धचन्द्राद्युन्मनान्ताः। उन्मन्याः परतः समाधिदशायां मयैवायमर्थो दृष्टोऽस्त्यतस्त्वया विश्वसनीय इत्यर्थ इत्याहुः॥ ७६–७७॥

(कौलेत्यादि)। कौलाचाराः पादुकाचाराश्चेति द्विविधा आचाराः कुलार्णवादिषु प्रसिद्धाः सौभाग्यरत्नाकरकारैः संगृह्य लिखिताः। भावनाश्चक्रमन्त्रपूजावसानाः। एतत्त्रितयपरैः। योगिनीनां मेलनम्, षोडशादिद्वात्रिंशदब्दान्ता सुवासिनी योगिनीत्युच्यते। तासां तिसृभ्योऽन्यूनानामेकस्य चोर्ध्वाम्नायवेत्तुरेकीकरणेन श्रीचक्रपूजनम्, चक्रलक्षणस्य कुलार्णवे तादृशस्यैव कथनात्। यथा—

यत्रैवाम्नायतत्त्वज्ञः कुलाचार्यः कुलेश्वरि।
कौलिकास्त्रिचतुःपञ्च शक्तयश्च तथा प्रिये॥

पृथग्वा पूजिता देवि मिथुनाकारतोऽपि वा।
गन्धपुष्पाक्षताद्यैस्तु देवेशि समलङ्कृताः॥

भक्ष्यभोज्यादिपिशितपदार्थैः षड्रसान्वितैः।
प्रौढान्तोल्लाससहिता मुदिता निवसन्ति च॥
तच्छ्रीचक्रमिति प्रोक्तं वृन्दं वापि तदुच्यते।

इति दशमोल्लासे। दीक्षाभिषेकः पूर्णाभिषेकश्चेति द्विविधौ दिव्याभिषेकौ प्राप्तौ यैः। अर्चनसाधनेषु हव्येषु पशुशास्त्रीयसंस्कारेणाधर्मत्वशङ्का, एतत्फले जीवब्रह्माभेदे द्वैतशास्त्रीयसंस्कारेणासम्भावितत्वशङ्कैव कलङ्कः, तस्मान्निर्मुक्तैः। "अपेतापोढमुक्तपतितापत्रस्तैरल्पशः" इति समासः। न चापेत्युपसर्गातिरिक्तस्योपसर्गस्य योगे न समास इति वाच्यम्, अपेतापोढापत्रस्तेति वारत्रयं तत्पाठेन तेष्वेव तदतिरिक्तयोगे समासाभावकल्पनात्। सूत्रे चाल्पश इत्युक्त्या शङ्काया अल्पत्वं समासबलाल्लभ्यम्, तेनाल्पीयस्यापि शङ्कया विहीनैरित्यर्थः। सदा सर्वकालं मुदितं सांसारिकचिन्ताविनिर्मुक्तं मानसं येषां तैः, नित्यानुसन्धानपरैरिति यावत्, नित्यसन्तोषस्य मोक्षद्वारदौवारिकताया योगवासिष्ठे

वर्णनात् । परमशिवादिस्वगुरुपर्यन्तपारम्पर्येणैव विज्ञातो रहस्यार्थो यैस्तेष्वपि विशारदैः प्रवीणैः । ईदृशविशेषणविशिष्टैरेव साधकैरयमर्थो लभ्यते । अन्यथात्रत्यस्यैकस्यापि विशेषणस्याभावे न लभ्यते । अस्मिन्नर्थे तवैव शपथ इत्यर्थः ॥ ७८-८० ॥ से०

**पारम्पर्यविहीना ये ज्ञानमात्रेण गर्विताः ।**
**तेषां समयलोपेन विकुर्वन्ति मरीचयः ॥ ८१ ॥**

(दी०) ननु मास्तु पारम्पर्यक्रमं[मः,] पुस्तकपाठादिना व्युत्पत्तिबलेनापि किञ्चिन्मात्रपरिज्ञानं संपादयितुं शक्यत इत्याह—पारम्पर्येति ।) अन्यथा कौलाचारव्यतिरेकेण ज्ञानमात्रेण पुस्तकपाठोत्पन्नज्ञानमात्रेण तस्य [1]साधकस्य सिद्धिर्न भवतीति ये पारम्पर्यविहीनाः शब्दव्युत्पत्तिबलेन किञ्चिन्मात्रपरिज्ञानेन [2]गर्वितास्तेषां समयलोपेन—"मादनं तदधःशक्तिः" इत्याद्यागमशास्त्रविहित[3]सकलमन्त्राक्षरसङ्केतपरिज्ञानाद्युच्चारणादिक्रमलोपेन विकुर्वन्ति मरीचयः,

सर्वपीठनिवासिन्यः सर्वगाश्चिन्मरीचयः ।
भैरव्यो [4]भरिताकारा रक्षन्तु कुलमातरः ॥

इति प्रामाणिकवचनोक्तरीत्या ब्राह्म्याद्या डाकिन्याद्यास्त्वगादिधातुदेवताः, विकुर्वन्ति विकारं जनयन्ति, स्वस्वधातूद्रेकरूपविकारजननेन तेषां देहं नाशयन्तीत्यर्थः ॥ ८१ ॥

(से०) अत्र पारम्पर्येणेत्युक्तविशेषणास्याभावे न केवलं फलाभावः प्रत्युतानर्थपरम्परैवेति कथनेन तस्येतरविशेषणेभ्योऽत्यन्तमावश्यकत्वं ध्वनयति—(पारम्पर्येत्यादि) । विकुर्वन्ति विकारमाचरन्ति रोगादिकं भयं परलोकनाशं च कुर्वन्तीत्यर्थः ॥८१॥

**यस्तु दिव्यरसास्वादमोदमानविमर्शनः ।**
**देवतातिथिनक्षत्रे वारेऽपि च विवस्वतः ॥ ८२ ॥**

---

१. साध्यस्य–ख० । २. गर्विताः समयः सङ्केतः, मादनं–ख० । ३. सकलमात्राक्षर–ख० । ४. भाविताकारा–ख० ।

**मरीचीन् प्रीणयत्येव मदिरानन्दघूर्णितः ।**
**सर्वदा च विशेषेण लभते पूर्णबोधताम् ॥ ८३ ॥**

(दी०)ननु कस्मिन् दिने कस्मिन्नक्षत्रे कस्मिन् वासरे कौलाचारक्रमेण योगिनीमेलनं कार्यमित्यत आह—यस्त्विति । यस्तु कौलाचारपरो योगी दिव्यरसास्वाद[1]मोदमानविमर्शनः, दिवि परव्योम्नि भवतीति दिव्यः परमशिवः, तेन रसः सामरस्यं तस्यास्वादोऽनुभवस्तेन मोद[2]मानो विमर्शनो मनोवृत्तिर्यस्य सः, प्रथमं [3]परमशिवैक्यपरामर्शपरिस्फुरद्कृत्रिमानन्दकेवलः पश्चान्मदिरानन्दघूर्णितो वक्ष्यमाणार्घ्यशुद्धिं विधाय [4]परामृतभूतया मदिरया सम्पादितानन्दो योगी [5]देवतातिथिनक्षत्रे । चतुर्दश्यष्टम्यौ देवतातिथी[6], पुष्यनक्षत्रं देवतानक्षत्रम् । अत्रैव वक्ष्यति—

[7]पुष्यभेन तु वारे च सौरे च परमेश्वरि ।
गुरोर्दिने स्वनक्षत्रे चतुर्दश्यष्टमीषु च ॥
चक्रपूजा विशेषेण योगिनीनां समाचरेत् । [इति] ॥८२॥

(दी०)मरीचीन् प्रीणयत्येव । एवकारोऽयोगव्यवच्छेदपरः । उक्तकालेषु सर्वदा योगिनीप्रीणनं कुर्यात् । अन्यथा प्रत्यवायो भवेदित्यर्थः । कालविशेषकथनं नैमित्तिक[8]विशेषपूजाद्योतनार्थम् । सर्वदा च मरीचीन् [नां] प्रीणनं कुर्यादेव [9]एवकारेणान्वयः । नित्यार्चनाकरणे प्रत्यवायोऽस्तीति तात्पर्यम् ।

नित्यार्चनायां लुप्तायां सासनां सावृतं क्रमात् ।

इति स्वच्छन्दसंग्रहोक्तरीत्या प्रायश्चित्तस्य [10]कर्तव्यत्वात् । अकरणे तु प्रत्यवाय एव भवति, करणे तु फलमस्तीत्याह—लभते पूर्णबोधतामिति ।

यत्र निर्विषयबोधलक्षणं स्वात्मशंभुरवतिष्ठतेऽनिशम् ।

इत्यस्मद्गुरूक्तरीत्या निरावरणचिद्रूपस्वात्मशम्भुत्वं प्राप्नोतीत्यर्थः ॥ ८३ ॥

---

१ मोदमान—ख० नास्ति । २ मानविमर्शनं विमर्शनं मनो—ख० । ३. परशिवैकपरा—ख० । ४. परमात्मस्वरूपया तया—ख० । ५. तिथौ चतु—ख० । ६. देवतातिथी—ख० नास्ति । ७. नित्यं पुष्ये दिने वारे सौरे च—ख० । ८. विशेष—ख नास्ति । ९. चकारः पुनं—क० । १०. कर्तव्यत्वविधानात्—ख० ।

(यस्त्वित्यादि) । दिव्यरसः शिवशक्तिसामरस्यं तदास्वादेन तदनु- दी०
सन्धानेन मोदमानं विमर्शनं मनोवृत्तिर्यस्य स तथा। देवतातिथयश्चतुर्दश्यादयः।
नक्षत्रं पुष्यनक्षत्रजन्मनक्षत्रादि । विवस्वतः सूर्यस्य वारः । एतेषु दिवसेषु
मरीचीनणिमादिदेवताः प्रीणयत्येव नियमेन चक्रपूजां कुरुत इत्यर्थः । इत
उत्तरश्चरणो व्याकुलाक्षरः । कारणानन्दपूर्ण इति तदर्थः । तद्वाचनक्रमो यथा—

देवतारथगोमूक इति यो वेत्ति न क्रमम् ।
स व्याकुलाक्षरे मूको देवतारथगोऽपि सन् ॥ इति ।

एवं विशेषतः सार्वकालिकानुसन्धानशीलः पूर्णस्याखण्डस्य बोधनं लभते ॥ ८२–८३ ॥

**एवंभावस्तु देवेशि देशिकेन्द्रप्रसादतः ।**
**महाज्ञानमयो देवि सद्यः संप्राप्यते नरैः ॥ ८४ ॥**

(दी०) ननु पूर्णबोधः केन वा कियता कालेन कैर्वा सम्प्राप्यत इत्यत आह—एवंभावस्त्विति । एवंभावः पूर्णबोधत्वं देशिकेन्द्रप्रसादतो यस्य करुणाकटाक्षपातमात्रेण पाशजालं छिद्यते सः परमशिवः केवलो देशिकेन्द्रः, तत्प्रसादतः ।

स्वप्रकाशवपुषा गुरुः शिवो यः प्रसीदति पदार्थमस्तके ।
तत्प्रसादमिह तत्त्वबोधनं प्राप्य मोदमुपयाति भावुकः ॥

इत्यस्मद्गुरूक्तरीत्या तत्प्रसादग्रहणेन महाज्ञानमयो निरावरण-चिन्मयः, [1]नरैः 'कौलाचारपरैः' इत्यादिपूर्वोक्तविशेषणविशेषितैः, सद्यो देशिकेन्द्रप्रसादसमवाप्तिसमय एव सम्प्राप्यते ॥ ८४ ॥

(से०) ( एवमित्यादि ) । एवंप्रकारो महाज्ञानमयो भावश्चित्तवृत्ति-प्रवाहोऽपि श्रीगुरुचरणप्रसादैकलभ्यो न शास्त्रज्ञानमात्रेण ॥ ८४ ॥

**एवमे[2]तत्प्रदं ज्ञानं विद्यार्णागमगोचरम् ।**
**देवि गुह्यप्रियेणैव व्याख्यातं दुर्गि षड्विधम् ।**
**सद्यो यस्य प्रबोधेन वीरचक्रेश्वरो भवेत् ॥ ८५ ॥**

---

१. नरैः–ख० नास्ति । २. तत्परं ज्ञानं–ख० ।

७दी मन्त्रसङ्केतमुपसंहरति–एवमेतदिति । एवम् उक्तप्रकारेण [1]एतत्प्रदं परिपूर्णबोधलक्षणपरशिवप्रदं ज्ञानं [2]विद्यार्णागमगोचरं विद्याया वर्णाः पञ्च[3]दश वर्णास्त एवागमा महार्थबोधकत्वात्, तद्गोचरं तदर्थतया व्याख्यातम्, "यद्वेत्ता त्रिपुराकारो वीरचक्रेश्वरो भवेत्" इत्यारभ्य "एवमेतत्प्रदम्" इत्यन्तश्लोकजालेन, षड्विधं "भावार्थः संप्रदायार्थः" इत्यादिना प्रतिपादितषट्प्रकारं देवि प्रकाशविमर्शसामरस्यरूपे परे दुर्गे देशिकेन्द्रकटाक्षपातविहीनैरप्राप्यरूपे ।

सद्यो यस्य प्रबोधेन षड्विधा[4]र्थस्य प्रबोधेन वीरचक्रेश्वरो भवेत्, इदन्तारिपोरहमि समराङ्गणे प्रलयप्रतिपा[illegible]नपरा वीरास्तेषां चक्रं समूहस्तस्येश्वरः परमशिवः, पूर्वो[illegible]पषड्विधार्था[illegible]ज्ञानसमय एव परमशिवो भवेदित्यर्थः ॥ ८५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य[5]श्रीपुण्या[6]नन्दनाथशिष्यामृतानन्द[7]नाथयोगिप्रवरविरचितायां योगिनीहृदयदीपिकायां मन्त्रसङ्केतो नाम [8]द्वितीयः पटलः ॥

(से०) मन्त्रसङ्केतमुपसंहरति—(एवमित्यादि) । दुर्गा दुरवगाहाः षट्संख्याका विधाः प्रकारा यस्मिंस्तत् । विद्याया श्रीविद्याया अर्णाः पञ्चदशाक्षराणि सप्तत्रिंशदक्षराणि च त एवागमा अपौरुषेयत्वे सति हितार्थबोधकत्वाद्वेदास्तद्गोचरस्तद्विषयः । "त्रयी न श्रुतिगोचरा" इतिवत् पुल्लिङ्गाभावः । ईदृशं गुह्यं गुहायामिव स्थितं परमुत्कृष्टं ज्ञायतेऽनेनेति ज्ञानम्, विषयस्य स्वानुभवं प्रति कारणत्वात् । प्रियेणैव त्वत्कृतशुश्रूषादिजन्यप्रेम्णैव व्याख्यातम् । यस्यार्थस्य प्रकृष्टबोधेन सद्य एव वीराणामुपासकानां चक्रस्य समूहस्येश्वरः "त्रितयभोक्ता वीरेशः" इति शिवसूत्रप्रतिपादितलक्षणको भवतीति सर्वं शिवम् ॥ ८५ ॥

इति श्रीभास्करोन्नीते नित्याषोडशिकाम्बुधेः ।
व्याख्याने सेतुबन्धाख्ये विश्रामः सप्तमोऽभवत् ॥ ७ ॥

—::※::—

१. एतत्परं–ख० । २. विद्यार्णागमगोचरं–ख० । ३. दश अत ए–ख० । ४. र्थस्य बोधेन वीर–ख० । ५. श्री–ख० नास्ति । ६. नन्दयोगिप्रवरशिष्या–ख० । ७. नाथ–ख० नास्ति । ८. द्वितीयः समाप्तः–ख० ।

# अथ तृतीयः पटलः

**पूजासङ्केतमधुना कथयामि तवानघे ।**
**यस्य प्रबोधमात्रेण जीवन्मुक्तः प्रमोदते ॥ १ ॥**

(दी०) अथ क्रमप्राप्तं पूजासङ्केतं वक्तुं प्रतिजानीते–पूजासङ्केतमिति । स्पष्टम् । श्रोतृजनप्रवृत्तये फलमाह्–यस्येति । यस्य पूजासङ्केतस्य प्रबोधमात्रेण [1]वक्ष्यमाणपरादित्रिविधभेदवतः केवलपरिज्ञानेनैव जीवन्नेव मुक्तो जीवन्मुक्तः सन् शिवोऽहमस्मीति [2]मतिमान् प्रमोदते परशिवाहन्तामतिरेव तु प्रमोदहेतुः ॥ १ ॥

(से०) एवं सार्धैः पञ्चाशीत्या श्लोकैर्मन्त्रसङ्केतमुपदिश्य क्रमप्राप्तं पूजासङ्केतमुपदेष्टुं शिष्यावधानाय प्रतिजानीते–श्रीभैरव उवाच ( इत्यादि ) । सङ्केतज्ञानमात्रेण जीवन्मुक्तश्चेत्तादृशविभावनपूर्वकं चक्रपूजनेन तथात्वं कैमुतिकन्यायेनैव सिध्यतीति भावः ॥ १ ॥

**तव नित्योदिता पूजा त्रिभिर्भेदैर्व्यवस्थिता ।**
**परा चाप्यपरा गौरि तृतीया च परापरा ॥ २ ॥**

(दी०) पूजासङ्केतमारभते–तव नित्योदितेति । प्रकाशात्मनो [3]मम विमर्शशक्तेर्विमर्शरूपिण्या [4]यच्छक्तेस्तव नित्योदिता पूजा नित्यं प्रत्यहमुदिता विहिता पूजा त्रिभिर्भेदैर्व्यवस्थिता ।

पूजानामान्याह्—परा चाप्यपरेति । प्रथमा पूजा परा उत्तमोच्यते । परमशिवाद्वैत[5]प्रथात्मकत्वादितरपूजाभ्यामुत्तमत्वम् । तदुक्तं सङ्केतपद्धत्याम्—

[6]न पूजा बाह्यपुष्पादिद्रव्यैर्या प्रथिताऽनिशम् ।
स्वे महिम्न्यद्वये धाम्नि सा पूजा या परा [7]स्थिता ॥ इति ।

---

१. वक्ष्यमाण–ख० नास्ति । २. मतिमान्–ख० नास्ति । ३. मम विमर्शशक्तेः–ख० नास्ति । ४. यच्छक्तेः–ख० नास्ति । ५. प्रथाप्रापकत्वात् । तदुक्तं–ख० । ६. न पूजा बाह्यपुष्पादिद्रव्यैर्या विहितानिशम् । स्वे महत्यद्वये–ख० । ७. स्थितिः–ख० ।

(दी०) अपरा द्वितीया पूजा भेद[1]प्रथामात्रसारा बाह्यचक्रावरणार्चनारूपा अधमा ।

न पूजा बाह्यपुष्पादिद्रव्यैर्या प्रथितानिशम् ।

इति [2]पूर्वोक्तवचनात् । तृतीया पूजा परापरा । बाह्यस्यान्तरे धाम्न्यद्वये [3]चिल्लयभावनामयी मध्यमा, परापरात्मकत्वात् ॥२॥

(से०) पूजां विभजते–( तवेत्यादि ) । पूर्वचतुःशत्यां या नित्या पूजा तव कथिता सा त्रिविधा, न तु काम्या नैमित्तिकी वेत्यर्थः ॥ २ ॥

**प्रथमाद्वैतभावस्था सर्वप्रसरगोचरा ।**
**द्वितीया चक्रपूजा च सदा निष्पाद्यते मया ॥ ३ ॥**
**एवं ज्ञानमये देवि [4]तृतीया तु परापरा ।**
**उत्तमा सा परा ज्ञेया विधानं शृणु साम्प्रतम् ॥ ४ ॥**

(दी०) तासां लक्षणानि क्रमेणाह–प्रथमाद्वैतेति । आत्मा मनसा युज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति पूर्वोक्तपरिपाट्या सर्वेषामिन्द्रियाणां ये [5]प्रसरा व्यापारास्तेषां गोचरीभूता । कोऽर्थः ?

यत्र तत्र मनो याति बाह्ये वाभ्यन्तरे प्रिये ।
तत्र तत्र परावस्था व्यापकत्वात् क्व यास्यति ॥
तत्र तत्राक्षमार्गेण चैतन्यं व्यज्यते प्रभोः ।
तस्य तन्मात्र[6]धर्मित्वाच्चिल्लयाद्भरिता [7]स्थिता ॥

इति विज्ञानभैरवभट्टारकोक्त[8]रीत्या चिल्लयलक्षणाद्वैतप्रथा परा पूजेत्यर्थः ।

द्वितीयेति । द्वितीया [9]चक्रपूजा अपरा पूजा चतुरस्रादिबैन्दवान्तश्री[10]चक्रसदनावरणदेवतार्चनमपरा पूजेत्यर्थः । सदा निष्पाद्यते मया सदा प्रत्यहं मया सर्वज्ञेनापि निष्पाद्यते [11]क्रियते, अभेदप्रतीतिबोधकत्वात् । अभेदप्रतीत्यर्थमपरा पूजा सदा सर्वैरपि ज्ञानिभिः

---

१. भेदप्रसरा–ख० । २. पूर्वोक्त–ख० नास्ति । ३. विलय–क० ।
४. तृतीया स्वप्रथमामयी–ख०से० । ५. प्रसराः–ख० नास्ति । ६. त्रूपत्वा–ख० ।
७. मतिः–ख० । ८. रीत्या बाह्यस्य चि–ख० । ९. चक्रपूजा–ख० नास्ति ।
१०. चक्रपदनिवास्यावरणदेवतानामतोऽपरा–ख०, ११. क्रियते प्रबोधकत्वात्–ख० ।

कार्येत्यर्थः । अन्यथा अद्वैतमिति प्रसक्तप्रतिषेधः स्यात्, न च तथा दी० युक्तम् । तदुक्तं तन्त्रावलोके—

लब्धरूपे क्वचित्किञ्चित्ताद्दृगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य संभवः ।। ३ ।।

परापरपूजामाह—एवमिति । एवं ज्ञानमये पूर्वोक्ताद्वैतभावनामये [1]धाम्नि बाह्यस्य पृथगा[2]त्मकावरणार्च[3]नारूपस्य कर्मणो ज्ञानमयताविश्रान्तिस्तृतीया परापरा पूजा । तदुक्तमभियुक्तैः—

प्रकाशैकघने धाम्नि [4]विकल्पप्रसरादिकान ।
निक्षिपेत् स्वार्चनद्वारा वह्नाविव घृताहुतीः ।। इति ।

पूजात्रिधानमाह—उत्तमेति । उत्तमा सा परा पूजा । परापूजाया उत्तमत्वकथनादितरयोरपरापरापरपूजयोरधमत्वं मध्यमत्वं चोपलक्षयति । सा ज्ञेया [5]ज्ञानगम्या परापूजा पश्चाद्वक्ष्यते । अस्या ज्ञेयत्वात् परत्वमत एवोत्तमत्वञ्चेत्यर्थः । साम्प्रतं ज्ञयायाः पूजाया विधानं शृणु ।। ४ ।।

(से०) ताः क्रमेण लक्षयति–( प्रथमेत्यादि ) । द्वैतभानसामान्याभावे परा । अद्वैतभानसामान्याभावे त्वपरा । द्वैतविलयाभ्यासदशायां परापरेति पूजात्रयलक्षणानि । न विद्यते द्वैतं यस्मिन्नेतादृशो भावोऽन्तःकरणवृत्तिविशेषस्तत्र तिष्ठति विषयीभवति । प्रकर्षेण चरन्ति विषयाभिमुखीभवन्तीति प्रचराणीन्द्रियाणि । तेषां गोचरो विषयः । सर्वेन्द्रियजन्येषु ज्ञानेषु ये विषयास्तेषु सच्चिदानन्दांशस्यानुगतस्य भानम्, न त्वनुगतयोर्नामरूपयोः । तदिदम्—"ऋतम्भरा तत्र प्रज्ञा" इति योगसूत्रप्रसिद्धं ज्ञानम् । सा प्रथमा पूजा परानाम्ना—

यत्र यत्र मनो याति बाह्ये वाभ्यन्तरे प्रिये ।
तत्र तत्राक्षमार्गेण चैतन्यं व्यज्यते प्रभोः ।।

इत्यभियुक्तोक्तिषु प्रसिद्धा । या पूर्वतन्त्रे भूगृहादिबिन्द्वन्तपूजा वर्णिता, या मया प्रत्यहं क्रियते सा द्वितीया । सेयं परपूजाधिकारिणापि कार्येति द्योतनायेत्थ-

१. धाम्नि स्वप्रथामयी बाह्यस्य–ख० । २. त्मका–ख० नास्ति । ३. र्चनद्वारा वह्नाविव ज्ञान–ख० । ४. विकल्पान् प्रसवादिकान्–ख० । ५. ज्ञानकामकार्या अपरा–ख० ।

से० मुक्तम । ज्ञानमये चिदेकस्वभावे ब्रह्मणि स्वस्यात्मनः प्रथा अभेदेन प्रस्फुरणम्, उभयाभेदाभ्यास इति यावत् । सा तृतीया—

प्रकाशैकघने धाम्नि विकल्पान् प्रसवादिकान् ।
निक्षिपाम्यर्चनद्वारा वह्नाविव घृताहुतीः ॥

इत्यादिनाभियुक्तैरुक्ता । एतासु परैवोत्तमा ज्ञेया । परापरा तु मध्यमा । अपरा त्वधमेत्यर्थादुक्तं भवति । एतासां विधानमितिकर्तव्यतां च सम्प्रति क्रमेण शृणिवत्यर्थः ॥ ३-४ ॥

**महापद्मवनान्तस्थे वाग्भवे गुरुपादुकाम् ।**
**आप्यायितजगद्रूपां परमामृतवर्षिणीम् ॥ ५ ॥**
**संचिन्त्य परमाद्वैतभावनामृतघूर्णितः ।**
**दहरान्तरसंमर्पन्नादालोकनतत्परः ॥ ६ ॥**
**विकल्परूपसंजल्पविमुखोऽन्तर्मुखः सदा ।**
**[1](चित्कलोल्लासदलितसंकोचस्त्वतिसुन्दरः)**
**इन्द्रियप्रीणनद्रव्यैर्विहितस्वात्मपूजनः ॥ ७ ॥**

(दी०) विधानमेव विवृणोति—महापद्मेति । महापद्मवनं ब्रह्मरन्ध्राधोमुखसितसहस्रदलाकुलकमलं पद्मदलैराकुलत्वाद् [2]वनमिव वनम् । तदुक्तं स्वच्छन्दसंग्रहे—

यावदूर्ध्वाकुलं पद्मं सहस्रारमधोमुखम् ।
श्वेतं च निष्कलाशक्तिमध्यं चासङ्ख्यशक्तिकम् ॥
व्यापिनीकेवलं शश्वदमृतौघ[3]प्रहर्षिणम् ।
महापद्मवनं चैव समना तस्य चोपरि ।
तस्यान्तः कर्णिकामध्ये तत्स्थे [4]वाग्भवरूपिणि ॥ इति ।

पूर्वोक्तरीत्या वाचः परापश्यन्तीमध्यमावैखर्यो भवन्त्यस्मादिति वाग्भवं त्रिकोणम् । तत्र गुरुपादुकाम्

गृणते तत्त्वमात्मीयमात्मीकृतजगत्त्रयम् ।
उपायोपेयरूपाय शिवाय गुरवे नमः ॥

---

१. कोष्ठान्तर्गतं नास्ति दीपिकायाम् । २. वनमिति तदुक्तं—ख० । ३. प्रवर्षिणीम्—ख० । ४. वाग्भवे पूर्वोक्त—क० ।

इत्यभियुक्तवचनोक्तरीत्या विश्वगुरोः परमशिवस्य [1]पादुकाम् । दी०

स्वप्रकाशशिवमूर्तिरेकिका तद्विमर्शतनुरेकिका तयोः ।
सामरस्यवपुरिष्यते परा पादुका परशिवात्मनो गुरोः ॥

इत्य[2]स्मद्गुरूक्तरीत्या त्रिभेदघतामाप्यायितजगद्रूपां [3]शिशिरतर-निशाकररश्मिनिफालनात् प्रसरणाद् आप्यायिताम् [4]अनुप्राणित-चराचरां परमामृतवर्षिणीं निरन्तरनिबिडचिद्रसासारवर्षिणीं संचिन्त्य स्वात्मतया [5]विमृश्य गुरुपादुकापरामर्शनानन्तरमेव प्रसादस्वीकारमाह—परमाद्वैतेति । परमशिवस्तेनाद्वैतभावना सैवाऽस्मीति समावेशरूपा सैवामृतमित्यभिव्यज्यते, मदहेतुत्वात् । तत्कृतेन मदेन घूर्णितो मुदितः ।

स्वप्रकाशवपुषा गुरुः शिवो
यः प्रसीदति पदार्थमस्तके ।
तत्प्रसादमिह तत्त्वशोधनं
प्राप्य मोदमुपयाति भावुकः ॥

इत्य[6]स्मद्गुरूक्तरीत्या परमशिवाद्वैतभावनालक्षणगुरुप्रसाद-स्वीकारसमुल्लसत्परमानन्दपरवश इत्यर्थः ।

प्रसादस्वीकारानन्तरमान्तरजपमेवाह—दहरान्तरेति ।

दहरं [7]विपाप्मं परवेश्मभूतं
हृत्पुण्डरीकं पुरमध्यसंस्थम् ॥ इति ।

"दहरोऽस्मिन्नन्तराकाशः" इति श्रुत्युक्तरीत्या हृदयाब्जमध्यगत-माकाशं दहरमित्युच्यते. दहरमेव दहरं तदन्तरे संसर्पन्नादस्तस्यालोकनं विभावनं तत्र तत्परः । तदुक्तमभियुक्तैः—

आनन्दलक्षणमनाहतनाम्नि देशे
नादात्मना परिणतं तव रूपमीशे ।
प्रत्यङ्मुखेन मनसा परिचीयमानं
शंसन्ति नेत्रसलिलैः पुलकैश्च धन्याः ॥ [8]इति ।
संयम्येन्द्रियसञ्चारं प्रोच्चरेन्नादमान्तरम् ।
[9]एष एव जपः प्रोक्तो न तु बाह्यजपो जपः ॥

---

१. पादुकां–ख० नास्ति । २. स्मदुक्त–ख० । ३. शिशिरनिजरश्मि–ख० । ४. अनुप्राणित–ख० नास्ति । ५. विचिन्त्य–ख० । ६. अस्मदुक्त–ख० । ७. विपापं–ख० । ८. इति–ख० नास्ति । ९. एवमेव–ख० ।

दी० इत्यभियुक्तवचनोक्तरीत्या आन्तरं नादानुसंधानलक्षणं जपं कुर्यात्। न तु नानाविधोच्चारणलक्षणं बाह्यजपं कुर्यात्। विकल्पेति। विकल्परूपाणां नानाविधरूपाणामक्षराणां संजल्प उच्चारः, तल्लक्षण-[1]बाह्यजपविमुखः। तदुक्तं [2](विज्ञानभैरवभट्टारकैः—

भूयो भूयः परे भावे भावना भाव्यते हि या)।
[3]जपः सोऽन्तः स्वयं नादो मन्त्रात्मा जप ईदृशः[4]॥ [5]इति।

[6]तादृशमेव ध्यानमपि कुर्यादित्याह–अन्तर्मुख इति। तत्र–"प्रत्ययैकताननता ध्यानम्" इति [7]योगपातञ्जलोक्तरीत्या विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहलक्षणध्यानेन सदान्तःशब्दसूचितेनान्तर्मुखः परमशिवाद्वैतभावनापरो भूयादित्यर्थः। तदुक्तं विज्ञान-[8]भैरवभट्टारकैः —

ध्यानं या निष्कला चिन्ता निराकारा[9] निराश्रया।
न तु ध्यानं शरीरस्य मुखहस्तादिकल्पना॥ इति।
[10]चित्कलोल्लासदलितसङ्कोचस्त्वतिसुन्दरः। [11]इति।
चिदम्बुधिमहाभङ्गभिन्नसङ्कोच[12]सुन्दरः।

इत्यस्म[13]द्गुरूक्तरीत्या परिकल्पितपरिपूर्णाहंभावः। अत एवातिसुन्दरः महात्रिपुरसुन्दरीनामधेयपराचित्कलोल्लासास्पदपरमसुन्दरपरमप्रेमास्पदपरमशिवाभिन्न इत्यर्थः।

पूजामप्येतादृशीमेव कुर्यादित्याह–इन्द्रियेति। इन्द्रियाणि श्रोत्रादीनि, तेषां प्रीणनानि द्रव्याणि विशिष्टशब्दस्पर्शरूपरस[14]गन्धाः, तैर्विहितं स्वात्मदेवतायाः पूजनं येन तथाविधः। तदुक्तं मुख्याम्नायरहस्यविधौ—

इन्द्रियद्वारसंग्राह्यैर्गन्धा[15]द्यैरात्मदेवताम्।
स्वभावेन समाराध्य ज्ञातुः सोऽयं महामखः॥ [16]इति।

---

१. बाह्य–ख० नास्ति। २. धनुश्चिह्नान्तर्गतं–ख० नास्ति। ३. जयत्यन्तस्स्वयं–क०। ४. ईरितः–ख०। ५. इति–क० नास्ति। ६. तादृशमपि ध्यानं–ख०। ७. योगशास्त्रोक्त–ख०। ८. भैरव–ख० नास्ति। ९. निर्विकारा–ख०। १०. चित्कल्लोलाभिर्दलित–क०। ११. इति–क० नास्ति। १२ सङ्कटः–ख०। १३. स्मदुक्त–ख०। १४. गन्धवन्ति, तैर्वि–ख०। १५. द्यैः स्वात्मा–ख०। १६. इति–ख० नास्ति।

**जग्धिपानकृतोल्लासरसा[1]स्वादविजृम्भणात् ।** **टी०**
**भावयेद्भरितावस्थां महानन्दस्ततो भवेत् ॥**

**इति च[2] विज्ञानभैरवभट्टारकोक्तरीत्या श्रोत्रादीन्द्रियविषयशब्दाद्यनुभव[3]जनितेन महानन्देन समरसीकरणं परापूजा इत्यर्थः ॥७॥**

(से०) तत्र प्रथमोपस्थितां परां पूजामाह त्रिभिः—(महेत्यादि)। व्यापिकासमनयोर्मध्यभागे सहस्रदलकमलमेव बहुदलावृतत्वान्महापद्मवनम्। तदन्तस्थं तत्कर्णिकामध्यभागस्थं वाग्भवमकारस्त्रिकोणमिति यावत्। तत्र गुरुपादुका गुरुपादुकामन्त्रप्रतिपाद्यां पराशिवाभिन्नां स्वनाथात्मिकामकुलामृतकुण्डलिनीम्। आप्यायितजगद्रूपां शिशिरनिजरश्मिप्रसरेणाप्यायितचराचरां परमामृतवर्षिणीं निरन्तरनिबिडाचन्द्रसासारवर्षिणीं सञ्चिन्त्य स्वाभिन्नां विभाव्य तादृश्याः परमाद्वैतभावनाया मदेनानन्देन घूर्णितः समो भूयात्। सोऽयं गुरुपूजोत्तरं तत्प्रसादस्वीकाररूपः। तदुक्तमभियुक्तैः—

स्वप्रकाशशिवमूर्तिरेकिका तद्विमर्शतनुरेकिका तयोः।
सामरस्यवपुरिष्यते परा पादुका परशिवात्मनो गुरोः ॥
स्वप्रकाशवपुषा गुरुः शिवो यः प्रसीदति पदार्थमस्तके।
तत्प्रसादमिह तत्त्वशोधनं प्राप्य मोदमुपयाति भावुकः ॥ इति।

प्रसादं स्वीकृत्यानन्तरं जपं कुर्यादित्याह—दहरेति। दहरं हृदयाकाशं तस्यान्तरे मध्ये संसरतो नादस्य सर्वमन्त्रप्रकृतिभूतस्यानाहतध्वनेरालोकने श्रवणानुसन्धाने तत्पर आसक्तः। अत एव विकल्परूपो बहुकोटिको द्वैतकवलितो यः सङ्कल्पो वाचिकमानसान्यतरोच्चारणरूपो जपस्तत्र विमुखस्तस्मात्परावृत्तः। सदान्तर्मुखोऽबहिःप्रसृतमनस्कः। उक्तञ्च पञ्चमे पटले—

संयतेन्द्रियसञ्चारं प्रोच्चरेन्नादमान्तरम्।
एष एव जपः प्रोक्तो न तु बाह्यजपो जपः ॥ इति।

चित्कलाया अद्य यावत् सङ्कुचितत्वेन भाताया उल्लासेन सर्वतः प्रसृमरस्वरूपापरिच्छिन्नत्वविभावनेन दलितः संकोचः परिच्छिन्न भानं यस्य सः। अत एवातिसुन्दरः परपूजाजन्यसुन्दरीभावात्मकफलानुभविता सन्नित्यर्थः ॥५–७॥

"नादेवो देवमर्चयेत्", "शिवो भूत्वा शिवं यजेत्" इत्यादिवचनैः परस्याः पूजाया अपरपूजापरापरपूजे प्रत्यङ्गत्वं मन्यमानः परपूजामनुपसंहर-

---

१. रसानन्द–ख०। २. च–क० नास्ति। ३. जनितनन्दनां महा–क०।

से० न्नेवापरां पूजां पराञ्च पूजां तन्त्रेणाह—( इन्द्रियेत्यादि )। इन्द्रियाणां प्रीतिजनकानि गन्धादीनि द्रव्याणि तैरात्मरूपाया देवतायाः पूजनं विदध्यात्। तदुक्तमाम्नायरहस्ये—

इन्द्रियद्वारसंग्राह्यैर्गन्धाद्यैरात्मदेवता।
स्वभावेन समाराध्या ज्ञातुः सोऽयं महामखः॥ इति।

ईदृशात्मपूजोत्तरं न्यासान् देवतासंघस्य स्वशरीरेऽवस्थापनरूपांश्चतुश्चत्वारिंशत्संख्यान्निर्वर्तयेदारभेत। आत्मपूजान्यासजालयोः पाठतः प्राप्तस्य पौर्वापर्यस्य वक्ष्यमाणकतिपयपदार्थानां श्रौतक्रमानुरोधेनोत्तरकालमात्र एव पर्यवसानं न पुनरव्यवहितोत्तरत्वे। इदञ्च प्राचामनुरोधेन व्याख्यानम्। वस्तुतस्तु सर्वप्रचरगोचरेत्युपक्रमस्यैवेन्द्रियप्रीणनैरित्युपसंहारपूर्वकमपरपूजाङ्गत्वविधानम्, तेन गन्धादिभिः पूजनमिति परपूजाशरीरमेव न त्वात्मपूजा। तस्या न्यासजालोत्तरभाविपात्रासादनोत्तरकालिकत्वात्। ततश्च शिरःस्थितगुरोर्दहरस्थनादविद्यायाः सर्वावसायिचित्कलारूपदेव्यात्मनश्चाद्वैतमाननसमकालं सकलेन्द्रियैर्विषयान् भुञ्जानस्तज्जन्यानन्दधारामात्रविषयकनिर्विकल्पकज्ञानैकसारतयेतरनिखिलविषयविभ्रमाभावेन कञ्चित्कालमवस्थानं परा पूजेत्येतावदर्थपरोऽयं ग्रन्थसन्दर्भो योज्यः। तेनेदृशपरपूजनाव्यवधानेनैव न्यासाः कर्तव्या इति ध्येयम्॥ ८॥

न्यासं[1] निर्वर्तयेद्देहे षोढान्यासपुरःसरम्।
गणेशैः प्रथमो न्यासो द्वितीयस्तु ग्रहैर्मतः॥ ८॥
नक्षत्रैश्च तृतीयः स्याद्योगिनीभिश्चतुर्थकः।
राशिभिः पञ्चमो न्यासः षष्ठः पीठैर्निगद्यते॥ ९॥
षोढान्यासस्त्वयं प्रोक्तः सर्वत्रैवापराजितः।
एवं यो न्यस्तगात्रस्तु स पूज्यः सर्वयोगिभिः॥ १०॥
नास्त्यस्य पूज्या लोकेषु पितृमातृमुखो जनः।
स एव पूज्यः सर्वेषां स स्वयं परमेश्वरः॥ ११॥
षोढान्यासविहीनं यं प्रणमेदेष पार्वति।
सोऽचिरान्मृत्युमाप्नोति नरकं च प्रपद्यते॥ १२॥

1. न्यासान्—से०।

(दी०)अथ अपरापूजां वक्तुं तदङ्गभूतं बाह्यन्यासमाह-न्यासमिति। षोढा [1]न्यासो गणेशैत्यादिसूत्रे सूचितः। देहे स्वस्येति शेषः। षोढा षट्प्रकारको न्यासः।

[2]तत्प्रकाराणां गणनामाह—गणेशैरिति। इति सुगमम्। न्यासं न्यासजातं जातावेकवचनम्। निवर्तयेदिति शेषः॥ ८-९॥

षोढा षट्प्रकारन्यास एव एव, तत्प्रकारं षोढान्यासमाहात्म्यं फलं चाह—षोढेति।

प्रोक्तोऽयं षोढा न्यासः सर्वत्र सर्वलोकेष्वपि, अपराजितः अप्रतिहतसाम[3]र्थ्यः। एवं वक्ष्यमाणक्रमेण यो न्यस्तगात्रः षोढान्यास-सामर्थ्याच्छिन्नपाशत्वात् स्वयमेव परमेश्वरः। अत एव लोकेषु जनेषु स एव योगिभिः पूज्यः। किं बहुना, सर्वेषामपि पूज्यः, नास्त्यस्य पूज्यः कोऽपि लोके। अस्ति यदि [4]चेदेष बलादन्यस्मै प्रणमति स मृतो भवेद् नरकं च प्रयातीत्यर्थः।॥ १०-१२॥

(से०) षोढान्यासं लक्षयति—(गणेशैरित्यादि)। गणेश(आदि)नामघटित (न्यासावान्त)रापूर्वाण(णां) षट्कम्। तज्जन्य परमापूर्वम्। तद्दृशपरमापूर्वजनकत्व शक्यतावच्छेदकाकृत्य प्रवृत्तः षोढान्यासस्तत्प्रत्यन्ययेन कर्मनामधेयम्॥ ९-१०॥

षोढान्यासस्य महिमानमाविष्करोति—(एवमित्यादि)। यं प्रणमेदित्यन्य क्रोधेन प्रणमेदित्यर्थ इति सौभाग्यरत्नाकरे स्थितम्। युक्तञ्चैतत्,

खं वायुमग्निं सलिलं महीञ्च ज्योतींषि सत्त्वानि दिशो द्रुमादीन्।
सरित्समुद्राश्च हरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्यः॥

इति विष्णुभागवतोक्तरीत्या देव्यनन्यस्य सर्वत्र देवीभावनाया आवश्यकत्वेन सर्वस्यापि नमस्कार्यत्वात्, प्रत्युतानमस्कार्यत्वावच्छेदिकायाः स्वापेक्षयापकृष्टताया भेदव्याप्यायाः पुनः पुनर्विभावनेनाद्वैतापास्तविरोधापत्तेः, विजातीयप्रत्ययातिरस्काराभावात्। न च स्वापेक्षयोत्कृष्टताया नमस्कार्यता-

1. न्यासपुरःसरमित्यत्र सूचितो न्यासो निगद्यते इति शेषः–ख०। 2. तत्प्रकारमाह–ख०। 3. कसान्तर्गतो ग्रन्थो नास्ति–ख०। 4. चेदेव बाल्यादस्मै प्रण–क०।

से० वच्छेदिकाया अपि भेदव्याप्यत्वेन स दोषस्तुल्य एवेति वाच्यम्, मिथस्तुल्यानामपि "अन्योन्यगुरवो विप्राः" इत्यादिवचनैः परस्परं विधानेनान्यापकृष्टताया एव(वा)नमस्कार्यतावच्छेदकत्वात्। न च स्वनमस्कारनिरासाय स्वभिन्नत्वस्यापि तत्र विशेषणीयत्वेन तद्दोषतादवस्थ्यं शङ्क्यम्, स्वस्मिन्नपि ब्रह्मभावनया "तस्मै मह्यं नमो नमः" इत्याद्यभियुक्तवचनाच्च स्वनमनस्येष्टत्वात्, अनन्य इति पदेन भागवतेऽप्यस्यार्थस्य ज्ञापितत्वात्। तस्मादीदृशोपासककर्तृकसक्रोधप्रणाममात्रेणापि द्रेष्टुरनिष्टं भवति, किमुत शापाभिचारादिनेत्यर्थः। तेन सर्वपूज्यत्वसमर्थनेऽस्य तात्पर्यम्। एवमेव शक्तिन्यासकर्तृनमनीयास्फोटनावेदकवाक्येऽप्युन्नेयम्। सुगममन्यत् ॥ ११-१२ ॥

षोढान्यासप्रकारं च कथयामि तवानघे।
विघ्नेशो विघ्नराजश्च विनायकशिवोत्तमौ ॥ १३ ॥
विघ्नकृद्विघ्नहर्ता[1] च गणराट्[2] गणनायकः[3]।
एकदन्तो द्विदन्तश्च गजवक्त्रो निरञ्जनः ॥ १४ ॥
[4]कपर्दवान् दीर्घमुखः शङ्कुकर्णो वृषध्वजः।
गणनाथो गजेन्द्रश्च शूर्पकर्णस्त्रिलोचनः ॥ १५ ॥
लम्बोदरो महानादश्चतुर्मूर्तिः सदाशिवः।
आमोदो [5]दुर्मुखश्चैव सुमुखश्च [6]प्रमादकः ॥ १६ ॥
एकपादो द्विजिह्वश्च[7] शूरो वीरश्च षण्मुखः।
वरदो वामदेवश्च वक्रतुण्डो द्विरण्डकः[8] ॥ १७ ॥
सेनानीर्ग्रामणीर्मत्तो विमत्तो मत्तवाहनः।
जटी मुण्डी तथा खड्गी वरेण्यो वृषकेतनः ॥ १८ ॥
भक्ष्यप्रियो गणेशश्च मेघनादो गणेश्वरः।
तरुणारुणसङ्काशान् गजवक्त्रान् त्रिलोचनान् ॥ १९ ॥

---

१. विघ्नहृद्विघ्नकर्ता–ख०। २. विघ्नराट्–से०। ३. गणनायक एव च–ख०। ४. कपर्दभृद्–से०। ५. दुर्मदः–से०। ६. प्रमोदनः–से०। ७. द्विजिकश्च–ख०। ८. द्वितुण्डकः–से०।

पाशाङ्कुशवराभीतिहस्तान्[1] शक्तिसमन्वितान् ।
एतांस्तु विन्यसेद्देहे[2] मातृकान्यास[3]वत्प्रिये ॥२०॥

(दी०) षोढान्यासप्रकारं वक्तुं प्रतिजानीते—षोढेति । इति स्पष्टम् । तत्प्रकारमाह–विघ्नेश इति । ([4]ग्रन्थान्तरे—

एते गणेशवर्णानामेकपञ्चाशतः क्रमात् ।
श्रीश्च ह्रीश्चैव तुष्टिश्च शान्तिः पुष्टिः सरस्वती ॥
रमा मेधा तथा कान्तिः कामिनी मोहिनी बला ।
तीव्रा च ज्वालिनी नन्दा सुरसा कामरूपिणी ॥
उग्रा च जयिनी सत्या विघ्नेशानी सुरूपिणी ।
कामदा मदजिह्वा च विकटा घूर्णितानना ॥
भूतिर्भूमिः सती रम्या मानुषी मकरध्वजा ।
विकर्णा भ्रुकुटी लज्जा दीर्घघोणा धनुर्धरा ।
तथैव यामिनी रात्रिश्चन्द्रकान्ता शशिप्रभा ॥
लोलाक्षी चपला ऋद्धिर्दुर्भगा सुभगा शिवा ।
दुर्गा गुहप्रिया काली ललज्जिह्वा च शक्तयः ॥)

[5]नामान्येतानि नात्र व्याख्येयानीति[6] ।

तेषां ध्यानमाह–तरुणारुणेति ।

तरुणारुणसङ्काशान् तरुणारुणसवर्णान् । गजवक्त्रमिव वक्त्रं येषां ते गजवक्त्रास्तान् । ऊर्ध्वकरयोः पाशाङ्कुशौ । अधःकरयोर्वराभये दधानान् । पुष्ट्यादिभिः समन्वितान् । अत्र सूचितानां नाम्नामागमान्तरपद्धतिषु चोक्तत्वान्न वदामः । न्यासस्थानान्याह—एतान् गणेशान्[7] । मातृकावैखरी[8]स्थानेषु न्यसेदित्यर्थः ॥१३–२०॥

(मे०)अत्र विघ्नेशादीन्येकपञ्चाशन्नामानि । एतेषु तन्त्रभेदेन क्वचित्क्वचिन्नामभेदा नामैकदेशभेदाश्च दृश्यन्ते । यथा त्रिलोचनस्थानेऽग्निनेत्र इति, दीर्घमुखस्थाने दीर्घवक्त्र इति, कपर्दभृत्स्थाने कपर्दवानित्यादि ॥ १३–१९ ॥

---

१. भीतिकरान्–से० । २. देवि–ख से० । ३. कास्थान–ख०से० । ४. कंसान्तर्गतं नास्ति–ख० । ५. तान्येतानि तावद् व्याख्येयानीति–ख० । ६. व्याख्येयमिति–क० । ७. 'मातृकान्यासवत्' इत्यधिकः पाठः–ख० । ८. न्यासस्थानेषु–ख० ।

से० एतेषां ध्यानमाह—(तरुणेत्यादि)। तरुणारुणो मध्याह्नादित्यः। वामोर्ध्वकरमारभ्य वामाधःकरपर्यन्तमायुधानि। शक्तिसमन्वितान् पुष्ट्यादिभिः श्र्यादिभिर्वा तन्त्रभेदेन षड्विधलक्षणतयोक्ताभिः शक्तिभिः सहितान्। तत्साहित्यञ्च न ध्यानमात्रेण, अपि तु तन्नाम्नां मन्त्रेऽपि योगः। तत्र केचिद्विघ्नेश्वराय श्रियै नम इत्यादिव्यस्तप्रयोगं लिखन्ति। परे तु विघ्नेश्वरश्रीभ्यां नम इति द्वन्द्वसमासमाहुः। नव्यास्तु—भवानीशङ्कराभ्यां लक्ष्मीनारायणाभ्यामित्येवं शक्तिनाम्नः प्राथम्येनैव बहुशः प्रयोगदर्शनाच्छ्रीविघ्नेश्वराभ्यामित्येव प्रयोगो युक्त इत्याहुः। इदं त्वत्र वक्तव्यम—अस्तु शक्तिनाम्नः प्राथम्यम्, "विघ्नेश्वरः श्रिया युक्तो विघ्नराजस्तथा ह्रिया" इत्यादिज्ञानार्णववाक्ये गणेशतच्छक्त्योः पाठक्रमस्याविवक्षितत्वात्, "शान्त्या युक्तः शिवोत्तमः" इत्यस्य विपरीतक्रमस्यापि दर्शनात्, परन्तु "सहयुक्तेऽप्रधाने" इति सूत्रानुसारेण शक्तिवाचकपदोत्तरतृतीयाभिस्तासामप्राधान्यावगमाच्छान्त्या युक्त इत्यादावपि विशेषणविशेष्यभावेन गणेशस्यैव प्राधान्यावगमात्, "गणेशैः प्रथमो न्यासः" इति प्रकृततन्त्रेऽपि गणेशानामेव तृतीयया निरपेक्षकरणत्वोक्तेः, उभयोः समप्राधान्ये च विघ्नेश्वरादिपदोत्तरमिव श्र्यादिपदोत्तरमपि प्रथमाविभक्तेरेव युक्ततया तृतीयाविभक्तीनां युक्तसहितादिपदानां चाविवक्षितार्थकत्वकल्पनापत्त्या द्वयोः समप्राधान्यावेदकद्वन्द्वसमासो मानाभावपराहतः। युग्मस्य तन्त्रेण न्यासविधाने तु परस्परसाहित्यबोधकद्वन्द्वो योग्यः स्यात्। युग्मस्यापि क्रमेण न्यासे तु परस्परसाहित्यविशेषणेन भिन्न एव प्रयोगः। अत एव रुद्रयामले महागणपतितर्पणप्रकरणे—"सिद्ध्यामोदादियुग्मानि तर्पयेत्कामतस्ततः" इति विधाय मन्त्रोद्धारः सहितपदयुक्त एव कृतः—

प्रणवं पूर्वमुच्चार्य ततो लक्ष्मीं समुच्चरेत्।
ततो गणेशबीजञ्च सिद्ध्या च सहितं ततः॥
आमोदं तर्पयामीति चतुर्वारं तथैव तु।
आमोदसहितां सिद्धिं तर्पयामि क्रमाच्चतुः॥ इत्यादि।

प्रकृते तु युग्मस्य तन्त्रेण क्रमेण वा देवतात्वाभावाच्छ्रीसहितस्यैव गणेशस्य देवतात्वाच्छ्रीसहितविघ्नेशाय नम इत्यादिरेव प्रयोगो युक्त इति ध्येयम्। मातृकास्थानवत्, यथासंख्यमेकैकमातृकाक्षरवत्तत्स्थानवच्चेति न्यासक्रियाविशेषणम्। तेन मतुबयं न वतिः। ततश्च—अं श्रीयुक्ताय विघ्नेशाय नम इत्युक्त्वा शिरसि न्यसेदित्यादिः प्रयोग ऊह्यः॥ २०॥

स्वरैस्तु सहितं सूर्यं हृदयाधः प्रविन्यसेत् ।
बिन्दुस्थाने सुधासूतिं यादिवर्णचतुष्टयैः ॥ २१ ॥
भूपुत्रं लोचनद्वन्द्वे कवर्गाधिपतिं प्रिये ।
हृदये विन्यसेच्छुक्रं चवर्गाधिपतिं पुनः[१] ॥ २२ ॥
हृदयोपरि विन्यस्येट्टवर्गाधिपतिं बुधम् ।
बृहस्पतिं कण्ठदेशे तवर्गाधिपतिं प्रिये ॥ २३ ॥
नाभौ शनैश्चरं देवि[२] पवर्गेशं सुरेश्वरि ।
वक्त्रेशादिचतुर्वर्णैः सहितं राहुमेव च ॥ २४ ॥
क्षकारसहितं केतुं पायौ देवेशि विन्यसेत् । [३]इति ।
(रक्तं श्वेतं तथा रक्तं श्यामं पीतं च पाण्डुरम् ।
कृष्णं धूम्रं धूम्रधूम्रं भावयेद्रविपूर्वकान् ॥
कामरूपधरान् देवि दिव्याम्बरविभूषणान् ।
वामोरुन्यस्तहस्तांश्च दक्षहस्तवरप्रदान् ॥)
ललाटे दक्षनेत्रे च वामे कर्णद्वये पुनः ॥ २५ ॥
पुटयोर्नासिकायाश्च कण्ठे स्कन्धद्वये पुनः ।
पश्चात्कूर्पर[४]युग्मे च मणिबन्धद्वये पुनः[५] ॥ २६ ॥
[६]स्तनयोर्नाभिदेशे च कटिबन्धे ततः परम्[७] ।
ऊरुयुग्मे तथा जान्वोर्जङ्घयोश्च पदद्वये ॥ २७ ॥

---

१. बुधः—ख० । अत्र सेतुबन्धस्थः पाठः—हृदयोपरि विन्यसेच्चवर्गाधिपतिं बुधम् । बृहस्पतिं कण्ठदेशे टवर्गाधिपतिं प्रिये ॥ हृदये विन्यसेच्छुक्रं तवर्गाधिपतिं पुनः । २. चैव—ख० । ३. इत्यनन्तरं "रक्तं श्वेतं तथा रक्तं नीलं श्वेतं च पाण्डुरम् । कृष्णं धूम्रं तथा धूम्रं भावयेद्रविपूर्वकम् ॥ कामरूपधराः सर्वे विचित्राम्बरभूषिताः ।" इत्यधिकः पाठः—ख० से० । ४. कूर्परयोर्युग्मे—क० । ५. तथा—ख० से० । ६. हस्तयो—से० । ७. पुनः—क० ।

[[1]आद्ययुग्मन्तथा चैकं ततस्त्रीणि चतुष्टयम् ।
एकमेकं द्वयश्चेति स्वराः प्रोक्ताश्चतुर्दश ॥ २८ ॥
व्यञ्जनेष्वेकमुभयं द्वयं न्यस्येदतः परम् ।
एकं युग्मं द्वयन्द्वन्द्वमेकं युग्मं द्वयन्ततः ॥ २९ ॥
एकं त्रयं तथा चैकं एकमेकं द्वयन्तथा ।
एकं द्वयं त्रयं पश्चाल्लक्षं अं मश्चतुष्टयम् ॥ ३० ॥
अश्विन्यादेः पुरो भागे दत्वा चक्रमतो न्यसेत् ]
ज्वलत्कालानलप्रख्या वरदाभयपाणयः ॥ ३१ ॥
नतिपाण्योऽश्विनीपूर्वाः सर्वाभरणभूषिताः ।
एतास्तु विन्यसेद्देवि स्थानेष्वेषु सुरार्चिते ॥ ३२ ॥

(दी०)ग्रहन्यासमाह—स्वरैरिति। स्वरैरकारादिविसर्गान्तैः षोडशभिः सहितमादौ नाम्ना ) सूर्यं हृदयाधो विन्यसेद्[2] बिन्दुस्थाने ललाटे। अत्रैवोक्तम्—"दीपाकाराऽर्द्धमात्रश्च ललाटे [3]वृत्तमिष्यते" इत्यादिना ।

सुधासूतिं चन्द्रमसं यादिवर्णचतुष्टयैः । यरलवैश्चतुर्भि[4]र्विन्यसे दित्यन्वयः[5] । भूपुत्रमङ्गारकं लोचनद्वन्द्वे कवर्गस्योपरिस्थितमधिपतिं विन्यसेत् । हृदये वक्षसि स्पष्टमन्यत् । पायौ देवेशि विन्यसेदित्यन्तम्[6] ।

नक्षत्राणां स्थानानि न्यासं चाह—कटिबन्ध [7]इति ।

कटिबन्धयोरिति द्वन्द्वपरम्, अन्यथा सप्तविंशतिसंख्या न घटते । कर्णद्वय इति दक्षिणादितः, [8]दक्षनेत्रे वामे चेति[9] क्रमस्योपक्रान्तत्वात् । वरदाभयपाणयः । नतिपाण्य इत्युक्त्या बाहुचतुष्टयं गम्यते । शेषं सुगमम् ॥ २१-३२ ॥

---

१. कसान्तर्गतो ग्रन्थः—ख० । कंसान्तर्गतस्थाने सेतु०पाठ इत्थम्—युग्ममेकं त्रयं वेदा एकमेकं द्वयं ततः । एकं युग्मं युग्ममेकं युग्मं युग्मं युगं क्रमात् ॥ एकं युग्मं त्रयं चैकं त्रयमेकैकमेककम् । युग्ममेकं युगं त्रीणि युग्मं बिन्दुविसर्गयुक् ॥ नक्षत्राणां क्रमाद्वर्णनिर्णयः कथितः प्रिये । २. विन्यस्य—ख० । ३. वृत्त इष्यते—क० । ४. चतुर्भिः—ख० नास्ति । ५. इत्यर्थः—ख० । ६ कवर्गाधिपतिं—क० । ७ इति—क० नास्ति । ८. द्वय इत्यादि—क० । ९. वामनेत्रेति—क० ।

(से०) ग्रहाणां न्यासमाह—(स्वरैरित्यादि) स्वरैरकाराद्यैः षोडशभिः। हृदयाधो हृज्जठरसन्धौ। हृदय एवेति तन्त्रान्तरे। बिन्दुस्थाने। ज्ञानार्णवानुगुण्याय भ्रूमध्य इति तदर्थः। ललाट मध्य इति केचित्। तन्न, "तत्राऽऽधारञ्च हृद्बिन्दुस्थानञ्च परिकीर्तितम्" इति स्वच्छन्दतन्त्रोक्तवचने बिन्दुस्थानपदस्य भ्रूमध्यपरत्वेन तैरेव व्याख्यातत्वात्। सुधासूतिं चन्द्रम्। यादिवर्णचतुष्टयैः यरलवैः सहितम्। संख्याया अवयवे तयप्। अवयवाभिप्रायेणैव बहुवचनम्। भूपुत्रं मङ्गलम्। कवर्गाधिपतिमिति तु कवर्गसाहित्यध्वननाय। एवमग्रे। हृदयोपरि कण्ठकूपाधः। हृदयाधो बुध इति तु तन्त्रान्तरे। शादिचतुर्वर्णैः शषसहैः। क्षकारसहितमिति, पायौ गुदे, तन्त्रान्तरे तु लकारक्षकाराभ्यां योग उक्तः। यदि पुनस्तन्त्रान्तरानुगुण्याय प्रकृततन्त्रस्थः क्षकारो लकारस्याप्युपलक्षणपरत्वेन व्याख्यायते तदा नक्षत्रन्यासे "क्षकारेण ततो बिन्दुविसर्गाभ्याञ्च रेवती" इति ज्ञानार्णववचनेऽपि तुल्यन्यायेन तन्त्रान्तरानुगुण्याय क्षकारस्य लकारोपलक्षणपरत्वावश्यकतया "लं क्षं अं अः रेवत्यै नमः" इति पद्धतिकाराणां लेखो निर्मूल इति सुन्दरीमहोदयोक्तिरनादर्तव्या। अत्र अं आं० सूर्याय नमः, हृदयाध इत्यादिरीत्या प्रयोगविधिरूहनीयः॥ २१–२५॥

ज्ञानार्णवे सूर्यादीनां रूपाणि ध्येयत्वेनोक्तानि। तत्र सूर्यमङ्गलौ रक्तौ। चन्द्रशुक्रौ श्वेतौ। बुधः श्यामः। गुरुः पीतः। शनिः कृष्णः। राहुकेतू धूम्रवर्णाविति। एवं वामोरुन्यस्तवामकरा वरप्रदक्षिणकरा इति च। तन्त्रान्तरे तु रेणुकाऽमृता धात्री शङ्खिनी शाङ्करी ज्ञाना शक्तिः कृष्णा धूम्रा चेति शक्तिभिर्वराभयकराभिः साहित्यमुक्तम्। ज्ञानार्णवेऽपि क्वचिद् दृश्यते। तद्यथा—(रक्तामित्यादि)। धूम्रधूम्रमतिशयेन धूम्रमित्यर्थः। स्पष्टमन्यत्॥२६–२७॥

नक्षत्रन्यासमाह––(ललाटे इत्यादि)। नेत्रयोरित्यनुक्त्वा दक्षनेत्रे वाम इति विभज्योक्तिः क्रमनियमार्था। तेन कर्णद्वयादिपदद्वयान्तेषु प्रथमं दक्षः पश्चाद्वाम इति ज्ञेयम्। पश्चादिति पृष्ठ इत्यर्थः। कटिबन्ध इति यथैकस्य हस्तस्यैक एव मणिबन्धः, न तस्य दक्षवामभेदेन द्वैविध्यम्, तथा कटिबन्धोऽप्येक एवेत्याशयेनैकवचनम्। प्राञ्चस्त्वेकत्वमविवक्षितं कटिबन्धद्वय इत्येवार्थः। अन्यथा सप्तविंशतिसंख्यानुपपत्तिरित्यर्थः। तच्चिन्त्यम्, प्रत्युत कटिद्वैविध्येऽष्टाविंशतिसंख्यापत्तेः। न च पश्चात् कूर्परयुग्म इत्यत्र कूर्परपश्चाद्भागयोरित्यर्थस्य तदभिप्रेतत्वस्वीकारेण न संख्याविरोध इति वाच्यम्, हस्तमध्यस्थपुरोभागः सन्धिपदवाच्यः पश्चाद्भाग एव हि कूर्परपदवाच्य इति प्रसिद्ध्या पश्चात्पदस्य व्यावर्त्याभावात्।

से० अत एव बहिर्मातृकान्यासे दोःसन्धिष्वित्येव व्यवहारः। वक्ष्यमाणषोडशारचक्रन्यासे च कूर्परमित्येव व्यवहारो न तत्र विशेषणान्तरापेक्षा। तन्त्रान्तराविरोधायेदृश्येव क्लिष्टा व्याख्याश्रयणीयेति चेत्, अस्तु ॥ २८-२९ ॥

अथात्राक्षराणां विभज्य योजनामाह—(युग्ममित्यादि)। मातृकाक्रमात्स्वरान्ते विद्यमानावपि बिन्दुविसर्गौ तत उन्मूल्य क्षकारान्ते संयोज्य तेषां प्राथमिकं युग्मम् अं आं इत्यश्विन्या आदौ पठनीयम्, तत एकम् इं भरण्याः, त्रयम् ईं उं ऊं कृत्तिकाया इत्यादि योजनीयम्। युग्मबिन्दुविसर्गैर्लं क्षं अं अः इति चतुर्भिर्युक्ता रेवतीत्यर्थः। एकादशस्वेकैकाक्षरस्य योगः। दशसु द्वयोर्द्वयोरक्षरयोः। चतुर्षु त्रयाणां त्रयाणामक्षराणाम्, नक्षत्रद्वये चतुश्चतुर्णामिति विवेकः। ज्ञानार्णवे तु भरणीकृत्तिकयोर्द्वे द्वे अक्षरे उक्ते इति विशेषः। रेवत्यां क्षकारोक्तिर्लकारोपलक्षणमिति तूक्तमेव। इदञ्च सार्धं श्लोकद्वयं क्वचित्पुस्तकेषु न दृश्यते ॥३०-३२॥

अथ नक्षत्राणां ध्यानमाह—(ज्वलदित्यादि)। वराभयनतिपाण्य इत्यनेन चतुर्भुजतोक्ता। "कृदिकारादक्तिनः" इति ङीप्। अं आं अश्विन्यै नम इत्यादिः प्रयोगः ॥ ३३ ॥

**विशुद्धौ हृदये नाभौ स्वाधिष्ठाने च मूलके।**
**आज्ञायां धातुनाथाश्च न्यस्तव्या डादिदेवताः ॥ ३३ ॥**
**अमृतादियुताः सम्यङ्न्यस्तव्याश्च[1] सुरेश्वरि।**
**पादे लिङ्गे च कुक्षौ च हृदये बाहुमूलयोः[2] ॥ ३४ ॥**
**दक्षिणं पाद[3]मारभ्य वामपादा[4]वसानकम्।**
**मेषादिराशयो वर्णैर्न्यस्तव्याः सह पार्वति ॥ ३५ ॥**
**([5]चतुष्कं त्रितयं त्रीणि द्वितयं द्वितयं द्वयम्।**
**पञ्चकं पञ्चकं पञ्च पञ्चकं पञ्चकं ततः ॥**
**चत्वारि मेरुमीने स्युः कन्यायां पञ्च शादयः।)**

**(दी०) योगिनीन्यासमाह—विशुद्धाविति। विशुद्धौ तालुमूले षोडशदलकमले हृदयेऽनाहते द्वादशदलकमले नाभौ मणिपूरके दशदलकमले**

१. सम्यग् ध्यातव्याश्च—ख० से०। २. मस्तके—ख०, मूलके—से०। ३. पार्श्वं—क०। ४. पार्श्वा—क०। ५. कोष्ठान्तर्गतं नास्ति दीपिकायाम्।

स्वाधिष्ठाने षड्दलकमले मूलके चतुर्दलकमले आज्ञायां द्विदलकमले दी· धातवस्त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणि। तेषां नाथाः स्वामिन्यो[1]डादि-देवता डाकिनीराकिनोलाकिनीकाकिनीसाकिनीहाकिन्यः। अमृतादि-युताः स्वच्छन्दसंग्रहोक्ताः। [2]यथा—

अमृता प्रथमा देवी द्वितीया कर्षिणी मता।
इन्द्राणी तु तृतीया स्यादीशानी तु चतुर्थिका॥
पञ्चमी स्यादुमा देवी षष्ठी चैवोर्ध्वकेशनी।
सप्तमी ऋद्धिदा[3] प्रोक्ता लृषा चाष्टमिका मता॥
लृका नवमिका प्रोक्ता लृषा स्याद्दशमी मता।
एकादशी यथा[4] चैकपादा द्वादशिका, शिवे॥
ऐश्वर्याभिरता पश्चादोङ्कारी तु त्रयोदशी।
चतुर्दशी [5]चौषधात्मा पञ्चाधिकदशाम्बिका॥
षोडशी त्वत्तरा देवी प्रोक्ताः षोडश [6]शक्तयः।
कालरात्रिश्च खातीता गायत्री च ततः परम्॥
घण्टाधारी च ङार्णात्मा चण्डा छाया जयापि च।
झङ्कारी ज्ञानरूपा च टङ्कहस्ता ततः परम्॥
ठङ्कारी द्वादश ह्येता द्वादशारे समर्चयेत्।
डाकिनीं[7] चैव ढङ्कारीं णामिनीं[8] तामसीं तथा॥
स्थाण्वीं दाक्षायणीं चैव धात्रीं नन्दां च पार्वति!।
फट्कारीं[9] दशपत्रेषु पूर्वादीशान्तिकं यजेत्[10]॥
बन्धिनीं भद्रकालीं च महामायां यशस्विनीम्।
रक्तां लम्बोष्ठिकां चैव पूजयेत् क्रमशः प्रिये[11]॥
[12]चतुष्पत्रे च देवेशि! वरदां च श्रियं तथा।
षण्ढां सरस्वतीं चैव पूजयेत् क्रमशः शिवे!॥
क्षमां हासवतीं चैव पूजयेच्च द्विपत्रयोः[13]।
एताभिः शक्तिभिर्युक्ता[14] ध्यातव्याश्च सुरेश्वरि!॥

---

१. डाकिन्यादि—क० । २. यथा—क० नास्ति । ३. ऋक्मिका—ख० । ४. तु सा—ख० । ५. दंश्यौषधात्मा च—ख० । ६. कण्ठगाः—ख० । ७. डामर्वी—ख० । ८. णामनीं—ख० । ९. फेङ्कारीं—ख० । १०. 'इति' इत्यधिकः पाठः—ख० । ११. शिवे-ख० । १२. चतुष्पत्रेषु—ख० । १३. द्विपत्रके—ख० । १४. शक्तियुक्ताभिः—ख० ।

दी० न्यासं निवर्तयेदित्ययमान्तरो न्यासः[1]। ध्यान[2]मागमान्तरादवगन्तव्यम् ॥३३-३४॥

राशिन्यासमाह—दक्षिणमिति।

पादादिस्थानेषु दक्षिणादितो वामान्तम्। मेषादिराशयो मेषादिमीनान्ताः मेषवृष[3]मिथुनकर्क[4]सिंहकन्यातुलावृश्चिकधनुर्मकरकुम्भमीनाः। वर्णैर्मातृकाक्षरैः सह न्यस्तव्याः। राशीनां वर्णा आगमान्तरसंवादात्[5] मयोच्यन्ते।

आद्यैश्चतुर्भिः सहितो मेषो दक्षपदे स्वरैः[6]॥
उकाराद्यैस्त्रिभिर्वर्णैर्वृषभो लिङ्गदक्षिणे।
ऋकाराद्यैस्त्रिभिर्वर्णैर्मिथुन कुक्षिदक्षिणे॥
एऐभ्यां कर्कटो राशिर्युक्तो[7]वक्षसि दक्षिणे।
ओऔभ्यां सहितः सिंहो दक्षिणे बाहुमूलके॥
अंअः[8]शवर्गकैः कन्या शिरो[9]दक्षिणभागतः।
कवर्गेण तुलामूर्ध्नि वामे तद्बाहुमूलके॥
वृश्चिकश्च चवर्गेण टवर्गेण धनुर्हृदि।
वामे तवर्गसंयुक्तो मकरः कुक्षिवामतः॥
पवर्गेण पुनः कुम्भो लिङ्गवामप्रदेशतः।
यवर्गः क्षार्णसंयुक्तो मीनाख्यो[10] वामपादके॥३५॥

(से०) अथ योगिनीन्यासमाह—(विशुद्धावित्यादि)। विशुद्धौ कण्ठे। मूलञ्च कञ्च तयोः समाहारो मूलकम्। प्राण्यङ्गत्वादेकवद्भावः। मूलाधारे ब्रह्मरन्ध्रे चेत्यर्थः। आज्ञायां भ्रूमध्ये। धातूनां त्वगसृङ्मांसमेदोऽस्थिमज्जशुक्राणां नाथाः स्वामिन्यः। डादिदेवता डाकिनीराकिणीलाकिनीकाकिनीसाकिनीहाकिनीयाकिन्यः सप्त। अमृतादीत्यादिपदेनाकर्षिण्यादिपरिग्रहः। ताभिर्युता न्यस्तव्याः। प्रधानदेवतां डाकिन्यादिकां मध्येकर्णिकं विन्यस्य तद्दलेष्वमृतादीन्न्यसेदित्यर्थः। ध्यातव्याः। तन्त्रान्तरोक्तरीत्येति शेषः। यद्यपि प्रकृततन्त्रे रुद्रयामलतन्त्रे तु क्रमं प्रोक्तमिति पूर्वत्र कथनादस्मिन्नर्थेऽपि तत्रत्यैव रीतिरनुसर्तुं युक्ता, तथापि काम्यचक्रार्चन-

---

१. न्यासं निवर्त्य। एवं मातरो ध्यातव्याः। अपीत्यर्थः। ध्यानं निवर्त्यायमान्तरो न्यास इत्यर्थः—ख०। २. ध्यानं त्वागमान्तरा—ख०। ३. वृषभ—ख०। ४. कर्क—क० नास्ति। ५. आगमान्तरोक्तत्वात्—क०। ६. अक्षरैः—ख०। ७. युतो—ख०। ८. श—क० नास्ति। ९. शिखा—ख०। १०. मीनः स्यात्—ख०।

काम्यहोमादिषु बहुषु ज्ञानार्णवसंवादस्यैव दर्शनान्महाज्ञानार्णवे दृष्टः "शङ्का तत्र न पार्वति" इत्यादौ तत्सम्मतेरपि निर्देशात्तदुक्तरीत्यैव योगिनीर्विन्यस्य तत्रानुक्ता अप्यमृतादिका विशिष्वेह कथितत्वाद्विन्यसेदिति भावः। तत्र डाकिनीमन्त्रोद्धारो यथा ज्ञानार्णवे— से०

डांडींबीजद्वयं चोक्त्वा डमला वरयाः प्रिये।
वामकर्णेन्दुनादाढ्या डाकिन्यै नम इत्यपि॥
ह्रीं श्रीं स्वरान्ते वक्तव्यं मान्ते रक्षपदद्वयम्।
त्वगात्मने कण्ठदेशे विशुद्धौ विन्यसेत् प्रिये॥ इति।

अस्यार्थः—डमलवरया इति कूटम्। वामकर्णः षष्ठः स्वरः। इन्दुरनुस्वारः। स्वरान्ते षोडश स्वरानुच्चार्य, मा इत्यस्मच्छब्दद्वितीयैकवचनम्। तदन्ते रक्षेतिपदं द्विरुच्चरेत्। त्वगात्मने इति चतुर्थीबलान्नम इतिपदं सर्वन्यास साधारणमाक्षिप्यते। तथा च डांडींडमलवरयूं डाकिन्यै नमो ह्रीं श्रीं अं आं मां रक्ष रक्ष त्वगात्मने नम इति मन्त्रः सिध्यति। अनेन मन्त्रेण कण्ठस्थषोडशदलकर्णिकायां डाकिनीं विन्यस्य तद्दलेष्वन्तर्मातृकान्यासवदमृतादिषोडशदेवता एकैकस्वरयुता न्यसेत्। तस्या ध्यानं यथा सहस्रनामसु—

विशुद्धिचक्रनिलया रक्तवर्णा त्रिलोचना।
खट्वाङ्गादिप्रहरणा वदनैकसमन्विता॥
पायसान्नप्रिया त्वक्स्था पशुलोकभयङ्करी।
अमृतादिमहाशक्तिसंवृता डाकिनीश्वरी॥

अमृता, आकर्षिणी इन्द्राणी, ईशानी, उमा, ऊर्ध्वकेशी, ऋद्धिदा, ॠकारा, ऌकारा, ॡकारा, एकपदा, ऐश्वर्यात्मिका, ओङ्कारी, औषधी, अम्बिका, अक्षरा। एता अमृताद्याः। केचित्तु स्वरान्तं यथापूर्वं पठित्वा त्वगात्मानं मां रक्ष रक्ष नम इति मन्त्रं पठन्तस्तत्र प्रमाणं स्वगुरुसङ्केत एवेत्याहुः। अत्रैव मन्त्र आदिमडकारत्रये डाकिनीडकारे चेति रेफचतुष्टयं स्वरस्थाने ककारादिठकारान्ता वर्णाः, त्वक्पदस्थानेऽसृक्पदं चेद्राकिणीमन्त्रः। लकारचतुष्टयं डादिफान्ता मांसपदं चेल्लाकिन्याः। कचतुष्कं बादिलान्ता मेदःपदं चेत्काकिन्याः। सचतुष्कं वशषसा अस्थिपदं चेत्साकिन्याः। एता अनाहतमणिपूरस्वाधिष्ठानमूलाधारेषु न्यस्तव्याः। हचतुष्टयं हक्षौ मज्जपदं चेद्धाकिन्याः। इयञ्च भ्रूमध्ये। यकारचतुष्कं पञ्चाशद्वर्णाः शुक्रपदं चेद्याकिन्याः। एषा ब्रह्मरन्ध्रे न्यस्तव्या। आसां धातुनाथानां तत्र तत्रैवावस्थानात्। अत एव मूले मूलके इति क्रमो न

मं० विवक्षितः। कालरात्र्यादिदेवताः स्वच्छन्दादितन्त्रोक्ताः प्राचां टीकातो ग्राह्याः। राकिण्यादीनां ध्यानानि सहस्रनामसु विद्यमानानि तद्भाष्येऽस्माभिर्विवृतानि। यत्तु—नव्या मज्जदेवता हाकिनी ब्रह्मरन्ध्र न्यस्तव्या न भ्रूमध्ये। शुक्रदेवताया याकिन्या न्यासे प्रमाणमेव नास्ति। अत एव सुभगाचारत्नादिषु तदनुक्तिरित्याहुः। तच्चिन्त्यम्, प्रकृततन्त्र आज्ञायामितिपदस्य निर्विषयत्वापत्तेः। यत्तु ज्ञानार्णवे वचनम्—

हक्षवर्णस्थितां तद्वद्धाकिनीं विन्यसेत् क्रमात्।
ब्रह्मरन्ध्रे महेशानि न्यासोऽयं योगिनीयुतः॥

इति, तत्र हाकिनीमन्त्रकल्पनाया इव स्थानकल्पनाया अपि तद्वदितिपदेनैव लाभात्, यथा डाकिन्यादिपञ्चकस्य स्वस्वमन्त्रघटकाक्षराधारचक्रेषु न्यासस्तद्वदेव हाकिनीमन्त्रघटकहकारक्षकाराधारद्विदलचक्रे न्यास इति तदर्थात्। तन्त्रान्तरे स्मृतस्याज्ञायामित्येतत्पदस्यानुरोधेन तथैव कल्पनाया युक्तत्वात्। न च ब्रह्मरन्ध्रपदस्यैव तन्त्रान्तरवशादाज्ञाचक्रपरत्वेन व्याख्याऽस्त्विति वाच्यम्, सामान्यस्यैव विशेषेणोपसंहाराद्विशेषस्य विशेषान्तरपरत्वे विनिगमनाविरहेण वैपरीत्यस्याप्यापत्तेः। ततश्च ब्रह्मरन्ध्र इति पदस्यानन्वयापत्त्या तदाकाङ्क्षया तद्वत्क्रमाद्विन्यसेदितिपदत्रयानुवृत्त्या याकिनीं पूर्वोक्तवर्णानां समस्तानां क्रमेण युक्तां तद्वदेव मन्त्रसहितां ब्रह्मरन्ध्रे विन्यसेदित्यर्थो वर्णनीयः। अत्र च सर्वतो विशुद्धिचक्रनिलयेत्यादीनि याकिन्यम्बास्वरूपिणीत्यन्तानि ललितानामान्येव तात्पर्यग्राहकाणि। नन्वेतेषु नामसु सप्तानां योगिनीनां साक्षरस्थानावरणानां कथनमात्रेण न्यासविधेरभावात्कथं तदनुरोधेन न्यासविधेरन्यथानयनमिति चेत्, तुल्योऽयं पर्यनुयोगस्तवापि। वक्ष्यमाणैकपञ्चाशत्पीठन्यास "प्राणेश्वरी प्राणदात्री पञ्चाशत्पीठरूपिणी" इति ललितानामसु पाठबलादेकस्य पीठस्य लोपितत्वात्। "शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीयः" इत्य[त्र] विधिवाक्यस्य प्रधानत्रयपाठमात्रेणोपांशुयाजस्य प्राधान्यनिर्णयदर्शनेन स्वस्वाधिष्ठितचक्रन्यसनीयडाकिन्यादिप्रायपाठबलादेव हाकिन्या भ्रूमध्ये न्यासो याकिन्या ब्रह्मरन्ध्र इति निर्णेतु युक्तत्वाच्च। "यत्प्राये पठितं यच्च तत्तादृगवगम्यते" इति न्यायात्। अत एव प्रकृततन्त्रे मूलक इत्यत्र ककारो ब्रह्मरन्ध्रपरत्वेन व्याख्येयो न प्राचीनैरिव स्वार्थकप्रत्ययाभिप्रायेण। न चेयं व्याख्या क्लिष्टेति मन्तव्यम्, उत्तरत्र राशिन्यासे बाहुमूलक इतिपद ईदृश्या एव व्याख्यायाः सर्वसम्मतत्वेन क्लृप्ततया नाथ( बाध )काभावात्, महा-

पीठान्यासान्तर्गतभुवनन्यासे डाकिन्यादीनां सप्तानां न्यासस्य क्लृप्ततया प्रकृते से० डादिदेवता इत्यादिपदेन सर्वासां तासामुपस्थित्यनुसारेणापाततः क्लेशस्य मोढव्यत्वाच्च। न चैवं सति कौलिकार्थप्रकरणे "त्वगादिधातुनाथाभिर्डाकिन्यादिभिरप्यसौ" इत्यत्रापि सप्तानामेव ग्रहणापत्तिरिति वाच्यम्, 'शाक्तैः षड्भिरथाक्षरैः" इत्यादिज्ञापकेन तत्र तथात्वेऽपि प्रकृते तन्त्रान्तरोक्तसप्तयोगिनीन्यासानुरोधेनैवमेव व्याख्यातुं युक्तत्वात्। एतेन बहूनां पद्धतिकाराणामेकवाक्यता सम्पद्यत इति तद्विरोधात् सुभगाचार्योक्तिरेव नाऽऽदर्तव्येति दिक् ॥ ३४ ३५ ॥

अथ राशिन्यासमाह—(पादे इत्यादि)। बाहुमूलं कक्ष तयोः समाहारस्तस्मिन् कक्षे मूर्ध्नि चेत्यर्थः। इमान्येव पादादिमूर्धान्तानि षट्स्थानानि वैपरीत्येनापि योज्यानीत्याह—दक्षिणमिति। मेषादित्यादिपदेन वृषभादिपरिग्रहः। वर्णैरिति रूपविशेषैरुपलक्षिता इत्यर्थः। रक्तश्वेतहरित्पाण्डुचित्रकृष्णपिशङ्गपिङ्गलबभ्रुकिर्मीरकृष्णधूम्राभान् क्रमेण ध्यात्वेति यावत्। अक्षरैः सहिता इत्यर्थ इति केचित् ॥ ३६ ॥

अथ तत्र योजनीयानि मातृकाक्षराणि क्रमेणाह—(चतुष्कमित्यादि)। कर्कसिंहयोर्द्वे द्वे अक्षरे। वृषभमिथुनयोस्त्रीणि त्रीण्यक्षराणि। मेषे चत्वारि। अन्येषु सप्तसु तु राशिषु पञ्च पञ्च। तेष्वेव कन्यायां तु द्वयमधिकं बिन्दुविसर्गौ शादयश्चेत्यर्थः। मेरुः क्षकारः, क्षकाराधिकारे "वर्णान्तो मेरुरेव च" इति कोशात्। ज्ञानार्णवे तु वृषभे द्वे अक्षरे मिथुने चत्वारि कन्यायां लकारो नास्तीति विशेषः। अं आं इं ईं मेषाय नमः" इत्यादिः प्रयोगः। अयं सार्धश्लोको नक्षत्रीयं सार्धश्लोकद्वयञ्च शास्त्रारम्भश्लोकव्याख्यावसर एव व्याख्यातमस्माभिः ॥३७-३८॥

**पिठानि[1] विन्यसेद्देवि मातृकास्थानके पुनः[2] ।**
**तेषां नामानि वक्ष्यन्ते[3] श‍ृणुष्वावहिता प्रिये ॥ ३९ ॥**
**कामरूपं वाराणसी नेपालं पौण्ड्रवर्धनम् ।**
**चर[4]स्थिरं कान्यकुब्जं पूर्णशैलं तथार्बुदम् ॥ ३७ ॥**

---

१. पीठांस्तु—ख० से०। २. प्रिये–से०। 'इति' इत्यधिकः पाठः—ख०। ३. कथ्यन्ते—ख०से०। ४. पुर—ख०से०।

आम्रातकेश्वरैकाम्रं त्रिस्रोतः कामकोटकम् ।
कैलासं भृगुनगरं केदारपूर्णचन्द्रके[1] ॥ ३८ ॥
श्रीपीठमोङ्कारपीठं जालन्ध्रं[2] मालवोत्कले ।
[3]कुलान्तं [4]देविकोटं च गोकर्णं मारुतेश्वरम् ॥ ३९ ॥
अट्टहासं च विरजं [5]राजगेहं महापथम् ।
[6]कोलापुरं[7]मेलापुरं ओङ्कारन्तु जयन्तिका ॥ ४० ॥
[8]उज्जयिन्यपि चित्रा च क्षीरकं हस्तिनापुरम् ।
ओड्डीशं [9]च प्रयागाख्यं षष्ठं मायापुरं तथा ॥ ४१ ॥
जलेशं मलयं शैलं मेरुं गिरिवरं तथा ।
महेन्द्रं वामनं चैव हिरण्यपुरमेव च ॥ ४२ ॥
महालक्ष्मीपुरोड्याणं[10] छायाछत्रमतः परम् ।
एते पीठाः समुद्दिष्टा मातृकारूपकाः स्थिताः[11] ॥ ४३ ॥

(दी०) पीठन्यासमाह—पीठानीति । मातृकास्थानमिति जातावेकवचनम्[12]। वैखरीवर्णस्थानके[13]ष्वित्यर्थः। ननु कानि तानि पीठानीत्यत आह—बहुत्वात् पीठानां नाम्नां[14] वक्तुमशक्यत्वादत्यन्त[15]सावधाना भवेत्यर्थः। तन्नामान्याह—एते पीठाः समुद्दिष्टा गृहीतनामानः पीठाः[16]। मातृकारूपकाः स्थिता[17] मातृका रूपं येषां[18] ते मातृकारूपकाः। क्रमेणादिक्षान्तानामेकैकं वर्णमेकैकस्यादावुक्त्वा तत्स्थानं त[19]द्वर्णस्थानेषु पीठन्यासं कुर्यादित्यर्थः। ( पी[20]ठानां मातृकामयताकथनं गणेशादीनामप्युपलक्षणम् । वर्गवर्णानामादौ वैखर्याक्षरण्यागमान्तरसंवादाद्विभज्य योज्यानीत्यर्थः )॥ ३६–४३ ॥

---

१. चन्द्रपुष्करम्–ख०से०। २. जालाख्यं–ख० से०। ३. कुलूनं–क०, मालवं तथा–से०। कुलान्तकम्–से०। ४. कोठ्यं–ख०। ५. राजगृहं–ख०। ६. कोल्लगिरि–ख०। ७. कालेशं च–ख० से०। ८. उज्जयनी विचित्रं च–ख० से०। ९. उड्डीशं–ख० से०। १०. ड्याणो–ख०। ११. पुरा–ख०। १२. एकत्वम्–ख०। १३. स्थानेषु–ख०। १४. पीठनाम्नां–ख०। १५. अत्यन्त–ख० नास्ति। १६. 'एते पीठाः' इत्यंशो नास्ति–ख०। १७. 'पीठाः' इत्यधिकः पाठः–ख०। १८. एषां–ख०। १९. तत्स्थानेषु–ख०। २०. कंसान्तर्गता ग्रन्थो नास्ति–ख०।

(से०)अथाष्टभिः श्लोकैः पीठन्यासमाह—(पीठानित्यादि)। मातृकास्थानक इत्युपक्रमेण मातृकारूपका इत्युपसंहारेण च पीठानामेकपञ्चाशत्संख्यता सूचिता, बहिर्मातृकान्यासस्थानानां तावत्संख्यत्वात्। अत एव स्पष्टतरमुक्तं ब्रह्माण्डपुराणे—"ततः पञ्चाशदेकञ्च पीठानां विन्यसेत् क्रमात्" इत्यारभ्य "लिपिक्रमसमायुक्ताँल्लिपिस्थानेषु विन्यसेत्" इत्यन्तम्। तत्प्रकारश्चेत्थम्—आम्रातकेश्वरैकाम्रमित्यत्र समाहारद्वन्द्वस्वीकारात् पीठद्वयम्। एवं महालक्ष्मीपुरोड्यानमित्यत्रापि। "मलयः शैलो मेरुर्गिरिवरः" इत्यत्र शैलगिरिवरशब्दौ न मलयमेरुविशेषणम्, अपि तु पार्थक्येन पीठद्वयप्रतिपादकौ। तत्र निरुपपदशैलनामकः पीठो दक्षिणापथे श्रीशैल इति प्रसिद्धः। गिरिवरनामकस्तु प्रतीच्यां सौराष्ट्रदेशे गिरिनाथ इति प्रसिद्धः। यत्तु ज्ञानार्णवे पञ्चाशत्पीठसञ्चयानित्युपक्रमे पञ्चाशत्पीठविन्यासं मातृकायाः स्थले न्यसेदित्युपसंहारे च वचनं तत्र पञ्चाशच्छब्दोऽप्येकपञ्चाशत्परः, सामीप्यसंबन्धेन लक्षणासम्भवात्। बहिर्मातृकान्यासध्यानश्लोके पञ्चाशद्वर्णरूपाढ्यामिति ज्ञानार्णवीये पञ्चाशल्लिपिभिर्विभक्तमुखदोरित्यादौ पञ्चाशद्वर्णभेदैर्विहितवदनदोरित्यादौ च तथा लक्षणाया दृष्टत्वात्। अत एव "नित्यानन्दवपुर्निरन्तरगलत्पञ्चाशद्वर्णैः क्रमात्" इति शारदातिलकप्रथमश्लोके पञ्चाशत्पदमेकपञ्चाशत्परं सङ्ख्याया नैकट्यादिति टीकाकृतो व्याचक्षते। ततश्च "मलयश्च महापीठः श्रीशैलो मेरुको गिरिः" इति ज्ञानार्णववचनेऽपि मेरुपर्वत इत्यनुक्तिस्वारस्याद् गिरिपदस्यैव प्रयोगानुगुण्याय कप्रत्ययप्रयोगाच्च गिरिरिति भिन्नमेव व्याख्येयम्। सुभगार्चारत्नादिपद्धतिषु तथैव। लं मेरुगिरिपीठायेति प्रयोगं वदन्तो नव्याः साहसे प्रवृत्ता वा भ्रान्ता वेदितव्याः। केचित्तु "कालेश्वरं महापीठं प्रणवञ्च जयान्तिका" इति ज्ञानार्णवं पठन्तः प्रणवाख्यपीठेन सहैकपञ्चाशत्त्वमाहुः। अन्ये तु प्रणवपदं परित्यज्य महापीठपदमेव द्विरुच्चारयन्ति। एतेन पञ्चाशदेव पीठा इति निश्चित्य [ क्षकारस्य ] लकारस्यैव वा परित्याग इति परतनं( स्परं ) विवदमाना अपि परास्ता वेदितव्याः। ये तु नव्या ज्ञानार्णवे "मातृकायाः स्थले न्यसेत्" इत्येवोक्तेर्ग्रहन्यासकामरतिन्यासयोर्मातृकार्णैर्न्यसेद्देवीतिवद्वर्णसाहित्यस्याकथनाद्वर्णयोगोऽपि यावद्वचनदर्शनं लुप्यत इति पक्षान्तरमाहुस्ते लिपिक्रमसमायुक्तानिति ब्रह्माण्डपुराणीयं वचनं स्वयं विलिख्यापि कथं व्यस्मार्षुरित्याश्चर्यमिति दिक्। अं कामरूपाय नम इत्यादिः प्रयोगः। कामरूपपीठायेति पीठपदशिरस्कान्येव नामानि बहव ऐक्यकण्ठ्येन लिखन्ति, तेऽश्विनीनक्षत्राय मेषराशय इत्यादि कुतो नोल्लिखन्तीति वैषम्ये बीजं प्रष्टव्याः॥ ३९–४६॥

एवं षोढा पुरः[1] कृत्वा श्रीचक्रन्यासमाचरेत् ।
[2]श्रीमत्त्रिपुरसुन्दर्याश्चक्रन्यासं शृणु प्रिये ॥ ४४ ॥
यन्न कस्यचिदाख्यातं तनुशुद्धिकरं परम् ।

(दी०) षोढान्यासानन्तरं श्रीचक्रन्यासस्याऽवश्यम्भावित्वात्तदिदानीं श्रीचक्रन्यास[3]माह—एवमिति । एवमुक्तप्रकारेण । षोढा षट्प्रकार-न्यासं [4]पुरः कृत्वा पश्चात्[5] श्रीचक्रन्यासमार[6]भेदित्यर्थः ।

श्रीचक्रन्यासस्य महाप्रयोजनत्वादनन्यकथितमप्यद्य प्रियायै कथया-मीत्याह—श्रीमदिति ।

आनन्द[7]कणभिक्षार्थं शब्दस्पर्शादिपकणे[8] ।
[9]अटत्यविरतं येन तद्दारिद्र्यं विदुर्बुधाः ॥

इत्यभियुक्तवचनोक्तरीत्या सङ्कोचलक्षणदारिद्र्यविघातिनी[10]परि-पूर्णपरानन्दरूपा सम्पत् श्रीरित्युच्यते । तद्वती त्रिपुरसुन्दरी । त्रिपुर-[11]तुरीयरूपत्वात् सुन्दरी । भेदलक्षणप्रपञ्चापरपर्यायपर[12]दौर्भाग्यपरि-पन्थिपरमाद्वैतसौभाग्यपदाधिरूढा सर्वप्राणिष्वा[13]त्मतया परम[14]प्रेमा-स्पदीभूता परचित्कला । तस्याश्चक्रं शिवादिक्षितिपर्यन्तं [15]तत्त्वमयं तदाविर्भावभूमिः । न्यासं शृणु प्रिये मम प्रियायै मदेकरसस्य लालसायै कथयामि । तस्य यन्न कस्यचिदाख्यातमि[16]ति रहस्यत्वात् । (श्रीचक्र-[17]न्यासस्य महाप्रयोजनत्वात् । अनन्यकथितमपि प्रियायै ते कथया-मीत्यर्थः । ) तनुशुद्धिकरं परम् । तनोः षट्त्रिंशत्तत्वात्मनः शुद्धिं पर-चित्पर्यवसानलक्षणां करोति, अत एव परमुत्कृष्टमितरन्यासेभ्यः ।

(से०) षोढान्यासोपसंहारपूर्वकं चक्रन्यासं विधत्ते—(एवमित्यादि) । षोढा-शब्दस्तत्प्रख्यन्यायेन कर्मनामधेयमित्युक्तम् । अत एव षट्प्रकारार्थकत्वाभावेना-व्ययसंज्ञाविरहेण षोढामिति द्वितीयैकवचनस्य लोपाभावः । आर्षो वा सः ।

---

१. पुरा—ख० से० । २. महात्रिपुर—से० । ३. अवश्यम्भावित्वात् श्रीचक्रन्यासस्य—ख० । ४. पुरा—ख० । ५. पश्चात्—ख० नास्ति । ६. चरेत्—ख० । ७. कन्द—ख० । ८. कारणे—ख० । ९. उपेत्य—ख० । १०. निवर्तिनी—ख० । ११. त्रिरूपभेद—क० । १२. परम—ख० । १३. स्वा—क० । १४. म—ख० नास्ति । १५. तत्त्वचक्रमयं तदविनाभा—ख० । १६. म—ख० । १७. कंसान्तर्गतो ग्रन्थः—ख० नास्ति ।

पाठेनैव पौर्वापर्यस्य सिद्धावपि कृत्वेति त्वाश्रुतिस्तु पूजाकाले विहितयाश्चक्रे- से०
श्वरीन्यासयोरव्यवधायकत्वलाभार्था, अन्यथाणिमादिन्यासस्यापि पूजाकाल एव विधास्यमानतया पौर्वापर्ये विनिगमनाविरहेण पाक्षिकस्य चक्रेश्वरीन्यासद्वयानन्तर्यस्याप्यापत्तेः। चक्रन्यासशब्दोऽपि वक्ष्यमाणावान्तरन्यासनवकसमूहवाचकः। स च यद्यपि अणिमादिन्यासमूलदेव्यादिन्यासभेदेन संहृतिसृष्टिरूपो द्विप्रकारो वक्ष्यते तथापि पूजाक्रमानुगुण्याच्चक्रन्यास शृणु वति प्रतिज्ञायाणिमादेरेव कथनादि(दा)द्य एक एव चक्रन्यासः। अन्यस्त्वस्यैवावृत्तिरवान्तरन्यासनवकस्य व्युत्क्रमरूपगुणविशिष्टा। न चैवं सति गुणादुभयोः कर्मणोर्भेदापत्तिः चक्रन्यासविधावुभयोरपि कर्मणोरनाम्नानेनान्यतरस्याप्युत्पत्तिशिष्टत्वाभावात्। नापि संज्ञया भेदः, मूलदेव्यादिकाणिमादिरूपपदयोर्दार्भायणपदवद्यौगिकत्वात्। नाप्येवं चतुर्विधो न्यासः कर्तव्यो वीरवन्दित इति वक्ष्यमाणवचनोपात्तसंख्यया भेदः, तस्या उत्पद्यमानकर्मसामानाधिकरण्याभावेनैकादशप्रयाजानित्यादाविव भेदकत्वाभावात्। शब्दान्तराभ्यासप्रकरणान्तराणि त्वनाशङ्क्यान्येव। अत एव मूलदेव्यादिकं न्यासमणिमान्तं पुनर्न्यसेदिति द्वितीयवारन्यासारम्भे पुनःशब्द उपपद्यते, तस्य स्वरसत आवृत्तिबोधकत्वात्। एवं तन्त्रान्तरे विधीयमानः स्थितिचक्रन्यासोऽपि न कर्मान्तरम्। अत एव षोढाचक्रे न्यस्यान्यस्य वेति कल्पसूत्रे द्विवचनमुपपद्यते, कर्मान्तरत्वे बहुवचनापत्तेः। तस्मादेक एव चक्रन्यासो द्विरावर्तत इत्याशयेन प्रकृतविधावेकवचनमुपात्तम्। अन्यस्याकथितमपि प्रियत्वात्तुभ्यं कथयामीति ध्वनयितुं प्रिय इति सम्बुद्धिः परिकराङ्कुरालङ्कारार्था॥ ४७॥

**चतुरस्राद्यरेखायै नम इत्यादितो न्यसेत् ॥४५॥**
**दक्षांसपृष्ठपाण्यग्रस्फिक्[1]पादाङ्गुलीष्वथ ।**
**वामाङ्घ्र्य[2]ङ्गुलिषु स्फिक्के पाण्यग्रे चांसपृष्ठके॥४६॥**
**सचू[3]लीमूलपृष्ठेषु व्यापकत्वेन सुन्दरि ।**

(दी०)श्रीचक्रन्यासप्रकारमाह—चतुरेति। "चतुरस्राद्यरेखायै नमः" इति[4]मन्त्रेण आदितो दक्षांसपृष्ठादिचू[5]लिपृष्ठान्तस्थानेषु दशसु व्यापकत्वेन न्यसेत्। दक्षांसस्य पृष्ठं पश्चाद्भागः।

---

१. स्फिक्पादाग्राङ्गुलि–क०। २. वामाद्यङ्गु०–क०। ३. चूलि–ख०। ४. इत्यादि–ख०। ५. चूलिपृष्ठान्त–क० नास्ति।

दी० मू[1]लेति । मूलं–शिरसः पुरस्ताद्भागः । (पृष्ठं [2]शिरसः पश्चाद्भागः ।) स्फि[3]गेव स्फिकम् । स्पष्टमन्यत् ।

(से०)तत्र त्रैलोक्यमोहनचक्रन्यासस्य त्रीनवयवान् क्रमेणाह—(चतुरस्रेत्यादि)। अंसस्य भुजमूलस्य पृष्ठं पश्चाद्भाग एकं स्थानम् । पाणेरग्राण्यङ्गुल्यः । स्फिक्-मूरुसन्धिः । एतेषां समाहारद्वन्द्वस्तत्सहिताः पादाङ्गुल्य इति मध्यमपदलोपी समासः, ततो दक्षपदेन कर्मधारयः । तेनेमानि चत्वारि दक्षिणस्थानानि। एतान्येव व्युत्क्रमेण चत्वारि वामस्थानान्याह—वामेति । वामपदस्य समस्तस्याप्यन्येष्वार्थिकोऽन्वयः । चूलीमूलं शिखोत्पत्तिस्थानम् । पृष्ठ शरीरपश्चाद्भागः। शीर्षस्यैव पुरोभागपश्चाद्भागावित्यर्थ इति केचित् । ताभ्यां सहितेषु पूर्वस्थानेषु व्यापकं यथा भवति तथाऽञ्जलिना न्यसेदित्यन्वयः । एवं वक्ष्यमाणाश्चक्रन्यासयोर्व्यापकन्यासाः सर्वेऽपि तत्स्थानव्याप्तिमन्त एव कर्तव्याः ॥ ४८-४९ ॥

अत्रैव स्थानदशके अणि[4]माद्यास्तु विन्यसेत् ॥ ४७॥
सिद्धीस्तदन्तश्च तनुव्यापकत्वेन सुन्दरि ।
( चतुरस्रमध्यरेखायै नम इत्यपि वल्लभे । )
तस्याः स्थानेषु विन्यस्य ब्रह्माण्याद्यास्तदा[5]ष्टसु ॥४८॥
पादाङ्गुष्ठद्वये पार्श्वे दक्षे मूर्धन्य[6]पार्श्वके ।
वामदक्षिणजान्वोश्च बहिरंसद्वये तथा ॥ ४९ ॥

(दी०) एषु[7] स्थानेषु न्यस्तव्याः शक्तीराह—अत्रैवेति । अणिमालघिमामहिमेशिताप्राकाम्यमुक्तीच्छाप्राप्तिसर्वकामाख्याः सिद्धयोऽणि[8]माद्या दश ।

चतुरस्रमध्यरेखायां व्यापकमाह—तदन्तरिति ।

"चतुरस्रमध्यरेखायै नमः" इत्यादि वल्लभे विन्यसेत्[9] । तदन्तः सिद्धिस्थानानामन्तर्देशे 'चतुरस्रमध्यरेखायै नमः" इति[10]मन्त्रेण तनुव्यापकत्वेन विन्यसेदित्यर्थः[11] ।

---

१. सचूलिमूलेति–ख० । २. एतदन्तर्गतो ग्रन्थो नास्ति–ख० । ३. स्फिक्कमूरुसन्धिः–ख० । ४. दकेऽणिमाद्या दश वि०–ख०, ष्वाणिमाद्यादशन्य–से० । ५. तथा–ख०से० । ६. मूर्ध्नोऽन्य०–ख० । ७ येषु–क० । ८. 'णिमाद्या' इत्यधिकं–क० । ९. विन्यस्येति–ख० । १०. इत्यादि–ख० । ११. विन्यसेदित्यन्वयः–ख० ।

चतुरस्रमध्यरेखायां न्यस्तव्याः शक्तीराह—तस्या इति। तस्याः दी० चतुरस्रमध्यरेखायाः। अष्टस्थानेषु। ब्रह्माण्याद्या ब्रह्माणीमाहेश्वरीकौमारीवैष्णवीवाराहीन्द्राणीचामुण्डामहालक्ष्मीः। तथा विन्यसेदित्यन्वयः॥ ४८॥

तासां स्थानाष्टकमाह पादाङ्गुष्ठेति। स्पष्टम्॥ ४९॥

(से०) (अत्रैवेत्यादि)। दशकेष्विति स्वार्थे कः। अणिमाद्या इत्याद्यपदेन लघिमादिनवकस्य पूर्वचतुःशत्यामुक्तस्य परिग्रहः। तदन्तः दक्षांसपृष्ठादिम्य ईषत्पूर्वभागेषु मध्यरेखामन्त्रेण व्यापकन्यासं विधाय तस्या मध्यरेखाया अष्टसु स्थानेषु ब्राह्मयाद्या अष्टौ न्यस्तव्याः। तत्र पादाङ्गुष्ठद्वयं मिलित्वैकं स्थानम्। अंसद्वय इति तु द्वे स्थाने सम्प्रदायात्, दिक्चतुष्टयविदिक्चतुष्टययोरानुगुण्याच्च, पादाङ्गुष्ठद्वये चैव दक्षपार्श्वे च मस्तक इत्यारभ्य दक्षजानुनि दक्षांसे वामांसे च न्यसेत् क्रमादित्यन्तात्तन्त्रान्तराच्च। अन्यपार्श्वके वामपार्श्वे। जान्वोरित्यार्पं पुल्लिङ्गम्। बहिरिति तु काकाक्षिन्यायेनोभयत्राप्यन्वेतव्यम्। न्यस्तव्या इत्युत्तरश्लोकस्थस्यापकर्पः। चतुरस्रमध्यरेखाया इत्यत्रैकस्याक्षरस्याधिक्येऽपि न छन्दोभङ्ग इति वृत्तचन्द्रोदये पतिपादितमस्माभिः॥५०-५२॥

न्यस्तव्याश्चतुरस्रान्त्य[1]रेखायै नम इत्यपि।
विन्यसेद् व्यापकत्वेन पूर्वोक्तान्तश्च विग्रहे॥ ५०॥
तस्याः स्थानेषु दशसु मुद्राणां दशकं न्यसेत्।
ब्रह्माण्याद्यष्टस्थानान्तस्तासामष्टौ न्यसेत्ततः[2]॥ ५१॥
शिष्टे द्वे द्वादशान्ते च पादाङ्गुष्ठे च विन्यसेत्।

(दी०)चतुरस्रान्तर[3]रेखायां व्यापकमाह—न्यस्तव्या इति। "चतुरस्रान्तमध्यरेखायै नमः" इति मन्त्रेण। विग्रहे देहे। "पूर्वोक्तान्त पूर्वोक्तानां ब्राह्मयादिस्थानानामन्तर्देशेषु व्यापकत्वेन न्यस्तव्याः। न्यासयोगेन[5] न्यसेत्॥ ५०॥

१. चतुरस्रान्त–ख०। २. न्यसेदथ–ख० से०। ३. चतुरस्रान्त्यरेखाव्या- ख०। ४. पूर्वोक्तान्तश्च–क० नास्ति। ५. न्यासयोग। विन्यसेत्–ख०।

दी० तस्यां[1] चतुरस्रान्तरेखायां[2] न्यस्तव्याः शक्तीराह—तस्या इति। तस्याश्चतुरस्रान्तम[3]ध्यरेखायाः। दशसु स्थानेषु त्रिखण्डमुद्रासहितानां [4]सङ्क्षोभिण्यादिमुद्राणां दशकं न्यसेत्।

तासां स्थानान्याह—ब्रह्माण्यादीति। तासां मुद्राणां मध्ये अष्ट-[5]मुद्रा ब्रह्माण्याद्यष्टस्थानानामन्तर्देशेष्वष्टसु विन्यसेत्[6]। शिष्टे द्वे मुद्रे[7] द्वादशान्ते[8] पादाङ्गुष्ठे च विन्यसेत्। द्वादशान्तं षोडशान्तेन्दुमण्डलादधः सूर्यमण्डलस्थानम्। तदुक्तं श्रीस्वच्छन्दसंग्रहे—

षोडशान्तमिति ख्यातं व्योमस्थानेन्दुमण्डलम्।
[9]तदधः स्थानगं सूर्यबिम्बं द्वादशशक्तिकम्॥
द्वादशान्त[10]मिति ख्यातं स्थितं व्योमप्रदेशकम्।
इति[11] तेन बिन्दुतत्त्वं [12]चतुष्पत्राम्बुजं च तत्॥
सूर्यबिम्ब[13]मधश्चोर्ध्वं सार्धैकाङ्गुलिदेशतः।

इति[14] रीत्या ललाटस्थानबिन्दुतत्त्वोपरिस्थितं सूर्यमण्डलस्थानं ललाटोर्ध्वं द्वादशान्तपदेन लक्ष्यते

(से०) (न्यस्तव्या इत्यादि)। विग्रहे देहे। पूर्वोक्तानां पादाङ्गुष्ठद्वयादीनामन्तरवच्छेदेनान्त्यरेखाया मन्त्रेण व्यापकं विन्यसेत्। अथ तस्या रेखाया दशसु स्थानेषु दशमुद्रा न्यसेत्। अष्टसूक्तस्थानेषु दशानां न्यासः कथमित्याशङ्क्य समाधत्ते—ब्रह्माण्यादीति। अष्टसु स्थानेष्वष्टौ न्यसेत्। अवशिष्टद्वयं द्वादशान्ते पादाङ्गुष्ठद्वये च न्यसेदिति वाक्यचतुष्टये न्यसेदिति क्रियापदचतुष्टयस्यान्वयः। न्यस्तव्या इति क्रिया तु पूर्वत्रापकृष्टव्येत्युक्तम्। प्राञ्चस्तु—मध्यरेखान्यासविधिस्थं ब्रह्माण्याद्या इति पदं द्वितीयान्तमिति भ्राम्यन्तस्तत्रत्येन विन्यस्येति पदेनैवान्वयं प्रापय्यात्रत्यं न्यस्तव्या इति पदं न्यासयोग्यार्थकत्वेन न्यासार्हदेवता व्यापकत्वेन विन्यसेदिति व्याचक्षते। तन्न, मान्त्रवर्णिक्या रेखाया एव

१. तस्यां–ख० नास्ति। २. रेखास्थाने–ख०। ३. मध्य–ख० नास्ति। ४. त्रिखण्डमुद्रासहितसंक्षोभिण्यादिमुद्राद–ख०। ५. अष्टौ–ख०। ६. विन्यस्य–ख०। ७. मुद्रे–ख० नास्ति। ८. द्वादशान्तपादाङ्गुष्ठयोर्विः–ख०। ९. तथान्त–ख०। १०. द्वादशान्तं स्मृतं तेन–ख०। ११. इति–क० नास्ति। १२. चतुष्पत्राम्बुजमेतदित्यादि–क०। १३. सूर्यं बिन्दुमधश्चोर्ध्वं–ख०। १४. 'स्वच्छन्दसंग्रहोक्त' इत्यधिक–क०।

रेखान्यासे देवतात्वेन बहुवचनविरोधापत्तेः । अङ्गुलत्रिस्तृतस्य ललाटस्योर्ध्व- से०
प्रदेशो द्वादशान्तपदेनोच्यते, तत्र द्वादशकलात्मकसूर्यबिम्बस्य सत्त्वात् ,

षोडशान्तमिति ख्यातं सहस्रारेन्दुमण्डलम् ।
तदधःस्थानके सूर्यबिम्बं द्वादशशक्तिकम् ॥
द्वादशान्तं स्मृतं बिन्दोरूर्ध्वं सार्धाङ्गुलात्मकम् ॥

इत्युक्तेः । पादाङ्गुष्ठपदं विनिगमनाविरहात् पूर्वोपस्थितत्वाच्चाङ्गुष्ठद्वय-परम् ॥ ५३–५५ ॥

**तदन्तः षोडशदलपद्माय नम इत्यपि[1] ॥ ५२ ॥**
**विन्यस्य तद्दले कामाकर्षिण्याद्याश्च विन्यसेत् ।**
**दलानि दक्षिणश्रोत्रपृष्ठमंसं च कूर्परम् ॥ ५३ ॥**
**करपृष्ठं चोरुजानुगुल्फपादतलं तथा ।**
**वामपादतलाद्येवमेतदे[2]वाष्टकं मतम् ॥ ५४ ॥**

(दी०) षोडशदलपद्मव्यापकमाह—तदन्तरिति । तेषां चतुरस्राणाम् अन्तर्देशे "षोडशदलपद्माय नमः" इति मन्त्रेण दक्षिणश्रोत्रपृष्ठादि-स्थानानि संस्पृश्य व्यापकं विन्यसेदित्यर्थः।

तद्दलेषु न्यस्तव्याः शक्तीराह—तद्दले इति । तद्दले जातावेकवचनम्, तद्दलेषु । कामाकर्षिण्याद्याः कामबुद्ध्यहङ्कारशब्दस्पर्शरूपरसगन्ध-चित्तधैर्यस्मृतिनामबीजात्मामृतशरीराकर्षिण्यस्ताः । विन्यसेत् ।

तद्दलस्थानान्याह—दलानीति ।'दलानि' इत्यादि 'तथा' [3]इत्यन्तं स्पष्टम् । एवमुक्तप्रकारेण । वामपादतलादिवामश्रोत्रपृष्ठान्तमेतदेवाष्टकं मतम् । स्थानाष्टकद्वयं षोडशदलानीत्यर्थः ॥ ५१–५४ ॥

(से०) एवं त्रैलोक्यमोहनचक्रन्यासमुक्त्वा सर्वाशापरिपूरकचक्रन्यासमाह—( तदित्यादि ) । तस्याश्चतुरस्रान्त्यरेखाया अन्तर्मध्ये । तद्दले षोडशदलेषु । जातावेकवचनम् । कामाकर्षिण्याद्या अनङ्गकुसुमाद्या वक्ष्यमाणा अपि देवताः प्रथमपटलोक्ताः । दक्षिणपदं श्रोत्रस्य पृष्ठमारभ्य पादतलान्तेष्वष्टस्वन्वेति । वामपादतलादीत्यादिना वामगुल्फादिवामश्रोत्रपृष्ठान्तानां व्युत्क्रमेण परि-ग्रहः ॥ ५६–५७ ॥

---

१. इत्यर्थ–ख० । २. एतदप्यष्टक–ख० । ३. इति–क० ।

तदन्तरे चाष्टदलपद्माय नम इत्यपि ।
विन्यस्य तद्दलेष्वेषु दक्षशङ्खे च जत्रुके[1] ॥ ५५ ॥
ऊर्वन्तर्गुल्फगुल्फोरुजत्रुशङ्खे च वामतः ।
अनङ्गकुसुमाद्याश्च[2] शक्तीरष्टौ च विन्यसेत् ॥ ५६ ॥

(दी०) अष्टदलव्यापकमाह—तदन्तरे इति । तदन्तरे षोडशदलपद्मा[3]न्तरे। "अष्टदलपद्माय नमः" इति मन्त्रेण दक्षशङ्खादिस्थानानि संस्पृश्य व्यापकत्वे[4]न न्यसेदित्यर्थः ।

तद्दलान्याह—तद्दलेष्विति । शङ्खजत्रु[5]त्वादिशब्दानां शरीरावच्छिन्ना[6]वयवावच्छिन्नानामङ्गेषु निघण्टुषु[7] सुप्रसिद्धत्वादवगतिः ।

तत्तद्दलेषु न्यस्तव्याः शक्तीराह—अनङ्गकुसुमाद्या इति । अनङ्गकुसुमाद्याः अनङ्गकुसुमाऽनङ्गमेखलाऽनङ्गमदनाऽनङ्गमदनातुराऽनङ्गरेखाऽनङ्गवेगिन्यनङ्गाङ्कुशाऽनङ्गमालिन्यः । शेषं सुगमम् ॥५५-५६॥

(से०) सर्वसंक्षोभणचक्रन्यासमाह—(तदित्यादि) । शङ्खा ललाटास्थि । जत्रु बाहुमूलसन्धिः । गुल्फः पादग्रन्थिः । सुगममन्यत् ॥ ५८-५९ ॥

तदन्तश्चतुर्दशारचक्राय नम इत्यपि ।
विन्यस्य तस्य कोणेषु न्यसेच्छक्तीश्चतुर्दश ॥ ५७ ॥
सर्वसङ्क्षोभिण्या[8]द्यास्तु तस्य कोणानि वच्म्यहम् ।
ललाटं दक्षभागं च दक्षगण्डांसमध्यतः ॥ ५८ ॥
पार्श्वान्त[9]रूरुजङ्घान्तर्वामजङ्घादि पार्वति ।
वामोर्वन्तं वामपार्श्वं वामांसं वामगण्डकम् ॥ ५९ ॥
ललाटवाममध्ये च तथा वै पृष्ठमित्यपि ।

१. जत्रुणि–से० । २. स्तु–ख० से० । ३. षोडषदलान्तरे–क० । ४. व्यापकं–ख० । ५. शङ्खजत्र्वादिशब्दानां–ख० । ६. शरीरावयवस्थितानामङ्गेषु–ख० । ७. निघण्टुषु–ख०नास्ति । ८. सर्वसंक्षोभिकाद्यास्तु–ख० से० । ९. दक्षपार्श्वोरुज–ख० ।

(दी०) चतुर्दशारचक्रव्यापकमाह—तदन्तरिति । तदन्तरष्टदलपद्मस्यान्तः "चतुर्दशारचक्राय नमः" इति मन्त्रेण चतुर्दशकोणस्थानानि ललाटादीनि संस्पृश्य व्यापकं विन्यस्य ॥ ५७ ॥

चतुर्दशकोणे न्यस्तव्याः शक्तीराह—सर्वसङ्क्षोभिण्याद्या इति । सर्वसङ्क्षोभिण्याद्याः सर्वसङ्क्षोभिणीसर्वविद्राविणीसर्वाकर्षिणीसर्वाह्ला[1]दिनीसर्वसम्मोहिनीसर्वस्तम्भिनीसर्व[2]जृम्भिणीसर्ववशङ्करीसर्वरञ्जनीसर्वोन्मादिनीसर्वार्थसाधिनीसर्वसम्पत्ति[3]पूरणीसर्वमन्त्रमयीसर्वद्वन्द्वक्षयङ्कर्यः । शिष्टं [4]स्पष्टम् ।

तत्कोणानि प्रतिज्ञापूर्वकमाह—तस्य कोणानीत्यादि । दक्षभागं ललाटस्यैव ललाट इति प्रकृतत्वाद्दक्षगण्डदक्षांसमध्यत इत्यर्थः । पार्श्वान्त[5]रूरुजङ्घान्तरिति त्रिभिरपि दक्षशब्दो युज्यते । 'वामजङ्घादि' इत्यादिशब्दः शिष्टार्थारम्भद्योतकः । वामांस इत्यत्राऽपि मध्ये इति योज्यम् । पृष्ठमिति शिरसः पृष्ठमिति[6] ज्ञेयम्. दक्षवामयोः प्रथमं ललाटोपादानात् । ललाटं शिरसः पुरस्ताद्भागः ।

(से०)सर्वसौभाग्यदायकचक्रन्यासमाह—(तदन्त इत्यादि)। ललाटं भालमध्यभागः । इदञ्च भिन्नं स्थानम्, असमस्तत्वेन निर्देशात् । ततो दक्षभागस्तस्यैव प्रकृतत्वात् । इदञ्च द्वितीयं स्थानम् । ततो दक्षगण्डांसपार्श्वोरुजङ्घापञ्चकस्य मध्यभागाः पञ्चेति सप्त स्थानानि । इमान्येव वामानि । व्युत्क्रमेण पञ्चेति द्वादश। ललाटवामभाग इत्येकं त्रयोदशं स्थानम् , समस्तत्वेन निर्देशात् । पृष्ठं शिरःपृष्ठं निम्नादूर्ध्वं चतुर्दशम् । इदञ्च निजानन्दनाथकृतक्रमोत्तमपद्धतिलिखिततन्त्रान्तरीयवचनानुगुणं व्याख्यातम् । परे तु आसु प्रथमां दक्षशीर्षे चरमां वामशीर्षे न्यसेदिति वदन्ति । अन्ये तु आसु सप्तम्यष्टम्यौ दक्षवामयोर्न्यसेदिति मन्यन्ते । केचित्तु ललाटदक्षभाग इति सामानाधिकरण्येनैकमेव स्थानं मन्यमानाः पृष्ठपदेन वामदक्षिणकुम्भस्थलद्वयं ग्राह्यमित्याहुस्तदयुक्तम् ॥६०-६३॥

**ततो [7]दशारचक्राय नम इत्यपि पार्वति ॥६०॥**
**तस्य कोणानि दक्षाक्षिना[8]सामूलाऽऽस्यनेत्रके ।**

---

१. सर्वाह्लादकारिणी–ख० । २. सर्वजम्भिनी–ख० । ३. सर्वसम्पत्तिरूपिणी–ख० । ४. शिष्टं स्पष्टम्–ख० नास्ति । ५. पार्श्वोरुज–ख० । ६. पृष्ठमेव–ख० । ७. बहिर्दशा–ख० पाठान्तरम् । ८. नासिकामूलनेत्रके–ख० ।

कुक्षीशवायुकोणेषु जानुद्वयगुदेषु च ॥६१॥
कुक्षिनैर्ऋतिवह्न्याख्यकोणेष्वेषु न्यसेत् पुनः।
सर्वसिद्धिप्रदादीनां शक्तीनां दशकं [1]तथा ॥६२॥

(दी०) बहिर्दशारचक्रव्यापकमाह—तत इति। ततश्चतुर्दशारकोण-[2]न्यासानन्तरम्। "दशारचक्राय नमः" इति मन्त्रेण दक्षाक्ष्यादिदश-कोणानि संस्पृश्य व्यापकमपि [3]शब्दान् न्यसेदिति योज्यम् ॥५८–६०॥

दशारचक्रस्य कोणान्याह—तस्येति। तस्य दशारचक्रकोणानि दशा[4]पि दशसु दक्षाक्ष्यादिस्थानेषु भावनीयानीति[5] शेषः। कुक्षीश-वायुकोणेषु छान्दसत्वात् द्वित्वे बहुवचनम्। बाहु[6]द्वयमारभ्योरुद्वय-पर्यन्तं कुक्षिशब्देन लक्ष्यते, तेन कुक्षेरुपरिभागः प्राची, अधोभागः प्रतीची, दक्षिणवामपार्श्वे दक्षिणोदीच्यौ। [7]कोणशब्देन बाहू ऊरू च[8] लक्ष्येते। तेन वामबाहुमूलमीशकोणो वामोरुमूलं वायुकोणो [9]दक्षिणोरुमूलं नैर्ऋतिकोणो दक्षिणबाहुमूलम[10]ग्निकोणः। [11]सुगम-मन्यत्।

दशकोणेषु न्यस्तव्याः शक्तीराह—सर्वसिद्धिप्रदादीनामिति। सर्व-सिद्धिप्रदाद्याः सर्वसिद्धिप्रदासर्वसम्पत्प्रदासर्वप्रियङ्करीसर्वमङ्गल-कारिणीसर्वकामप्रदासर्वदुःखविमोचनीसर्वमृत्युप्रशमनीसर्वविघ्ननिवा-रिणीसर्वाङ्गसुन्दरीसर्वसौभाग्यदायिन्यः। शेषं स्पष्टम् ॥६१–६२॥

(से०) सर्वार्थसाधकचक्रन्यासमाह—(तत इत्यादि)। ततो मन्वस्रान्तरवच्छेदेन। कोणानि वक्ष्यहमित्यनुवर्तते। भावनीयानीति शेष इति केचित्। दक्षनेत्रं नासामूलमिति द्वे स्थाने। अन्यनेत्रकं वामनेत्रम्। कुक्षीशकोणे वामबाहुमूले। वामनेत्राव्यवधानेन तत्सन्निहितस्यैवोपस्थितत्वात्। कुक्षिवायुकोणे वामोरुमूले। अक्षीणि मे दर्शनीयानि (?) इति बहुवचनञ्च छान्दसम, प्राण्यङ्गत्वादेक-

---

१. प्रिये–ख० से०। २. कोणान्तरे–ख०। ३. शब्दाद्विन्यसेदिति–ख०। ४. दशापि–ख० नास्ति। ५. भावनीयानीत्यर्थः–ख०। ६. जत्रुद्वन्द्वद्वयमारभ्यो-रुमूलपर्यन्तं-क०। ७. कोणशब्देन–ख० नास्ति। ८. ऊरू च–ख० नास्ति। ९. वामोरुमूलं वायुकोणो–क० नास्ति। १०. मूलं वह्नि–ख०। ११. अत्र सर्वत्र कोणशब्दस्य नपुंसकत्वं–क०।

यद्भावप्रसक्तेः । अत्र वामजानु ततो गुदं ततो दक्षजान्विति क्रमः, पाठक्रमा- सें०
दर्थक्रमस्य बलवत्त्वात् । प्रमाणबलाबलात् प्रमेयबलाबलस्य ज्यायस्त्वाद्वा ।
कुक्षिनैर्ऋतकोणं दक्षिणोरुमूलम् । कुक्ष्यग्निकोणं दक्षिणबाहुमूलम् । अत्रत्यविदि-
ग्विभागवशादेव दिग्विभागोऽपि वक्ष्यमाणायुधन्यासादावुन्नेयः ।। ६४ ६५ ।।

**तदन्तश्च दशारादिचक्राय नम इत्यपि ।**
**विन्यस्य तस्य कोणेषु सर्वज्ञाद्याः प्रविन्यसेत् ।।६३।।**
**दक्षनासा सृक्किणी च स्तनं वृषणमेव च ।**
**सीविनी वाममुष्कं च स्तनं सृक्किणि नासिके ।।६४।।**
**नासाग्रं चैव विज्ञेयं कोणानां दशकं तथा ।**

(दी०)अन्तर्दशारचक्र[1]व्यापकमाह–तदन्तरिति । तदन्तर्बाह्यदशा- रान्तः । दशारादिचक्राय बाह्यदशारादिचक्रा[2]य । "अन्तर्दशारचक्राय नमः" इति मन्त्रेण दक्षिणनासादि[3]दक्षस्थानानि संस्पृश्य व्यापकं विन्यस्य ।

दशकोणेषु न्यस्तव्याः शक्तीराह—तस्य कोणेषु इति । सर्वज्ञाद्याः सर्वज्ञासर्वशक्ति[4]सर्वैश्वर्यप्रदा[5]सर्वज्ञानमयीसर्वव्याधिविनाशनीसर्वाधा- रस्वरूपा[6]सर्वपापहरासर्वानन्दमयीसर्वरक्षास्वरूपिणीसर्वेप्सितफलप्रदाः। स्पष्टमन्यत् ।।६३।।

(से०) सर्वरक्षाकरचक्रन्यासमाह—(तदित्यादि)। तदन्तः बहिर्दशारमध्ये । दशारपदमादौ यस्य तद्दशारादि । ईदृशं चक्रायेतिपदम् । दशारचक्राय नम इति पूर्वमन्त्रेणैवेति यावत्, उभयोरपि दशारपदमात्रवाच्यत्वात् । बहिरन्तः- पदनिवेशेन व्यवहारस्त्वसाङ्कर्यसौकर्याय वृद्धैः कल्पित इति न तयोः पदयोर्मन्त्रा- वयवत्वम् । मध्यं त्र्यस्रं तथाष्टारं द्वे दशारे चतुर्दशेत्यादेरेव पूर्वतन्त्रे, पञ्चमन्तु दशारं स्यात् षष्ठं चापि दशारकमित्यादेरेवोत्तरतन्त्रेऽन्यत्रापि व्यवहारात् । मन्त्रस्यैकत्वेऽपि तेन मन्त्रार्थस्मरणदशायां परं तस्य तस्य व्यवस्थया स्मरणं भविष्यति । तेन पद्धतिषु बहिरन्तःपदयोर्मन्त्रशरीरघटकत्वेन लेखस्तन्त्रान्तर-

१. चक्र–ख० नास्ति । २. दशारादिचक्राय बाह्यदशारादिचक्राय–ख० नास्ति । ३ दक्षनासादिकोणानि–ख० । ४. सर्वशक्तिश्च–ख० । ५. सर्वैश्वर्य- प्रदायिनी–ख० । ६. सर्वाधारस्वरूपिणी–ख० से० ।

से० सवाद एव विश्रम्भणीयः। एतेन तदितिपदमेवाव्ययत्वात्तन्मध्यार्थकम्। अन्तश्च दशारेत्यादि चेति व्याख्याया अन्तर्दशारेत्यादिरेव मन्त्र इहान्तःपदोक्तिरेव पूर्वत्र बहिष्पदनिवेशे ज्ञापिकेति क्लेशेनैतत्तन्त्रारूढता सुकरापि संवाद एवादर्तव्या। प्राञ्चस्तु—पूर्वं दशारचक्रायेति विलिख्येहान्तर्दशारचक्रायेति मन्त्रं लिखन्ति। सृक्किणी ओष्ठप्रान्तः। स्तनवृषणमुष्कशब्दाः पुंलिङ्गा अपि गुणत्रयसाम्यविवक्षायां नपुंसकाः। बन्धुनि बहुव्रीहाविवितिवत्। द्वितीयसृक्किणिशब्दे ह्रस्वस्तु ङ्यापोः संज्ञाछन्दसोर्बहुलमिति बाहुलकः। यथावृत्तानुरोधेन बलवता छन्दोलक्षणेन व्याकरणस्य बाधो वेति वृत्तचन्द्रोदये स्पष्टम्। सीवनी, अण्डद्वयमध्यवर्तिनी शिरा ॥ ६६–६८ ॥

**तदन्त[1]रष्टकोणादिचक्राय नम इत्यपि ॥ ६५ ॥**
**विन्यस्य तस्य कोणेषु वशिन्याद्यष्टकं न्यसेत्।**
**चिबुकं कण्ठहृदयनाभीनां चैव दक्षिणम् ॥ ६६ ॥**
**ज्ञेयं पार्श्वचतुष्कं च मणिपूरादि वामकम्।**
**चतुष्टयं च पार्श्वानामेतत् [2]कोणाष्टकं [3]मतम् ॥ ६७ ॥**

(दी०) तस्य कोणान्याह—दक्षेत्यादि। इति स्पष्टम्। तदन्तर्दशारान्तः—"अष्टकोणादिचक्राय नमः" इति[4]चिबुकाद्यष्टकोणानि संस्पृश्य व्यापकं विन्यस्य। अष्टकोणचक्रस्यादित्वम्। त्रिकोणादीतरचक्रेभ्यः प्रथममुत्पन्नत्वात्।

अष्टकोणेषु न्यस्तव्याः शक्तीराह—तस्येति। तस्याष्टारचक्रस्य। कोणेषु वशिन्याद्यष्टकं वशिनीकामेश्वरीमोदिनीविमलाऽरुणाजयिनीसर्वेश्वरीकौलिन्यः।

तस्य कोणाष्टकमाह–चिबुकमित्यादि। चिबुकादीनां पार्श्वचतुष्कं दक्षिणं मणिपूरादि। मणिपूरकं [5]नाभिस्थानम्। नाभिहृदयकण्ठचि-[6]बुकानां [7]वामपार्श्वचतुष्कं चैतत्कोणाष्टकम् ॥६४–६७॥

---

१. तदन्तश्चाष्ट–ख० से०। २. मेतदेवाष्टकं–क०। ३. पुनः–ख०। ४. चुबुका–क०। ५. नाभिस्थानम्–क० नास्ति। ६. चुबुकानां–क०। ७. वामकं पार्श्व– क०

(से०) सर्वरोगहरचक्रन्यासमाह—( तदित्यादि )। तस्यान्तर्दशारस्यान्तर्मध्यभागे। अष्टकोणपदमादौ यस्य तादृशं चक्रायपदम्। नमःपदेन युक्तेन तेन मन्त्रेण व्यापकं विन्यसेत्। प्राञ्चस्तु—अष्टकोणचक्रस्यादित्वं त्रिकोणादितरचक्रेभ्यः प्रथममुत्पन्नत्वादित्यादिपदं व्याचक्षाणास्तस्य मन्त्रावयवत्वं मेनिरे। तदसत्, अन्तर्दशारेऽप्यादिपदस्य मन्त्रावयवत्वापत्तेः, तस्यापि सजातीययोर्मध्ये पूर्वमुत्पन्नत्वात्, मूल आम्नातत्वाच्च। किञ्च षोडशदलप्रभृतिचक्रप्रायपाठविरोधस्तन्त्रान्तरविसंवादश्च गत्यन्तरसम्भवे किमित्यङ्गीकार्य इति न किञ्चिदेतत्। कण्ठहृदयनाभीनामित्यत्र प्राण्यङ्गत्वेऽप्येकवद्भावाभावश्छान्दसः। मणिपूरादि नाभ्यादि। शेषं सुगमम्॥ ६९-७०॥

**हृदयस्थत्रिकोणस्य चतुर्दिक्षु बहिर्न्यसेत्।**
**शरचापौ पाशसृणी त्रिकोणाय नमस्तथा॥ ६८॥**
**विन्यस्य[1] तस्य कोणेषु अग्रदक्षोत्तरेषु च।**
**कामेश्वर्यादिदेवीनां[2] मध्ये देवीं च विन्यसेत्॥ ६९॥**

(दी०) अनन्तरमायुधावरणन्यासमाह—हृदयस्थेति। ([3]हृदये वक्षसि निष्ठतीति हृदयस्थं स्तनद्वयमध्यनिम्नत्रिकोणाकारहृदयस्थत्रिकोणमित्युच्यते। तस्य बहिश्चतुर्दिक्षु प्रागादिषु।) कामेश्वरीकामेश्वरयोः शरचापौ पाशसृणी [4]चेत्यायुधचतुष्टयं [5]न्यसेत्। अत्रैव वक्ष्यति—

बाणान्नेत्रे भ्रुवोश्चापौ कर्णे पाशद्वयं न्यसेत्[6]।
(सृणिद्वयं[7] च नासाग्रं दक्षिणाग्रं तु विन्यसेत्॥)
(यो० हृ० सं० ३।७३)

ततस्त्रिकोण[8]चक्रव्यापकमाह—त्रिकोणायेति। "त्रिकोणाय नमः" इति मन्त्रेण रेखात्रयं संस्पृश्य व्यापकं विन्यस्य।

---

**१. विन्यसेत्—क०। २. देवीश्च—ख०से०। ३. कंसान्तर्गतो ग्रन्थः ख० नास्ति। ४. चेत्यायुधाष्टकं—क०। ५. मिलितं न्यसेत्—ख०। ६. हृदयस्थत्रिकोणस्येति हृदयमध्यस्थानं निम्नत्रिकोणाकारं हृदयस्थत्रिकोणमुच्यते। तस्य चतुर्दिक्षु शरादि न्यसेत्—इति ख०पु० अधिकम्। वस्तुतस्तु कपुस्तकस्थः [ ] एतच्चिह्नान्तर्गतग्रन्थस्थानस्थोऽयं प्रबन्धो लेखकप्रमादादत्र पतितः स्यादिति मन्ये। ७. कंसान्तर्गतो ग्रन्थः ख० नास्ति। ८. चक्र—ख० नास्ति।**

त्रिकोणे[1]न्यस्तव्या देवीराह–तस्येति। तस्य त्रिकोणस्य। अग्रदक्षोत्तरेषु कामेश्वरीवज्रेश्वरीभगमालिन्यः। [2]तासां कामेश्वर्यादिदेवीनाम्। मध्ये देवीं च विन्यसेदिति। मध्ये बैन्दवे [3]श्रीचक्रे। देवीं प्रकाशविमर्शसामरस्यरूपां त्रिपुरसुन्दरीं [4]च विन्यसेदित्यर्थः॥६८-६९॥

(से०) आयुधन्यासादिकमाह—( हृदयेत्यादि )। हृदयस्य मध्ये यन्निम्नं त्रिकोणाकारमधोग्रं तिष्ठति तस्य बहिर्भागे चतुर्दिक्षु बहिर्दशारचक्रन्यासकथनावसरे ज्ञापितभागासु शिवशक्तिभेदेन पञ्च पञ्च शरान् द्वौ द्वौ चापौ पाशावङ्कुशौ चेति न्यसेत्। दिशां क्रमस्तु पूर्वतन्त्र एवोक्तः–पश्चिमोत्तरपूर्वाशादक्षिणाशाक्रमेण त्विति। हृदयस्याग्नीशासुरवायुकोणेष्विति तु क्रमोत्तम[ पद्धति ]कारः, तत्र मूलं चिन्त्यम्। शरपाशशब्दयोरविभक्तिको निर्देशश्छान्दसः। प्रत्येकं जात्येकत्वविवक्षया वा द्विवचनान्तद्वन्द्वौ। उत्तरन्यासे बाणान्नेत्रे भ्रुवोश्चापावित्यत्र चापादिद्वयकथनाल्लिङ्गात्। सर्वसिद्धिप्रदचक्रन्यासमाह—कोणेष्विति। त्रिकोणचक्रायेत्येव तु पद्धतिकाराणां लेखः। सर्वानन्दमयचक्रन्यासमाह—मध्य इति। बिन्दावित्यर्थः। देवीं त्रिपुरसुन्दरीम्। देवताबाहुल्यस्थल एव व्यापकन्यासकथनादिह देवतैक्यात्तदभावः। सांप्रदायिकास्तु बिन्दुचक्राय नम इति मन्त्रेण व्यापकन्यासं कुर्वन्ति। अत्र ज्ञापकञ्च वक्ष्यते। अत्राणिमादिन्यासेषु मन्त्रकल्पना पूर्वतन्त्रे पूजाप्रकरणे यादृश्युक्ता तादृश्यामेव सप्ताक्षरीस्थाने नमःपदप्रयोगो द्वितारयोगाभावश्चेति विशेषस्तत्रैव वर्णितोऽस्माभिः॥ ७१–७२॥

**एवं मयोदितो देवि ! न्यासो [5]गुह्यतमक्रमः।**
**एतद् गुह्यतमं[6] कार्यं त्वया वै वीरवन्दिते॥ ७०॥**

**समयस्थाय दातव्यं नाऽशिष्याय कदाचन।**
**गुप्ताद् गुप्ततरं चैतत्तवाऽद्य प्रकटीकृतम्॥ ७१॥**

(दी०)श्रीचक्रन्यासमुपसंहरति–एवमिति। इति स्पष्टम्। अतस्त्वयाऽप्येतन्न्यासजातं [7]गोप्यमित्याह–एतदिति। इति स्पष्टम्॥ ७ ॥

---

१. त्रिकोणन्यस्तव्या–ख०। २. भगमालिनी एतास–ख०। ३. बैन्दवश्रीचक्रे–ख०। ४. च–ख० नास्ति। ५. गुह्यतमः स्मृतः–क०। ६. गुह्यतरं–ख० से०। ७. गोप्यं कार्यमि०–क०।

ननु किमेतन्न कस्मैचिदपि कथनीयमित्यत आह—समयस्थायेति । दी० समयस्थाय[1]कौलिकाय समयाचारनिष्ठाय देयम् । पशुसमया[2]चारनिष्ठाय न देयमित्यर्थः ।

[3]ननु कौलिकसमयस्थायाऽपि [4]सर्वस्मै देयं नेत्याह—नाऽशिष्यायेति । समयस्थायापि अशिष्याय([5]अन्यशिष्याय) न देयम् ॥

मयाप्येतत्त्व[6]दन्यस्य कस्यापि न[7]प्रकटीकृतमित्याह—गुप्तादिति । गुप्तादपि [8]गुप्ततरम्, रहस्याद[9]प्यत्यन्तरहस्यत्वात् । एतत्तव मदंशभूतविमर्शात्मकायाः[10]प्रियतमायाः प्रियतमेन मयाऽद्य प्रकटीकृतम् । पुराऽन्यस्मै न प्रकटीकृतमिति तात्पर्यम् ॥७१॥

(से०) चक्रन्यासमुपसंहरति—(एवमित्यादि) । गुह्यतमः क्रमः प्रकारो यस्य सः । गुप्ततरं कार्यविशेषेण सर्वेभ्यो नोपदेष्टव्यम् । सामयिकाः शिष्याशिष्यभेदेन द्विविधाः । असामयिका अपि तथा । एतेषां चतुर्णां मध्ये सामयिकाः शिष्या एवाधिकारिणो नेतरे त्रय इत्याह—समयस्थायेति । समयः कौलिकसंकेतो रुद्रयामले दशभिः पटलैरन्यत्र च प्रतिपादितः । तत्र तिष्ठति तं [ न ] भिनत्तीत्यर्थः । अत्र विध्यंशेन द्वयोर्निषेधांशेन चैकस्येति त्रयाणां निरासः । तवेति । सामयिकत्वाच्छिष्यत्वाच्चेति भावः ॥ ७३–७४ ॥

**मूलदेव्यादिकं न्यासमणिमान्तं पुनर्न्यसेत् ।**
**(त्रिकोणस्थे महाबिन्दौ महात्रिपुरसुन्दरीम् ।)**
**शिरस्त्रिकोण[11]पूर्वादि कामेश्वर्यादिकं न्यसेत् ॥ ७२ ॥**

(दी०) अस्यैव न्यासस्य पुनः प्रकारान्तरमाह—मूलदेव्यादिकमिति । पूर्वमणिमादिमूलदेव्य[12]न्तश्रीचक्रावरणदेवतान्या[13]समुक्त्वा इदानीं मूलदेव्याद्यणिमान्तं पुनः श्रीचक्रावरणदेवतान्यासं कुर्यादित्यर्थः ।

---

१. कौलिकसमयाचार—ख० । २. पशुसमयाचारपराय—ख० । ३. ननु—क० नास्ति । ४. समयस्थाय सर्वस्मै—ख० । ५. कंसान्तर्गतं—ख० नास्ति । ६. त्वद-न्यतोऽपि न कस्यापि—ख० । ७. पुरा प्रकटी—ख० । ८. गुप्ताद् गुप्ततरं—ख० । ९. रहस्याद्प्यतिरह—ख० । १०. प्रियतमाया अपि यतो मया—ख० । ११. त्रिकोणे—ख० से० । १२. मूलदेव्यन्तं—ख० । १३. न्यासमुक्तम्—क० ।

दी० मूल[1]देव्यादिन्यासप्रकारमेवाह–शिरस्त्रिकोणेति। मूलदेव्यादिक-मित्यनेनैव शिरस्त्रिकोणमध्ये मूलदेव्याः प्रथमन्यासो ज्ञेयः। पश्चाच्छिरस्त्रिकोण[2]मध्ये निम्नं त्रिकोण[3]मस्ति, तद्वा[4] मृदुतरं दृश्यते। तत्र पूर्वा[5]दिशब्दाद्दक्षिणोत्तरकोणयो[6]र्ग्रहः। [7]कामेश्वर्यादिशब्देन[8]वज्रेश्वरीभगमालिन्यौ गृह्येते। शिरस्त्रिकोणाग्रदक्षवामकोणेषु कामेश्वरी-वज्रेश्वरीभगमालिनीर्विन्यसेदित्यर्थः ॥७२॥

(से०)एवं संहारक्रमेण चक्रन्यासमुपदिश्य तमेव सृष्टिक्रमेणावर्तयेदित्याह—(मूलेत्यादि)। न्यासं चक्रन्यासनामधेयं कर्म पुनर्न्यसेत्। न्यासपदस्य तत्प्रख्य-न्यायेन नामधेयत्वात् प्रयाजान् यजतीति कौषीतकिब्राह्मणस्थवाक्यवन्न्यासं न्यसे-दिति न पुनरुक्तम्। अत एव 'ये भजन्ति तु मां भक्त्या" इति गीतावाक्येऽपि भक्तिपदं कर्मनामधेयमिति जैमिनिराचार्यो मन्यत इत्युक्तं नाम्नेति जैमिनिः सम्भवादिति शाण्डिल्यसूत्रे। मूलदेव्यादिकमणिमान्तमिति तु क्रियाया नाम्नो वा विशेषणे। अत्र मूलदेव्यणिमाशब्दौ सर्वानन्दमयचक्रन्यासत्रैलोक्यमोहन-चक्रन्यासपरौ, अवदानादिपदानान्तस्येवैकैकावान्तरचक्रन्यासस्यैकैकपदार्थ-त्वात्। तेन नवानां चक्रन्यासानामेव व्युत्क्रमो न त्वेकैकन्यासान्तर्गतदेवता-न्यासानामपि मूलदेव्यणिमापदयोः स्वारस्यादित्यापाततो [न] भ्रमितव्यम्, कामेश्वर्यादिकं न्यसेत् सर्वसिद्ध्यादिकं कण्ठ इत्यादेर्वक्ष्यमाणनिर्देशाज्ज्ञापकात्। क्रमस्य पदार्थाश्रितत्वेन पदार्थावयवेष्वप्रवृत्तेश्च। अत एव मुष्टिकपालावदाना-ञ्जनाभ्यञ्जनवपनपावनेषु चैकेनेत्यधिकरण एकैकमुष्ट्यनुसमया निरस्तः। न चैवं सति त्रैलोक्यमोहनचक्रन्यासावयवानां रेखान्यासानां त्रयाणां वैपरीत्याना-पत्तिः, तन्निर्वाहायावयवशो व्युत्क्रम इत्युक्तौ तु देवतानामपि व्युत्क्रमापत्तिः। कामेश्वर्यादिकमित्यादिज्ञापकेभ्यस्तत्र तत्र तदप्रसक्तावपि न्यसद् वाग्देवताष्टकमित्यादिविधिविहितेषु तदापत्तेर्दुर्वारत्वात्। सामान्यापेक्षज्ञापकत्व-कल्पनेनैतदुद्धारे तु रेखान्यासानां वैपरीत्यं न स्यात्। सेयमुभयतः पाशा रज्जु-रिति वाच्यम्, न्यायतस्तथैव प्रसक्तस्य मूलाधारे न्यसेन्मुद्रादशकमित्यादि वचनैरपवादात्, अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीति वाक्यस्येव तेषु वचनेषु मुद्रादशकादिपदानां क्रमविधायकत्वेनैव सार्थक्यस्य वक्तव्यत्वात्।

१. मूलदेवतादि–ख०। २. शिरस्त्रिकोणे शिरःकपालमध्ये–ख०। ३. त्रिकोणाकारमस्ति–ख०। ४. तद्वाल्ये–ख०। ५. पूर्वादि आदिशब्दा–ख०। ६. कोणयोर्ग्रहणम्–ख०। ७. कामेश्वर्यादिका आदि–ख०। ८. शब्दाद्वज्रेश्वरी–ख०।

ननु मूलाधारदक्षजङ्घावामजङ्घासु मुद्रामातृसिद्धयो न्यस्तव्यत्वेन तेषु वचनेषु से० कीर्त्यन्ते । तेषु मुद्रासिद्धिपदाभावे तयोरधिकरणवैपरीत्यस्य पदार्थव्युत्क्रम-विधितः प्रसक्तिः । अतो मुद्रा मूलाधार एवेत्यादिरीत्याधिकरणनियमार्थास्ते विधयः सार्थका एव । न चाधिकरणनियमविधिभिर्व्युत्क्रमविधेरपवादः सम्भवति, उभयोर्भिन्नविषयत्वात्, विरोधाभावाच्च । स्वाधिष्ठाने सर्वाशा-परिपूरकचक्रन्यासोत्तरं वामजङ्घादिमूलाधारान्तेषु सिद्धिमातृमुद्राणां न्यस्तुं शक्यत्वात् । न च स्वाधिष्ठानोत्तरं मूलाधारस्यैवोपस्थितिरर्थक्रमानुसारा-द्भविष्यतीति वाच्यम्, स्वाधिष्ठानमूलाधारयोर्जन्यजनकभावेनार्थक्रमायोगात् । तस्य क्रमस्य श्रौतक्रमाद् दुर्बलत्वाच्च । अत एव नियमविधीनां पाठतोऽपि क्रमो निरस्तः । तस्य ततोऽपि दुर्बलत्वादिति चेत्, मैवम् । अर्थक्रमपाठक्रमयोरवि-रोधेनापि श्रौतक्रमस्योपपत्तः । त्रैलोक्यमोहनचक्रन्यासे नवमस्थानीयत्वस्य श्रौतक्रमरूपत्वेन तदवयवानां व्युत्क्रमेऽपि तदहानेः । वस्तुतो रेखान्यासानां त्रयाणां भिन्नभिन्नपदार्थत्वमङ्गीकृत्याणिमापदस्य प्रथमरेखान्यासपरत्वस्वीकारे तु न कोऽपि दोषलेशः । अत्र ज्ञापकमेकैकचक्रस्य व्यापकन्यासवदेकैकरेखायाः पार्थक्येन व्यापकन्यासस्य कथनम् । अत एव पद्मपुराणीये पाण्डुरङ्गमाहात्म्ये क्षेत्रस्य श्रीचक्राकारतां प्रतिपाद्य बिन्दौ विठ्ठलस्य स्थितिमुक्त्वा तेन सहैकादशा-वरणानि कथितानि । तेनैकादशपदार्थघटितस्य चक्रन्यासस्य व्युत्क्रमविधानेन पदार्थानामेव क्रमवैपरीत्यं न तदवयवदेवतान्यासानाम् । आचारानुरोधेनोक्त-ज्ञापकानां सामान्यापेक्षत्वस्वीकारात् । तेन नोभयतः पाशा रज्जुरिति दिक् ॥७२॥

(त्रिकोणेत्यादि) शिरसि बाल्ये दृश्यमानं निम्नं त्रिकोणमिह गृह्यते । तन्मध्यस्थे महाबिन्दौ मूलेन देवीं विन्यस्य तत्त्रिकोणे पूर्वदक्षोत्तरकोणेषु कामेश्वरीवज्रेश्वरीभगमालिनीर्न्यसेदित्यर्थः । अत्र मूलदेव्यादिकमित्यनेनैव बिन्दौ न्यासो ध्वनित इति वदतां प्राचामेतच्छ्लोकस्य पूर्वार्धं स्वपुस्तके नास्त्यभिप्रेतम् ॥ ७६ ॥

**बाणान्नेत्रे भ्रुवोश्चापौ कर्णे पाशद्वयं [1]न्यसेत् ।**
**सृणिद्वयं [2]च नासाग्रे दक्षिणाग्रं तु विन्यसेत् ॥७३॥**
**मुण्ड[3]मूलक्रमेणैव न्यसेद्वाग्देवताष्टकम् ।**
**बैन्दवादीनि चक्राणि न्यस्तव्यानि वरानने ॥ ७४ ॥**

---

1. पुनः–ख० से० । 2. तु–ख० से० । 3. मुण्डमाला–ख० से० ।

(दी०) आयुधावरणन्यासमाह—बाणानित्यादि। बाणान् [1]कामेश्वरकामेश्वर्योः। [2]नेत्रे नेत्रयोः। चापौ भ्रुवोः। पाशद्वयं कर्णे[3] कर्णयोः। [4]सृणिद्वयं तु नासाग्रोभयपार्श्वयोः। नेत्र[5]कर्णे नासाग्रे इति चैकवचनप्रयोगो द्विवचनोपलक्षणम् दक्षि[6]णाग्रमिति च कथनात्। एषु स्थानेषु दक्षिणे कामेश्वरस्य वामे कामेश्वर्याश्चायुधानि विन्यसेदित्यर्थः ॥७३॥

वशिन्याद्यावरणन्यासमाह—मुण्डमिति। मुण्डं शिरः। [7]तस्य मूलक्रमेणाष्टदिक्षु परितः [8]वाग्देवतानां वैखर्यष्टवर्गाधिष्ठात्रीणां वशिन्यादीनां [9]देवतानामष्टकं न्यसेत्।

ननु बैन्दवचक्रादुपर्यर्धचन्द्राद्युन्मन्यन्तानां सूक्ष्मावयवानां न्यासः किमिति नोक्त [10]इत्यत आह—बैन्दवादीनीति। बैन्दवादीनि[11] चतुरस्रान्तानि नव चक्राणि न्यस्तव्यानि स्थूलत्वात्। अर्धचन्द्राद्युन्मन्यन्तानि[12] भावनीयानीत्यर्थः। स्थूलन्यासप्रसङ्गे स्थूलानामेव न्यासो[13] निगद्यत इति भावः ॥७४॥

(से०) (बाणादित्यादि)। नेत्रकर्णयोरिव नासाग्रस्यापि दक्षवामपार्श्वभेदेन द्वैविध्यमुन्नेयम्, दक्षिणाग्रमिति ज्ञापकात्। इह दक्षिणे कामेश्वरस्य वामे कामेश्वर्या आयुधानि पृथक्पृथग्विन्यसेत्, न तु प्रथमचक्रन्यास इव मिलितानि, सम्प्रतिपन्नदेवताकत्वेऽपि देशभेदेन तन्त्राभावादिति विशेषः ॥७७॥

(मुण्डेत्यादि)। मुण्डे दीयमाना रुद्राक्षादिमाला यान् यान् शिरःप्रदेशान् स्पृशति तेषु स्थानेषु पूर्वादिदिगष्टके वशिन्याद्यष्टकं न्यसेत्। पूर्वादिदक्षिणाद्यपदयोरनुवृत्त्या प्रादक्षिण्येनेति लभ्यते। इदानीं पूर्वचक्रन्यासस्य चरमावयवबिन्दुचक्रमुत्तरचक्रन्यासस्य नव चक्राणीत्येतेषु सर्वेषु व्यापकन्यासान् प्रसङ्गादत्रैवाह—बैन्दवादीनीति। अत्र चक्रपदं बिन्द्वादिषोडशदलपद्मान्तचक्राणां भूगृहचक्रावयवरेखाणां च सृष्टिन्यायेन लक्षणया बोधकम्। तेन बिन्दुचक्राय नम इत्यारभ्य चतुरस्रप्रथमरेखायै नम इत्यन्तैरेकादशमन्त्रैस्तत्तच्चक्रीयदेवतान्यासारम्भे व्यापक-

१. कामेश्वरीकामेश्वरयोः—ख०। २. नेत्रे—ख० नास्ति। ३. कर्णे—ख० नास्ति। ४. सृणिद्वयं नासोभयपार्श्वयोः—ख०। ५. नेत्रे कर्णे—ख०। ६. भ्रुवोर्दक्षिणाग्र—क०। ७. तस्य मालाक्रमेण—ख०। ८. वाग्देवताष्टकं वागधिष्ठात्रीणां वशिन्यादीनां—ख०। ९. देवतानां—ख० नास्ति। १०. इत्याह—ख०। ११. चक्राणि—ख० नास्ति। १२. विभावनीयानीति। अतः स्थूल—ख०। १३. विद्यते—ख०।

न्यासान् कुर्यादित्यर्थः। अन्यथा द्वितीयचक्रन्यासे देवतान्यासमात्रकथनाद् व्यापकन्यासपरिसंख्या प्रसज्येत। इदमेव च प्रथमचक्रन्यासे बिन्दुचक्रन्यासस्य विधायकं ज्ञापकं वा। यत्तु (ये तु) प्राञ्चः—वशिन्याद्यावरणन्यासः किमिति नोक्त इत्यत आह—बैन्दवादीनीति। बिन्द्वादिनवचक्राणि न्यस्तव्यान्येव स्थूलत्वात्। अर्धचन्द्राद्युन्मन्यन्तानि तु भावनीयानि। अतः स्थूलन्यासप्रसङ्गे स्थूलानामेव न्यासो विद्यत इति भाव इति व्याचक्षते। तेषां यद्येवमाशयः—अत्रत्यचक्रपदस्य चक्रस्थदेवतापरत्वाद् देवतान्यासस्य च विशिष्य विशिष्यैव कथनेन सामान्येन पुनरयं विधिर्व्यर्थः। अतस्तस्य द्वयं प्रयोजनम्—अनुक्तवाग्देवतान्यासप्राप्तिर्विभावनपरिसंख्या चेति। तर्हीदमयुक्तम्। चक्रपदस्य तत्रत्यदेवतापरत्वाभावात्। एवं प्रयोजनमपि न युज्यते, अप्रसक्तस्य विभावनस्य परिसंख्यायोगात्, वाग्देवतान्यासस्य कण्ठरवेणोक्तत्वाच्च। अथ तत्पुस्तके मुण्डमालेत्यर्धं न स्यात्। अत एव तद्व्याख्यापि तत्र न दृश्यत इत्युच्यते, तर्हि तदीयोत्तरग्रन्थविरोधः। एतदुत्तरग्रन्थे सर्वज्ञादिदेवीनामकथनात् कथं ता एव ग्राह्या इति निर्णय इत्याशङ्क्य पूर्वं वशिन्यादीनामुत्तरत्र सर्वसिद्धिप्रदादीनां च विशिष्य कथनेन तयोर्मध्ये पारिशेष्यात् सर्वज्ञाद्या एव गृह्यन्त इति परिहृतत्वात् ॥ ७८ ॥

**नेत्रमूले त्वपाङ्गे च कर्णपूर्वोत्तरे पुनः।**
**[1]चूडादिकण्ठनिम्नेऽर्धं [2]शेषार्धं कर्णपृष्ठके ॥७९॥**
**[3]कर्णे पूर्वे त्वपाङ्गे च तस्य मूले च [4]विन्यसेत्।**
**हृदये मनुकोणस्थ[5]शक्तयोऽपि च पूर्ववत् ॥७६॥**
**[6]सर्वसिद्धयादिकं कण्ठे प्रादक्षिण्येन विन्यसेत्।**

(दा०) सर्वज्ञाद्यावरणन्यासमाह—नेत्रमूले इत्यादि। कर्णोत्तरं कर्णस्य पश्चाद्भागः। चूडादिके चूडाया आदिर्ललाटम्। [7]अर्धनिम्ने कर्णोत्तरानन्तरं न्यसेदिति सम्प्रदायः। निम्नं शिरःपश्चा-

१. चूडादिके च निम्नाग्रे–ख०से०। २. शेषार्धे कर्णपृष्ठयोः–ख०। ३. कर्णपूर्वे त्वपाङ्गे च–ख० से०। ४. पूर्वतः–ख०। ५. कोणस्थाः–ख० से०। ६. सर्वसिद्धादिकमिति श्लोकार्धं 'हृदये' इत्यतः पूर्वं स्थापितम्–से०। ७. तदपि कर्णोत्तरानन्तरं–ख०।

दी० न्निम्नस्थलम[1]वटम् । कोऽर्थः ? चूडादिनेत्रमूलापाङ्गकर्णपूर्वपृष्ठेषु[2] सर्वज्ञादीनां दशानामर्धं विन्यसेत् । [3]अथवाऽऽसामेवोत्तरार्धमवटून्तरकर्णपृष्ठपूर्वान्यनेत्रापाङ्गमूलेषु विन्यसेदित्यर्थः । ननु सर्वज्ञादीनां नाम न कथितम्[4], कथमत्र ता एव न्यस्तव्याः कथ्यन्ते ? उच्यते, पूर्वचक्रे वशिन्याद्या न्यस्तव्याः कथिताः । अनन्तरोपरिचक्रे सर्वसिद्ध्याद्या न्यस्तव्याः कथ्यन्ते । अतस्तयोरपि [5]मध्यदशस्थानेषु पारिशेष्यात् सर्वज्ञाद्या न्यस्तव्या इति गृह्यन्ते ॥ ७५-७६ ॥

सर्वसिद्ध्याद्यावरणन्यासमाह—[6]सर्वसिद्ध्यादिकमिति । स्पष्टम् ।

सर्वसंक्षोभिण्याद्यावरणन्यासमाह—हृदय इति । हृदये वक्षसि । पूर्ववत्प्रादक्षिण्येन मनुकोण[7]स्थशक्तयश्चतुर्दशारकोणनिवासिन्यः सर्वसंक्षोभिण्याद्याः । न्यस्तव्या इति शेषः ।

(से०) सर्वज्ञादिन्यासमाह—(नेत्रेत्यादि) । दक्षिणाद्यमित्यनुवर्तनीयम् । तत्र दक्षिणं नेत्रमूलं नासानेत्रसन्धिः । अपाङ्गो नेत्रान्तः । कर्णस्य पूर्वभाग उत्तरभागश्चेति द्वे स्थाने । चूडा शीर्षस्थाः केशाः । तस्या आदिभूतं निम्नमपरगले विद्यमानम् । तत एव केशानामारम्भात्तस्य चूडादित्वम् । पूर्वगलादिनिम्ननिरासाय चूडादिक इति विशेषणम् । तादृशनिम्नस्य दक्षिणार्धमुत्तरार्धं चेति द्वे स्थाने । तदिदमाह—शेषार्धं इति । ततः कर्णपृष्ठपूर्वभागौ द्वितीयनेत्रस्य मूलापाङ्गौ चेति दशसु सर्वज्ञाद्या विन्यसेदित्यर्थः । प्राञ्चस्तु शिरःकेशादिभागस्य ललाटरूपतां मत्वा व्याचक्षते—चतुर्थीं देवतां कर्णपृष्ठे विन्यसेत् पञ्चमीं ललाटे न्यसेदिति सम्प्रदायः । षष्ठीं पश्चान्निम्ने । तदिदं नेत्रमूलमारभ्य वृत्ताकारन्यासस्य प्रथममर्धम् । एवमवशिष्टार्धेऽपि न्यसेदित्याह—शेषार्धं इति । शेषार्धेऽपि नेत्रमूलमारभ्य न्यासो मा प्रसाङ्क्षीदत आह—कर्णपृष्ठक इत्यादीति । तदिदं स्वकीयभ्रमापह्नवार्थं शिष्यवन्धनमात्रमित्युपेक्ष्यम् ॥ ७९ ॥

( सर्वेत्यादि ) । अप्रादक्षिण्येनेति न पदच्छेदः । ( अन्यथा वामा )-वर्तेनेत्येव ब्रूयात् । ततश्च पूर्ववदिति पदस्यापि प्रादक्षिण्येनेत्येवार्थः, पूर्वोक्तनिखिलचक्रसारूप्यात् , मनुकोणस्थाश्चतुर्दशारस्थाः । शक्तय इति द्वितीयार्थे प्रथमा, सुपां सुपो भवन्तीति विधानात् । न्यस्तव्या इति शेषो वा ॥ ८० ॥

---

१. मवटुरेव–ख० । २. सर्वसिद्ध्यादीनां–ख० । ३. अथ तासामेवार्द्धमवटुकर्णपृष्ठ–ख० । ४. कीर्त्तितं–ख० । ५. मध्यदेश–ख० । ६. 'सर्वसिद्ध्यादिकमिति' इत्यारभ्य 'हृदये इति' इत्यन्तो ग्रन्थः क० नास्ति । ७. कोणस्थाः शक्तयः–ख० ।

नाभावष्टदलं[1] तत्तु वंशे वामे च पार्श्वके ॥ ७७ ॥
उदरे सव्यपार्श्वे च न्यसेदादिचतुष्टयम् ।
वंशवामान्तरालादि न्यसेदन्य[2]चतुष्टयम् ॥ ७८ ॥
स्वाधिष्ठाने न्यसेत् स्वस्य पूर्वाद्दक्षावसानकम् ।
चतस्रस्तु चतस्रस्तु चतुर्दिक्षु क्रमान्न्यसेत् ॥ ७९ ॥

(दी०) अनङ्गकुसुमाद्यावरणन्यासमाह--नाभाविति । नाभौ नाभिप्रदेशे । अष्टदलं पद्मम् । [ [3]तत्त्विति । तत्पूर्वोक्तानङ्गकुसुमाद्यष्टकं परामृश्यते । तदादिचतुष्टयमनङ्गकुसुमाऽनङ्गमेखलाऽनङ्गमदनाऽनङ्गमदनातुराणां चतुष्टयम् ]। [4]वंशः पृष्ठास्थि । सव्यपार्श्वं [5]दक्षिणपार्श्वम् । वंशवामान्तरालादि वंशवामपार्श्वयोरन्तरालम् । [6]आदिशब्दाद्वामपार्श्वपुरोभागयोरन्त[7]रालपुरोभागदक्षिण[8]पार्श्वयोरन्तरालं दक्षपार्श्वपृष्ठवंशयो[9]रन्तरालं गृह्यते । अन्य[10]चतुष्टयमनङ्गरेखानङ्गवेगिन्यनङ्गाङ्कुशानङ्गमालिनीनां चतुष्टयम् । नाभि[11]देशस्य पश्चिमादिदिक्षु अनङ्गकुसुमादीनां [12]न्यसेदित्यर्थः ॥ ७७-७८ ॥

कामाकर्षिण्याद्यावरणन्यासमाह--स्वाधिष्ठाने इति । स्वाधिष्ठानकमलप्रदेशे स्वस्य पूर्वात् पूर्वदिगादिभागमारभ्य दक्षावसानकं दक्षिणदिगवसानपर्यन्तम् । चतुर्दिक्षु प्रतिदिशं चतस्रश्चतस्रः शक्तयः कामाकर्षिण्याद्याः क्रमेण न्यस्तव्याः । ननु कामाकर्षिण्याद्या इति कथमनुमी[13]यन्ते, इति चेदुच्यते । पूर्ववदेव पूर्वो[14]त्तरचक्रयोः शक्तीनां नामग्रहणाद् मध्यचक्रशक्तीनां पारिशेष्यान्नामान्यनुक्तान्यप्यवसीयन्त इति ॥ ७९ ॥

---

१. नाभौ त्वष्टदलं–ख०से० । २. अन्यच्चतु–ख०से० । ३ चिह्नान्तर्गतो ग्रन्थः ख० नास्ति । ४. तद्धि वंशो वंशपृष्ठास्थिनि–ख० । ५. दक्षिणं वाम–ख० । ६. आदिशब्दात्–ख० नास्ति । ७. रन्तरालं–ख० । ८. दक्षिणपार्श्वं–ख० । ९. वंशयोश्चान्तरालं–ख० । १०. अन्यच्चतुष्टयं–ख० । ११. नाभिदेशस्थपश्चिमादिदक्षिणपार्श्वान्तमनङ्ग–ख० । १२. वाय्वादिनैरृतान्तं–इत्यधिकं ख० । १३. कथमवसीयन्ते–क० । १४. 'पूर्वोत्तर' इत्यारभ्य 'अवसीयन्त इति' इत्यन्तस्य ग्रन्थस्य स्थाने 'पूर्वोक्तचक्रशक्तीनां नामग्रहणात् पारिशेष्याद् नामान्युक्तान्यवसीयन्त इति–ख० ।

(से०)(नाभावित्यादि)। नाभावन्तरष्टदलं पद्मं विचिन्त्य तत्र पृष्ठवंशो वामपार्श्वमुदरं दक्षपार्श्वं चेति पश्चिमादिदिक्चतुष्टये यद्दलचतुष्टयं तत्र क्रमेणानङ्गकुसुमादिचतुष्टयं न्यसेत्। वंशवामपार्श्वयोरन्तरालं वायव्यकोणमारभ्य नैर्ऋत्यकोणपर्यन्तं विदिग्दलचतुष्टयेऽनङ्गरेखादिचतुष्टयं विन्यसेत्। सव्य दक्षिणवामयोरिति काशाद्दक्षपरोऽयं शब्दः। वामपरत्वे त्वसव्येति छेदः ॥८१-८२॥

(स्वेत्यादि)। स्वाधिष्ठाने षोडशदलं विचिन्त्य तद्दलेषु पूर्वदलमारभ्य कामाकर्षिण्यादिनित्या न्यसेत्। एतावत्पर्यन्तं प्राप्तं प्रादक्षिण्यमपवदति—दक्षावसानकमिति। इहैवाप्रादक्षिण्येन न्यस्तव्या इत्यर्थः। प्राञ्चस्तु—प्रतिदिशं चतस्रश्चतस्रः शक्तयो न्यस्तव्या इत्याहुः। तत्र, सर्वेषु न्यासेषु तत्तच्चक्रचिन्तनस्यावश्यकत्वेन चिन्तितेषु दलेष्वेव यथासंख्यन्यायेन पूजनस्येव न्यासस्यापि युक्तत्वात्, तत्तच्चिन्तनस्य नाभौ त्वष्टदलमित्यनेनैकदेशकीर्तनेन ज्ञापितत्वात्।

**मूलाधारे न्यसेन्मुद्रादशकं साधकोत्तमः।**
**पुनर्वंशे च [1]सव्ये च वामे चैवान्तरालके ॥ ८० ॥**
**ऊर्ध्वाधो दशमुद्राश्च ऊर्ध्वाधोवर्जितं पुनः।**
**ब्रह्माण्याद्यष्टकं दक्षजङ्घायां तास्तु पूर्ववत् ॥ ८१ ॥**
**वामजङ्घां समारभ्य वामादिक्रमतोऽपि च।**
**सिद्ध्यष्टकं न्यसेत्तेषु द्वयं पादतले न्यसेत् ॥ ८२ ॥**

(दी०) सर्वसंक्षोभिण्यादिमुद्राशक्त्यावरणन्यासमाह—मूलाधारे इति। मूलाधारे मूलाधारप्रदेशे। शेषं स्पष्टम्।

ननु किं मूलाधारे मुद्रादशकं केन[2] विधानेन न्यस्तव्यमित्याशङ्कायामाह—पुनर्वंशे इति। पुनःशब्दान्नाभौ त्वष्टदलं [3]तत्रत्यान्यष्टदलस्थानोक्तस्थानान्युच्यन्ते। वंशे पृष्ठवंशे। सव्ये च पार्श्वे। चकारादुत्तर[4]दक्षिणयोः पार्श्वयोर्ग्रहणम्। वामे चैवान्तरालके पृष्ठवंशवामपार्श्वान्तराले। चकाराद्वामपार्श्वाद्यन्तरालानि गृह्यन्ते। कोऽर्थः? पृष्ठवंशादिदिक्षु [5]वायव्याद्यन्तरालेषु [6]चोर्ध्वाधश्च[7] दश मुद्रा न्यसेत् ॥८०॥

१. पुनः सव्ये च वंशे च—ख० से०। २. 'केन विधानेन' इत्यत्र ध्यानेन—ख०। ३. तद्वदत्यत्राऽष्टदलन्यासोक्तस्थानान्युच्यन्ते—ख०। ४. चकारादुत्तरयोर्ग्रहणम्—ख० ५. दिशि—ख०। ६. वायव्याद्यन्तराले—ख०। ७. चोर्ध्वाधस्ताच्च—ख०।

ननु ऊर्ध्वाध इति किमान्तरं स्थानद्वयम्, [1]अन्यन्नेत्याह–ऊर्ध्वाध दी० इति। आन्त[2]रोर्ध्वाधःस्थानद्वयम्।

इन्द्रेशानदिशोर्मध्ये स्थानम[3]न्यत्प्रकीर्तितम्।
नैर्ऋताम्बुदिशो[4]र्मध्ये स्थानमन्यत् [5]प्रकीर्तितम् ॥

तत्त्वविमर्शिन्यामस्मद्गु[6]रूक्तरीत्या दशलोकपालार्चनरीत्यैव स्थानद्वयं शिष्टमुद्रा[7]द्वयस्य कल्पनीयम्।

ब्रह्माण्याद्यावरणन्यासमाह—ब्रह्माण्यादीति। विन्यसेत् [ इत्यनुषङ्गः। शिष्टं ] [8]स्पष्टम्।

ननु दक्ष[9]जङ्घायां विन्यसेदित्युक्तम्, तत्र तासां कानि स्थानानीत्यत[10] आह—तास्त्विति। ता ब्रह्माण्याद्याः। पूर्ववत् 'पुनः सव्ये च वंशे च' इत्युक्तस्थानेषु। अत्र पृष्ठवंशशब्देन पश्चाद्भागो लक्ष्यते। दक्ष[11]जङ्घायाः पश्चिमादिचतुर्दिक्षु वायव्यादिविदिक्षु च। ता ब्रह्माण्या[12]द्या न्यस्तव्या इत्यर्थः ॥ ८१ ॥

अणिमाद्यावरणन्यासमाह–वामजङ्घामिति। वामजङ्घां समारभ्य वामजङ्घायाः पश्चिमभागमारभ्य। वामादिक्रमतोऽपि वामान्तरालक्रमेण। तेषु पूर्वोक्तेषु स्थानेषु [13]अष्टसु सिद्ध्यष्टकं न्यसेत् [14]इति शिष्टद्वयं पादतले पाद[15]तलयोर्न्यसे[16]दित्यर्थः ॥ ८२ ॥

(सें०) ( मूलेत्यादि )। पुरः पूर्वस्यां दिशि, सव्ये दक्षिणस्याम्, वंशे प्रतीच्याम्, वामे उदीच्याम्। अन्तरालके आग्नेयादीशानान्तविदिक्चतुष्टये, अष्टदले प्रथमदिगन्तरालादेवारम्भदर्शनात्। तेनेशादिवायव्यन्तक्रमशङ्का निरस्ता, एकत्र निर्णीत इति न्यायात्। ऊर्ध्वाधः मूलाधारस्य(स्थ)कर्णिकात्व( कोर्ध्वाधः )प्रदेशयोः। एवं दशस्थानेषु मुद्रादशकं न्यसेत्। मध्यरेखान्यासमाह—ऊर्ध्वाधोवर्जितमिति। पूर्ववत्प्रागादिदिक्ष्वाग्नेयादिविदिक्षु च प्रादक्षिण्येन चतस्रश्चतस्र इत्यष्टौ देवता न्यसेत्। नवमदशमदेवतयो-

१. अन्यत्–ख० नास्ति। २. अन्तरादूर्ध्वाधः स्थानद्वयम्–क०। ३ स्थानमस्य प्र–ख०। ४. नैर्ऋत्यम्बीशयोर्म०–क०। ५. स्थानमस्य–ख०। ६. मस्मदुक्त–ख०। ७. शिष्टमुद्रास्थानद्वयमित्यर्थः–ख०। ८. कंसान्तर्गतं क० नास्ति। ९. दक्षिण–क०। १०. अतः–ख० नास्ति। ११. दक्ष–क० नास्ति। १२. वायव्याद्यन्तरालेषु–ख०। १३ अष्टसु–ख० नास्ति। १४. इति–क० नास्ति। १५. पादतलयोः–ख० नास्ति। १६. इत्यर्थः–ख० नास्ति।

रभावादेव प्राप्तं वर्जनमूर्ध्वाधोवर्जितपदेनानूदितम्। प्राञ्चस्तु—ऊर्ध्वाधोवर्जितं पुनरिति पादस्तृतीयरेखावाक्य एवान्वितः। पुरः सव्ये चेत्यत्रापि पुनरित्येव पाठो न तावद्रेफ इति भ्राम्यन्तो व्याचक्षते। ननु मूलाधारे मुद्रादशकध्यानेन न्यस्तव्यं किमित्याशङ्कायामाह—पुनरिति। पुनःशब्दान्नाभौ त्वष्टदलमित्यत्रोक्तानि स्थानानि पुनरिहापि ग्राह्याण्युच्यन्ते। वंशे पृष्ठवंशे। सव्ये वामपार्श्वे। चकारादुदरदक्षपार्श्वयोर्ग्रहणम्। वंशसव्यपदयोर्व्युत्क्रमेणान्वयः। वामेऽन्तराले वायव्यकोणे। चकारादीशानाग्निनिर्ऋतिकोणपरिग्रहः। प्रतीच्याद्युदगन्तदिक्चतुष्टये वायव्यादिनिर्ऋत्यन्तविदिक्चतुष्टयधर्मातिदेश एव तात्पर्यग्राहकः। ननूर्ध्वाध इति किमान्तरं स्थानद्वयं नेत्याह—ऊर्ध्वाधोवर्जितमिति। इन्द्रेशानयोर्मध्य ऊर्ध्वस्थानम्, वरुणनिर्ऋत्योर्मध्येऽधःस्थानमित्यर्थ इति। तदिदमतीव प्रामादिकम्, स्वरूपाख्यानमेवास्य प्रत्याख्यानं प्रकीर्तितमिति दिक्। प्रथमरेखान्यासमाह—वामजङ्घामिति। वामजङ्घायाः पूर्वभागमारभ्य दक्षजङ्घायां यद्यदवयवेषु येन क्रमेण देवताष्टकन्यासस्तद्वदेव वामजङ्घायामपि न्यासे सत्यर्थात्तद्वैपरीत्यमेव फलतीत्याशयेनाह—वामादिक्रमत इति। उ(प्रागु)त्तरपश्चिमदक्षिणदिक्षु ईशानाद्याग्नेयान्तविदिक्षु चेति क्रमेणेत्यर्थः। पादतले पादतलद्वये। अद्याप्युपस्थितत्वाद्वामादिक्रमत इत्युक्तत्वादादौ वामं ततो दक्षमिति क्रमः। प्राञ्चस्तु—दक्षजङ्घायां पूर्ववदित्यनेन पश्चिमादिदिक्षु वायव्याद्यन्तरालेषु चेति व्याख्याय वामजङ्घामित्यत्रापि पूर्ववदिति पदानुवृत्तिमभिप्रेत्य पश्चिमभागमारभ्येति व्याख्याय वामादिक्रमत इति पदं वामान्तरालादिक्रमार्थकं स्वीकृत्य शिष्टद्वयमेकस्मिन्नेव पादतले न्यसेदिति व्याचख्युः। तत्सर्वं प्रामादिकमेवेति स्पष्टम् ॥ ८३–८५ ॥

**कारणात्प्रसृतं न्यासं दीपाद्दीपमिवोदितम्।**
**एवं विन्यस्य देवेशीं[1] स्वाभेदेन विचिन्तयेत् ॥ ८३ ॥**

(दी०) उक्तन्यासस्योत्कर्षं दर्शयन्नु[2]पसंहृत्य फलभूतां वासनां विधत्ते—कारणादिति। कारणात् प्रकाशविमर्शसामरस्यरूपान्निखिलजगद्रूपात्। दीपाद्दीपमिव प्रसृतम्, महाभासं कारणानुरूपम्। एवमुक्तप्रकारेण, उदितं कथितम्, न्यासं विन्यस्य, स्वात्मनोऽभेदेन विचिन्तयेत्। श्रीचक्रावयवान् सशक्तिकान्। स्वदेहावयवैरपृथक्त्वेन विभाव्य तदधिष्ठात्र्या परया च [3]स्वात्मनोऽभेदं भावयेदित्यर्थः ॥ ८३ ॥

१. देवेशि—क० से०। २. दर्शयितुमुप-ख०। ३. स्वात्मनोऽप्यभेदं—ख०।

(से०) चक्रन्यासोपसंहारपूर्वकं तदीयवासनां विधत्ते (कारणादित्यादि)। कारणं सर्वजगत्कारणं शिवशक्तिसामरस्यापन्नं ब्रह्म, तस्मात् प्रसृतमिदं चक्रन्यासनामकं कर्म। अत एव प्रसारपरमार्थन्यायेन तद्रूपमेवेति दृष्टान्तेन द्रढयति— दीपादिति ॥ ८६ ॥

**ततश्च करशुद्ध्यादिन्यासं कुर्यात् समाहितः।**
**[1]अहं ते कथयाम्यद्य विद्यान्यासं शृणु प्रिये ॥ ८४ ॥**

**(दी०)उक्तैस्त्रिभिः षोढादिभिर्न्यासैः परचिदानन्दलक्षणं भावयन् परिपक्वहृदयो बाह्यपूजाक्रियायोग्यतायै करशुद्ध्यादिन्यासं कुर्यादित्याह–तत इति। ततस्त्रिविधन्यासानन्तरं करशुद्ध्यादिन्यासम्।**

**कर्मणा[2]त्मपरामृष्टकार्य[3]भूताङ्गुलिस्थितम्।**
**करोमि चिन्मयीं शुद्धिं करयोः स्पर्शबोधिनीम्[4] ॥**

**इत्यभियुक्तवचनोक्तरीत्या करशुद्धिन्यास आदिर्यस्य न्यासस्य, जातावेक[5]वचनम्। समाहितः सावहितः। करशुद्ध्यादिन्यासश्चतुः[6]शतिशास्त्रोक्तः। अतो नात्रोच्यते[7], केवलं नाम्नैव गृह्यते ॥ ८४ ॥**

(से०) तदेवमुक्तरीत्या स्वदेहे विन्यस्य स्वस्य(श्च) आत्मा च तयोरभेदेन कारणन्यासौ यथाक्रमं चिन्तयेत्। स्वशब्दो जीवात्मपरः। आत्मशब्दो देहपरः। स्वो ज्ञातावात्मनीत्यमरः। आत्मा देहे धृतौ जीव इति विश्वः। त्रिपुरसुन्दर्यभिन्नमात्मानं तदावरणदेवतासमूहाभिन्नं स्वदेहञ्च विभावयेदिति भावः। (तत इत्यादि)। सृष्टिचक्रन्यासोत्तरं करशुद्धिन्यासश्चतुरासनन्यासो रक्षाषडङ्गन्यासो वाग्देवतान्यास इति पूर्वतन्त्रोक्तं न्यासचतुष्टयं कुर्यात् ॥८७॥

अथ नवयोनिन्यासमाह—(श्रोत्रेत्यादि)। इदञ्च श्लोकद्वयं प्राच्यां टीकास्वधृतमपि पुस्तकेषूपलभ्यमानत्वाद् व्याख्यायते। अत्र सप्तविंशतावयवेषु त्रिभिस्त्रिभिरवयवैरेकैका योनिस्तासां कोणत्रयेषु पुनः पुनर्बीजं त्रयं न्यसेदित्यर्थः। अत्र बीजत्रयपदं बालाबीजत्रयपरमिति सौभाग्यरत्नाकरकारः। पञ्चदशीकूटत्रयपरमिति तु सुभगार्चारत्नाकरः। यत्तु "बालया त्रिपुरेशान्या नवयोन्यङ्कितं

---

**१ अहमित्यादि श्लोकार्धं सेतुबन्धे न व्याख्यातम्। अत्र–"श्रोत्रयोश्चिबुके चैव शङ्खास्येषु दृशोर्नसि। अंसद्वये च हृदये न्यसेत् कूर्परकुक्षिषु ॥ ८८ ॥ जान्वन्धुपादगुह्येषु पार्श्वहृत्सु स्तनद्वये। सकण्ठे नवयोन्याख्यं न्यसेद् बीजत्रयात्मकम् ॥ ८९ ॥" इति श्लोकद्वयमधिकं व्याख्यातम्। २. कारणा–ख०। ३. रूपा–ख०। ४. शोधिनीम्–ख०। ५. जातावेकत्वम्–ख०। ६. चतुःशती–ख०। ७. नोच्यते–ख०।**

से० न्यसेत्" इति ज्ञानार्णवे वचनं तत्र बालातोऽतिदेशप्राप्तं यद् बालया नवयोन्यङ्कितं न्यसेदित्यनूद्य[ते], तत्त्रिपुरेशान्येत्यनेन पञ्चदश्याः करणत्वविधानपरम्। नव्यास्तु—त्रिपुरेशान्या इति षष्ठ्यन्तं तेन यत्पञ्चदशीसम्बन्धिनवयोनिन्यासं कुर्यात्तद् बालयेति वचनव्यक्त्या बालाया एव करणत्वविधिः। अत एवोत्तरत्रान्तर्नवयोनिन्यासे पुनर्बालां समुच्चार्येत्यत्र पुनःशब्द उपपद्यत इत्याहुः। तन्न, तथात्वे प्रकृतित एव तल्लाभे पुनर्विधिवैयर्थ्यापत्तेः। न च प्रकृतितः प्राप्तेऽपि न्यासे तत्करणे बीजानां कूटत्रयेण बाधे प्राप्ते प्रतिप्रसवत्वेन तत्सार्थक्यमिति वाच्यम्, कूटत्रयस्य करणत्वेन विधेरदर्शनेन कूटैर्बीजबाधायोगात्। पुनःपदं तु नवयोनिन्यासावृत्तिबोधकं तत्सार्थकं भविष्यति। अस्तु वा तस्मिंस्तन्त्रे बालयैव न्यासविधिः। प्रकृते तु कूटैरेवेत्यपि ज्ञेयम्। अत्र त्रिकोणन्यासे पूर्वत्राग्रदक्षवामकोणानां क्रमदर्शनात् स एवेह ग्राह्यः। अन्तर्नवयोनिन्यासे पद्धतिकारैः स्वाग्रादिप्रादक्षिण्येनेति लेखनात् स एव वा। श्रोत्रयोश्चिबुक इति पाठक्रमानुसारेणादौ श्रोत्रयोस्ततश्चिबुक इति वा। तत्रापि श्रोत्रनेत्रादौ दक्षिणाद्यत्वस्य तत्र तत्रोक्तत्वात्तथैवेहापि। आचारानुगुण्यात्त्वादौ वामश्रोत्रे न्यासो युक्तः। वामादिक्रमत इति पदस्य सन्निहितत्वेनानुवृत्तिसम्भवात्। अयञ्च नवयोनिन्यासो द्विविधो बहिरन्तर्भेदात्। बाह्यस्तु साम्प्रतमुक्तः। आन्तरस्तु मूलाधारादिब्रह्मरन्ध्रान्तेषु नवसु स्थानेषु चतुरस्राद्यावृत्ताः (ताः) स्वाभिमुखाग्रा नवयोनीर्विचिन्त्य तासु कार्य इति बहवः। तत्र प्रमाणं मृग्यम्। यत्तु ज्ञानार्णवे वचनम्—

पुनर्बालां समुच्चार्य चतुरस्रं च चिन्तयेत्।
गोलकं न्यासयोगेन श्रीचक्रं परिचिन्तयेत्॥
षट्चक्रेषु ललाटे च सीमन्ते च शिरोबिले।
नव स्थानानि सङ्कल्प्य न्यसेद्देवि ततः परम्॥
श्रीविद्यां ब्रह्मरन्ध्रे तु पृष्ठतो गुरवः क्रमात्।
तिथिनित्यास्ततो देवि मातृकास्वरसंयुताः॥
मातृकावन्न्यसेद् देवि वक्त्रे सौभाग्यदायिनीः।

इत्यारभ्य तिथिनित्यामण्डलं कथयित्वा "प्रकटाद्या न्यसेत् पश्चादाधारादिषु मन्त्रवित्" इत्यन्तम्। तस्यायमर्थः—बहिर्नवयोनिन्यासानन्तरं पुनर्बालामुच्चार्य चतुरस्रादिगोलकान्तं श्रीचक्रं मूलाधारादिब्रह्मरन्ध्रान्तेषु नवसु स्थानेषु न्यासोपायत्वेन विचिन्त्य तेषु न्यसेत्। अर्थाच्छ्रीचक्रदेवता इत्यर्थः। चतुरस्रशब्दो

भूगृहपरः । गोलकशब्दो बिन्दुपरः । न्यसेदित्यनेनाक्षिप्ता देवता एकादशा- से०
धिकशतसंख्या एव सिद्धेरत्नत आह—श्रीविद्यामिति । बिन्दौ देवीं तत्पृष्ठ
ओघत्रयं तदनन्तरे त्रिकोणे तिथिनित्याश्च न्यसेदिति विशेष इत्यर्थः। एवं
सृष्टिचक्रन्यासं सम्पूर्णं विधाय वक्त्रे नित्यामण्डलन्यासं कुर्यात् । तत आधारा-
दिषु नवसु प्रकटादियोगिनीन्यासं कुर्यादिति । केचित्तु बालया चतुरस्रवृत्तयो-
श्चिन्तनं ततो नित्यामण्डलन्यासस्ततः प्रकटादियोगिनीस्त्रैलोक्यमोहनचक्र-
विशिष्टा न्यसेदित्यर्थ इत्याहुः । तन्न, श्रीचक्रं चिन्तयेदित्यस्य दूरस्थेन प्रक-
टादिवाक्येन सहान्वयस्यायुक्तत्वात् । श्रीविद्यां ब्रह्मरन्ध्र इति वाक्यस्यालग्न-
कत्वापत्तेश्च । नव्यास्तु—श्रीचक्रपूजाप्रकरणे मूलदेवीपूजोत्तर तिथिनित्य-
पूजनात् प्राग्गुरुमण्डलपूजनस्याकथनेन तादृशक्रमविरुद्धो न्यासोऽत्र न युक्तः ।
किञ्च, नित्यामण्डलस्य त्रिकोण एव न्यसनीयत्वेन मुखे स्वरस्थानेषु तन्न्यास-
कथनमसमञ्जसं नवयोनिन्यासोत्तरं चतुरस्रवृत्तचिन्तनञ्च व्यर्थम् । तस्मान्नात्र
सृष्टिचक्रन्यासस्य चर्चापि । श्रीविद्यां ब्रह्मरन्ध्रे त्वित्यर्थन्तु तन्त्रान्तरीयं केनचिद्
भ्रान्तेन प्रक्षिप्तम् । अत एव तन्त्रसारे तदर्धन्न दृश्यते। अप्रक्षिप्तत्वे वा स्वात-
न्त्र्येण श्रीविद्यान्यासगुरुन्यासयोः प्रतिपादकत्वेन व्याख्येयम् । तस्माच्चतुरस्रा-
वृत्ताः (ताः) स्वाभिमुखाग्रा नव योनीराधारादिषु विचिन्त्य स्वाग्रादिप्रादक्षिण्ये-
नान्तर्नवयोनिन्यासविधानार्थ एवैष सन्दर्भः । गोलकन्यासयोगेनेत्यस्यार्थस्तु
चिन्त्यो गुरुमुखादवगन्तव्यो वेति व्याचक्षते । तदतीव साहसम्, पूजाक्रम-
न्यासक्रमयोर्विरोधस्याप्रयोजकत्वात्, यथावचनमनुष्ठातुं युक्तत्वात् । अत एव
नित्यानां मुखे न्यासोऽपि युज्यते । अथापि तिथिनित्यास्तत इत्यनेन त्रिकोणे
न्यासविधिः । मातृकावन्न्यसेदिति तु श्रीचक्रन्यासान्ते विधीयमानो न्यासो
भिन्न एवेति व्याख्यातत्वादप्यदोषः । वचनेन विधीयमानस्य चतुरस्रवृत्तचिन्त-
नस्य वैयर्थ्योक्तिस्त्वतीव चमत्कृता । त्वत्पक्षे श्रीविद्यागुरुन्यासयोर्वैयर्थ्योक्तौ वा
किमुत्तरम् । प्रक्षिप्तत्वोक्तिस्तु साहसमेव, ग्रन्थान्तरे तददर्शनस्याप्रयोजकत्वात्।
चक्रन्यासचर्चाया अप्यभावे 'श्रीचक्रं परिचिन्तयेत्' इति वाक्यस्य भवत्पक्षे
का गतिः? नवयोनिचिन्तनादिवाचकपदगन्धाभावेऽपि तदङ्गीकारः श्रीचक्रा-
दिपदकदम्बसत्त्वेऽपि न तच्चर्चेत्युक्तिस्तु पक्षपातो व्यामोहो वा। गोलकपदस्यार्थो-
नाथमुखाद्वेद्य इत्युक्तिस्तु शिष्यवञ्चनमात्रम् । तस्मात् पद्धतिकारैर्विलिख्यमाने-
ऽन्तर्नवयोनिन्यासे तन्त्रान्तर मूलमन्वेष्यमिति दिक् ॥ ८८–८९ ॥

**मूर्ध्नि गुह्ये च हृदये [1]नेत्रेषु त्रितयेषु च ।**

---

१. नेत्रत्रितय एव च–ख० से० ।

श्रोत्रयोर्युगले [1]चैव मुखे च भुजयोस्तथा[2] ॥ ८५ ॥
पृष्ठे जान्वोश्च नाभौ च विद्यान्यासं [3]विधाय च ।

(दी०) तत्रानुक्तं विद्यान्यासमाह—मूर्ध्नीति । [4]विद्याया बीजत्रयेण न्यासो विद्यान्यासः । मूर्ध्नि वाग्भवबीजम्, हृदये शक्तिबीजम्, गुह्ये कामराजबीजम् । एवं सर्वत्र स्थानत्रये बीजत्रयमुच्चरन्न्यसेदित्यर्थः । [ [5]शिष्टं स्पष्टम् । ]

(से०) श्रीविद्यान्यासमाह—(मूर्ध्नीत्यादि) । गुह्ये मूलाधारे । जानुनीति जातावेकवचनम् । तेन पञ्चदश स्थानानि तेषु यथाक्रमं पञ्चदशाक्षराणि न्यसेत् । प्राञ्चस्तु—एकैकस्य कूटस्यैव न्यासं वदन्तो विद्यायाः पञ्चवारमावृत्तिं मेनिरे । तत्र मानं त एव जानते । प्रत्युत मूलविद्यापञ्चदशार्णान् मूर्ध्नि मूल इत्यादिकल्पसूत्रविरोधः स्पष्टः ॥ ९० ॥

करशुद्धिं पुनश्चैव [6]आसनादिषडङ्गकम् ॥ ८६ ॥
श्रीकण्ठादीनि[7] वाग्देवीराधारे हृदये पुनः ।
शिखायां बैन्दवस्थाने त्वग्निचक्रादिका न्यसेत् ॥ ८७ ॥

(दी०) करशुद्ध्यादीनां नामान्याह[8]—करशुद्धिमिति । वाग्देव्यो वशिन्याद्याः । श्रीकण्ठादिन्यासः स्वच्छन्दसङ्ग्रहोक्तः, तन्त्रान्तरे प्रसिद्धत्वादिह नोक्तः । शिष्टं स्पष्टम् ।

कामेश्वर्यादिदेवीनां न्यासमाह—आधारे इति ।

बैन्दवस्थाने शिखायामिति व्यत्ययेन क्रमो ज्ञेयः । बैन्दवस्थानम् ।

दीपाकारोर्ध्वमात्रश्च ललाटे[9] वृत्तमिष्यते ।

इति पूर्वोक्तं ललाटम् । शिखा नाम कुण्डलिन्या अग्रं शिवस्य विश्रान्तिस्थानम् । अत्र श्रुतिः—"तस्याः [10]शिखाया मध्ये परमात्मा व्यवस्थितः" इति । तेन [11]शिखाशब्देन तद्व्याप्तिस्थानं ब्रह्मरन्ध्रं लक्ष्यते । अग्निचक्रादिकाः "अग्निचक्रे कामगिर्यालये [12]मित्रेशनाथात्मके श्री-

१. देवि–ख० से० । २. पुनः–ख० से० । ३. समाचरेत्–ख० से० । ४. 'जानुनि जान्वोः' इत्यधिकं–ख० । ५. कंसान्तर्गतं–ख० नास्ति । ६. आसनानि ष–ख० से० । ७. श्रीकण्ठादींश्च–ख०से० । ८. न्यासमाह–क० । ९. ललाटं वृत्त इष्यते–क० । १० 'शिव' इत्यधिकम्–ख० । ११. शिखाशब्देन–ख० नास्ति । १२. मित्रीशनाथा०–ख० ।

[1]कामेश्वरीदेवीरुद्रात्मशक्तिश्रीपादुकां पूजयामि। सूर्यचक्रे जाल[2]न्धर- दी०
पीठे षष्ठीशनाथात्मके वज्रेश्वरीदेवीविष्णवात्मशक्तिश्रीपादुकां पूजयामि।
सोमचक्रे पूर्णगिरिपीठे आड्डीशनाथात्मके भगमालिनीदेवीब्रह्मात्मशक्ति-
श्रीपादुकं पूजयामि। ब्रह्मचक्रे [3]ओड्याणपीठे चर्यानथात्मके
श्रीमहात्रिपुरसुन्दरीदेवीपरब्रह्मात्मशक्तिश्रीपादुकां पूजयामि"। इति
मन्त्रैर्न्यस्तव्याः। शक्त्याऽग्निसूर्यसोमब्रह्मचक्रादिकाः[4]। कोऽर्थः?
आधारहृदयभ्रूमध्यब्रह्मरन्ध्रेषु वह्निसूर्यसोमब्रह्मचक्रेषु कामगिरिजाल-
न्धर[5]पूर्णगिर्योड्याण[6]पीठेषु रुद्रविष्णुब्रह्मपरब्रह्मात्मकशक्तीः[7] कामे-
श्वरीवज्रेश्वरीभगमालिनीमहात्रिपुरसुन्दरीः न्यसेदित्यर्थः। अय-
मेवार्थः सम्प्रदायविद्भिर्देशिकेन्द्रैः[8] पद्धतिषु प्रपञ्चितः॥ ८५-८७॥

(से०) (करेत्यादि)। विद्यान्यासोत्तरं पुनरपि करशुद्धिचतुरासनरक्षाषडङ्ग-न्यासान् विधाय श्रीकण्ठादिन्यासं कृत्वा पुनर्वाग्देवता विन्यसेत्। मूलाधारादि-स्थानचतुष्टयेऽग्निचक्रादिमन्त्रचतुष्टयेन कामेश्वर्यादिदेवताचतुष्टयं न्यसेदित्यर्थः। प्राञ्चस्तु—करशुद्ध्यादीनां नामानाहेत्यमुं ग्रन्थमवतारयन्तो न्यासचतुष्टयस्या-नावृत्तिं मेनिरे। तत्पुनःशब्दविरुद्धं "ततश्च करशुद्ध्यादिन्यासं कुर्यात् समा-हितः" इत्यस्य वैयर्थ्यापादकञ्च, विध्योरभ्यासेऽप्यर्थस्य सकृदनुष्ठाने पाठेन क्रमनिर्णयानापत्तिश्च। श्रीकण्ठादिन्यासो यथा मन्त्रमहोदधावेकविंशे तरङ्गे "मुनिः स्याद्दक्षिणामूर्तिः" इत्यादिभिरूनविंशत्या श्लोकैः कथितस्तत्रैव द्रष्टव्यः। अग्निचक्रादिन्यासस्तु वरिवस्याप्रकाशेऽस्माभिर्लिखितः॥९१-९२॥

तत्त्वत्रयं समस्तं च विद्याबीजत्रयान्वितम्।
पादादिनाभिपर्यन्तमागलं शिरसस्तथा॥ ८८॥
व्यापकं चैव[9] विन्यस्य स्वात्मीकृत्य परं पुनः।
सन्तर्पयेत् पुनर्देवीं सौम्याग्नेयामृतद्रवैः॥ ८९॥

(दी०) तत्त्वन्यासमाह—तत्त्वत्रयमिति। तत्त्वत्रयम् आत्मविद्या-शिवाख्यतत्त्वानां त्रयम्। समस्तं च तत्त्वत्रयसमष्टिरूपं तुरीयं तत्त्वम्। तदुक्तं स्वच्छन्दसङ्ग्रहे—

१. श्री—ख० नास्ति। २. जालन्ध्र—क०। ३. उड्यिान—ख०। ४. 'अग्नि-चक्रादिकाः' अधिकं—ख०। ५. जालन्ध्र—क०। ६. उड्डियाग—ख०। ७. शक्तीः—ख० नास्ति। ८. देशिकैः—क०। ९. चेति—ख० से०।

दी० धरादिमायान्तमात्मतत्त्वम[1]न्तर्गतं स्मृतम् ।
शुद्धविद्येश्वरसदाशिवविद्या[2]ख्यतत्त्वगाः ॥
शिवशक्तिद्वयं चैव शिवतत्त्वं प्रकीर्तितम् ।
प्रमातृमेयप्रमितिरूपमेतत्त्रयात्मकम् ॥
एतत्तत्त्वं शिवतत्त्वं सर्वतत्त्वमयं शुभम् ।

इति[3] विद्याबीजत्रयान्वितम् । विद्याया बीजानि वाग्भवकामराजशक्तिबीजानि । एतद्बीजसमुदायरूपं तुर्यबीजम् । तैश्चतुर्भिर्बीजैरन्वितं पादादिनाभिपर्यन्तं स्पष्टम् । आ[4]गलमित्यादिसामर्थ्यान्नाभ्याद्यागलं [5]लक्ष्यते। शिरस इति पञ्चमीसामर्थ्याद् गलादिति [6]च लभ्यते। कोऽर्थः ? आत्मविद्याशिवतुरीयतत्त्वानि मूलविद्यावाग्भवकामराजशक्तितुरीयबीजादिकानि चतुर्थ्यन्तनमोन्तकानि उच्चार्य पादादिनाभि[7]पर्यन्तं नाभ्यादिगलान्तं गलादिशिरोऽन्तं समुपस्पृश्य[8] व्यापकं न्यसेदित्यर्थः ।

भूयोऽपि पराहन्ताभावनामाह—स्वात्मीकृत्येति । परं विश्वोत्तीर्णं तेजः पुनः स्वात्मीकृत्य पूर्वं श्रीचक्रन्यासानन्तरं स्वाभेदेन विचिन्तयेदिति । [ [9]परेणैक्यमुक्तम् । इदानीं करशुद्ध्यादिन्यासानन्तरमपि पुनः परज्योतिर्मायावशात् स्वभिन्नमिव प्रतीयमानं स्वाभेदेन विचिन्तयेदिति ]। स्वात्मीकृत्य पुनः करशुद्ध्यादिन्याससामर्थ्यान्माया[10]पगमे श्रीमहात्रिपुरसुन्दरीं स्वात्मतया विभावयेत्यर्थः ।

अमृतप्लावनमाह— सन्तर्पयेदिति। सौम्यं ब्रह्मरन्ध्राधोमुख[11]सहस्रदलकमलकर्णिकामध्यगतपूर्णसोममण्डलमध्यस्थितत्रि[12]कोणान्तरस्थमनक्कानुत्तरात्म[[13]हार्धकलात्मकं सौम्यं मूलाधारचतुर्दलकमलकर्णिकामध्यगतपूर्ववह्निमण्डलमध्यगतत्रिकोणान्तरस्थितमनक्कात्मक]सपरार्धकलारूपमाग्नेयं द्वयोरमृतानल[14]कुण्डलिनीरूपयोरध ऊर्ध्वं

१. तत्त्वस्यान्त–ख० । २. शिवविद्याख्यतत्त्वगाम्–ख० । ३. इति–क० नास्ति । ४. 'स्पष्टम्. आगलमित्यादि' इत्यत्र 'पर्यन्तपदम्'–ख० । ५. लभ्यते–ख० । ६. च–ख० नास्ति । ७. नाभ्यन्तं–ख० । ८. संस्पृश्य–ख० । ९. कंसान्तर्गतं–ख० नास्ति । १०. मायापारगं स्वात्म–ख० । ११. सहस्रारकमल–ख० । १२. त्रिकोणान्तरस्थितमनक्कात्मक–क० । १३. कंसान्तर्गतो ग्रन्थो नास्ति–ख० । १४. कुण्डलीरूपयोः–ख० ।

प्रस[1]रतोर्योनिलिङ्गाकारयोः सामरस्यात् [2]प्रसरदमृतद्रवासारैः सन्तर्पयेद् आप्लावयेत्। अयमेव सम्प्रदायविद्भिर्देशिकैः पद्धतिषु परान्यास [3]इत्युच्यते ॥ ८८-८९ ॥ दी०

(से०)(तत्त्वेत्यादि)। आत्मतत्त्वं विद्यातत्त्वं शिवतत्त्वमिति तत्त्वत्रयं तत्समष्टिस्तुरीयतत्त्वं समस्तम्। एतेषां स्वरूपाणि पूर्वमेव वर्णितानि। विद्या पञ्चदशी च बीजत्रयं चेति द्वन्द्वः। एतच्चतुष्टयेनान्वितं तत्त्वचतुष्टयं कुर्यात्। तत्र तत्त्वत्रये बीजत्रययोगः। पञ्चदश्यास्तुरीयतत्त्वे योग इति तन्त्रान्तरसिद्धः क्रमः। तथा च--आत्मतत्त्वाय नम इत्यादयो मन्त्रा भवन्ति। प्राञ्चस्तु—विद्याया बीजत्रयमिति तत्पुरुषमङ्गीकुर्वन्तस्तुरीयतत्त्वे तु तुरीयविद्यां त्रयोदशाक्षरीं योजयन्ति। तदयथाक्षरम्। न्यासस्थानानि मन्त्रक्रमेणाह—पादादीति। आगलं नाभ्यादिकण्ठान्तम्। आशिरसः कण्ठादिशिरोन्तम। तथेत्यस्मात् परत्राङः प्रश्लेषः। व्यापकं सर्वाङ्ग इत्यर्थः। परं ब्रह्म पुनः स्वात्मीकृत्य स्वाभेदेन विभाव्य। परान्यासमाह–सन्तर्पयेदिति। सोमस्येदं सौम्यं ब्राह्मणादेराकृतिगणत्वात् ष्यञ्। अग्नेरिदमाग्नेयं सर्वत्राग्निकलिभ्यां ढग् वक्तव्यः। चन्द्राग्न्योरमृतद्रवैः स्वात्माभिन्नां देवीं सन्तर्पयेत्। ब्रह्मरन्ध्रस्थचन्द्रमण्डलेऽमृतकुण्डलिनी लिङ्गरूपा, मूलाधाराग्निकुण्डलिनी योनिरूपा, तयोरधश्चोर्ध्वं च प्रसृतयोः सामरस्यान्निर्गलद्भिः क्रमात् सौम्याग्नेयपदवाच्यामृतधारासारैरानन्दमनुभवेदिति भावः ॥ ९३-९४ ॥

एवं चतुर्विधो न्यासः कर्तव्यो वीरवन्दिते ।
षोढान्यासोऽणिमाद्यश्च मूलदेव्यादिकः प्रिये ॥ ९० ॥
करशुद्ध्यादिकश्चैव साधकेन सुसिद्धये ।
प्रातः[4]काले तथा पूजासमये होमकर्मणि ॥ ९१ ॥
जपकाले[5] तथा तेषां विनियोगः पृथक् पृथक् ।
पूजाकाले समस्तं वा कृत्वा [6]साधकपुङ्गवः ॥ ९२ ॥

१. प्रसरयोः–क०। २. क्षरदमृत–ख०। ३. न्यास उच्यते–ख०। ४. कालेऽथवा पूजाकाले वा हो–ख० से०। ५. कालेऽथवा तेषां–ख० से०। ६. साधकवित्तमः–ख०।

(दी०) उक्तचतुर्विध[1]न्यासमनुवादपुरःसरमुपसंहरति—एवमिति। एवमुक्तप्रकारेण। षोढान्यासो हि सुसिद्धये सुखेन न्याससामर्थ्यान्निराकृतप्रत्यूहतया परमनिःश्रेयसप्राप्तये साधकेन मुमुक्षुणा कर्तव्यः, न तु सिद्धेन, तस्य मुक्तत्वात्। [2][न ध्यानं तपःक्रिया।] तदुक्तं विज्ञानभैरवभट्टारकैः—

[3]तैरेव पूज्यते द्रव्यैस्तर्पयेद्वा परापरः।
यश्चैव पूजकः [4]सर्वः स एवैकः क्व पूजनम्॥ इति।

न्यासचतुष्टयस्य कालभेदेन विनियोगमाह—प्रातरिति। प्रातःकाले षोढान्यासम् पूजासमये अणिमादिन्यासम् [5]होमसमये मूलदेव्यादिकन्यासम् जपकाले करशुद्ध्यादिन्यासं कुर्यादिति। अयं पृथक् पृथग् विनियोगः। अथवा पूजाकाले समस्तं चतुर्विधं न्यासं कृत्वा साधकपुङ्गवः साधकश्रेष्ठश्चतुर्विधन्यासकरणसामर्थ्याद्विशीर्यमाणपाशपटलत्वात् प्रत्यासन्न[6]मोक्षत्वात् कृतकृत्य एव॥ ९०–९२॥

(से०) न्यासकाण्डमुपसंहरति—(एवमित्यादि)। षोढान्यासः षडवयवकः। अणिमादिकमूलदेव्यादिकौ प्रत्येकमेकादशावयवकौ। करशुद्ध्यादिकः षोडशावयवकः। तत्र करशुद्धिश्चतुरासनं षडङ्गकं वाग्देवतेति चतुष्कं द्विः नवयोनिर्विद्यान्यासः श्रीकण्ठादिरग्निचक्रादिस्तत्त्वन्यासः परान्यासश्चेति षट्। सप्तमपटलारम्भे कथितौ चक्रेश्वरीन्यासौ द्वाविति भेदात्। अनयोरणिमादिन्यासोत्तरानुष्ठानपक्षे चतुर्दशावयवक एव। एवं चतुश्चत्वारिंशता न्यासैर्घटिताश्चत्वारो गणन्यासा इत्यर्थः॥ ९५॥

एतेषां चतुर्णां न्यासगणानां कालभेदेन व्यवस्थामाह—(प्रातरित्यादि)। प्रातःकाले सन्ध्यादिमातृकान्यासान्तकर्मोत्तरकाले, पूजाकाले पात्रासादनात्पूर्वम्। होमकर्मणि नैवेद्यकालीनहोमारम्भे। जपकाले कुलदीपनिवेदनोत्तरम्। व्यवस्थया कर्तुमशक्तौ त्वाह—पूजाकाले समस्तं वेति। समस्तं चतुर्विधम्। क्रमस्तु पाठक्रमश्रौतक्रमाभ्यामुक्त एवेति भावः। तदयं मथितोऽर्थः—परपूजानन्तरं षोढान्यासस्ततोऽणिमाद्या एकादश ततो बाह्यान्तरौ

१. न्यासानुवाद–क०। २. कंसान्तर्गतो ग्रन्थो नास्ति–ख०। ३. यैरेव–ख०। ४. सर्वम्–ख०। ५. होमकाले मूलविद्यादिन्यासं–ख०। ६. प्रत्यासन्नमोक्षत्वात्। अत एव–ख०।

चक्रेश्वरीन्यासौ ततो मूलदेव्यादिका एकादश ततः करशुद्धिश्चतुरासनं से रक्षाषडङ्गं वाग्देव्य इति चतुष्कं नवयोनि[विद्या]न्यासौ द्वौ पुनः करशुद्ध्यादित्रयं श्रीकण्ठादिरेकः पुनर्वाग्देव्यस्ततोऽग्निचक्रादिस्तत्त्वन्यासः परान्यासश्चेति त्रयं संहृत्य चतुश्चत्वारिंशन्न्यासास्ततोऽपरपूजापरापरपूजान्यतराङ्गं पात्रासादनादीति क्रमेणानुष्ठानमिति सिध्यति ।। ९६-९७ ।।

षट्त्रिंशत्तत्त्वपर्यन्तमासनं परिकल्प्य च ।
गुप्तादियोगिनीनां च मन्त्रेणाऽथ बलिं ददेत् ।। ९३ ।।

(दी०) षट्त्रिंशदिति । षट्त्रिंशत्तत्त्वपर्यन्तं क्षित्यादिशिवान्तं तत्त्वसमुदायरूपमासनं परिकल्प्य चिन्मरीचीनामाधारत्वादासनं श्रीचक्रं परिकल्प्य । तदुक्तं श्रीपराक्रमे—

हृत्सरोजान्तरे [1]ध्यायन् पृथिव्यादि शिवान्तिकम्[2] ।
गुप्तादितप्त[3]कुसुमक्षेपेणाऽऽसनतां नयेत्[4] ।।

गुप्तादि । योगिनीनामि[5]त्यस्यादौ समस्तप्रकटपदमध्याहार्यम् । आदिपदेन गुप्ततरसम्प्रदायकुलकौलनिगर्भरहस्यातिरहस्यपरापररहस्ययोगिन्यो गृह्यन्ते । बलिः पूजा । तत्र निघण्टुः—[6]"बलिः पूजोपहारः" इति । महाकविभिरप्युक्तम्—"अवचितबलिपुष्पा" ( कुमारसं० स० १ श्लो० ६० ) इति । कोऽर्थः ? भावितात्मा [7]बाह्यपूजाकरणात् पूर्वम् ।

यद्यद्बाह्यं वक्ष्यमाणं तत्तदान्तरमाचरेत् ।

इत्यस्मद्गुरूक्त[8]रीत्या अन्तर्यागार्थं स्वशरीरं [9]तत्त्वसमुदायरूपं [10]श्रीचक्रं विभाव्य 'समस्तप्रकटगुप्तगुप्ततरसम्प्रदायकुलकौलनिगभरहस्यातिरहस्यपरापररहस्ययोगिनो[11]श्रीपादुकाभ्यो नमः" इति योगिनीमूलमन्त्रेण स्वशिरसि पूजां कुर्यादित्यर्थः । [12]एतेन बाह्यपूजां सर्वामपि [13]आदावन्ते च कुर्यादिति सूच्यते ।। ९३ ।।

---

१. ध्यात्वं पृ–ख० । २. शिवान्तिमम्–ख० । ३. सौवर्णतप्त–ख० । ४. 'इति' इत्यधिकं–ख० । ५. मित्यत्र–ख० । ६. बलिः पूजोपहारेऽपि दण्डभेदे कलौ शिवे–ख० । ७. भावितात्मपूजाकरणात्–ख० । ८. इत्यस्मदुक्तरीत्या–ख० । ९. तत्त्वं–ख० । १०. श्री–ख० नास्ति : ११ श्री–ख० नास्ति । १२. अत एव–ख० । १३. आदावन्तः कुर्या–क० ।

(से०) (पडित्यादि)। क्षित्यादिशिवान्तानां षट्त्रिंशतस्तत्त्वानां मध्ये पूर्वपूर्वस्योपर्युत्तरोत्तरस्य विभावनपूर्वकं क्षित्यप्तेजोवाय्वित्यादिसदाशिवशक्तिशिवान्तमुच्चार्य तत्त्वात्मकयोगपीठाय नम इति मन्त्रेण तदुपरि ब्रह्मरूपः स्वयमुपविष्ट इव विभावयेत्। तथा च कल्पसूत्रं 'पीठमनुनासने समुपविष्टः" इति। ईदृशस्यासनस्य परितः कल्पनं नाम तत्त्वाधिकरणकोपवेशनविभावनादिचक्रालङ्कारान्तावयवक एकः पदार्थः, तेषामवयवानामासनदार्ढ्यार्थत्वेनासनभावनेतिकर्तव्यतारूपत्वात्। ततश्चासनं परिकल्प्य समस्तं कुर्यादिति पूर्वेणान्वयाच्चक्रालङ्कारोत्तरं न्यासजालं विदधीतेत्यर्थः सिद्धः। परिकल्प्येत्यस्य ददेदित्यनेनान्वयेऽथेतिपदस्य वैयर्थ्यापत्त्या पूर्वश्लोकोक्तक्रिययैवान्वयस्य वक्तव्यतयाऽऽसनन्याअथा( सा )परपूजान्यासयोः पाठप्राप्तक्रमस्याप्यनयैव श्रुत्या बाधोऽस्त्विति तु न शङ्क्यम्, विहितस्त्वात्मपूजन इति क्तप्रत्ययस्यापि श्रुतित्वेन श्रुतिपाठोभयेन केवलश्रुतेरेव सङ्कोचनीयत्वात्। अथासनोपवेशनस्यावयवानेव विवृणोति—गुप्तेत्यादिभिः। गुप्ताया आदिर्गुप्तादिरिति षष्ठीतत्पुरुष एका प्रकटेत्यर्थः। गुप्तादिश्च गुप्तादयश्चेति एकवचनबहुवचनान्तयोर्द्वन्द्वापवादकैकशेषेण गुप्तादय इति रूपं प्रकटाद्या नवेत्यर्थः। तासां योगिनीनां मन्त्रेण समष्टिमन्त्र इति प्रसिद्धेन समस्तप्रकटेत्यादिरूपेण बलिमन्नोदकादिरूपं ददेद् दद्यात्। मान्त्रवर्णिक्य एव बलिदेवताः। अथेतिशब्द उपवेशनविभावनरूपप्रथमावयवानन्तर्यं बोधयति। दद दान इत्यात्मनेपदित्वेन प्रसिद्धाद्धात्वन्तरादनुदात्तत्वलक्षणस्यात्मनेपदस्यानित्यत्वात् परस्मैपदे सति ददेदिति रूपम्। इदं बलिदानमप्यासपर्यासमाप्त्यासनीयविघ्ननिरासार्थत्वादवान्तरप्रकरणाच्चासनस्यैवाङ्गम्। प्राञ्चस्तु—आसनशब्दः श्रीचक्रपरः। गुप्तादीत्येतत्प्राक्समस्तप्रकटेत्यस्याध्याहारः। बलिशब्दः पुष्पाञ्जलिपरः। तेन न्यासजालानन्तरं स्वात्मानं श्रीचक्रत्वेन विभाव्य समष्टिमन्त्रेण स्वशिरसि पुष्पाञ्जलिं निक्षिपेदित्यर्थ इति व्याचख्युः। तदिदं "न विधौ परशब्दार्थः" इति न्यायविरुद्धं कल्पसूत्रादिक्रमविरुद्धं चेत्युपेक्षितम्॥ ९८॥

**पिण्डरूपपदग्रन्थिभेदनाद् विघ्नभेदकम्**[1]।
**गुह्यहृन्मुखमूर्धसु विद्यान्यासेन सुन्दरि॥ ९९॥**

1. भेदनम्—ख० से०।

यागमन्दिरगांश्चैव विघ्नानुत्सार्य मन्त्रवित् ।
( अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ॥
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया )
पार्ष्णिघातेन भौमांश्च तालेन च नभोगतान् ॥ ६५ ॥
अस्त्रमन्त्रेण [1]दिव्यांश्च दृष्ट्या विघ्नानपोहयेत् ।
दिक्ष्वधोर्ध्वं [2]महावह्निप्राकारं परिभावयेत् ॥ ६६ ॥

(टी०) आ[3]न्तरविघ्ननि[4]रासमाह—पिण्डरूपेति । गुह्यहृन्मुखमूर्धसु । गुह्यशब्देन गुदमे[5]ढ्रान्तरालं लक्ष्यते[6] । [ गु[7]दं गुह्यपार्श्वस्थं मेढ्रं लक्ष्यते ] । मुखशब्देन[8] मुखावयवं ललाटं लक्ष्यते । गुह्यहृन्मुख[9]-मूर्धसु चतुर्षु [10]स्थानेषु विद्यान्यासेन [11]विद्यायाः सौभाग्यविद्याया बीजचतुष्टयन्यासेन । पिण्डं कुण्डलिनी । पिण्डशब्देन कुण्डलिनीस्थानं गु[12]दमेढ्रान्तरकन्दो लक्ष्यते । [रूपपदेऽपि व्यत्ययो ज्ञेयः । पदं हंसः । पदशब्देन हंसस्थानं हृदयं लक्ष्यते । रूपं बिन्दुः । रूपशब्देन बिन्दुस्थानं ललाटं लक्ष्यते[13] । ] ग्रन्थिशब्देन यत्र विश्वं सूत्रे मणिरिव ग्रथ्यते तद्विश्वमूलं ब्रह्मरन्ध्रं चिन्मयं लक्ष्यते । [14]एतच्चतुष्टयभेदाद्विघ्नभेदनम् । कोऽर्थः ? गुह्यादिस्थानचतुष्टयेषु[15] विद्याबीजचतुष्टयन्यासेन ।

पातालादिषु लोकेषु ये विघ्ना भेदलक्षणाः ।

इत्यभियुक्तवचनोक्तरीत्या पातालादि[16]रूपाणि पिण्डपदरूप[17]-ग्रन्थिस्थान [18]गुदहृदयललाटब्रह्मरन्ध्राणि भेदलक्षणानि भित्त्वा [19]तदूर्ध्वं ज्वलन्ती ततश्चिन्मयाद्वयपदविश्रान्तिरान्तरो विघ्ननिरास इत्यर्थः । एतेन सर्वमपि बाह्यपू[20]जान्तमन्तः कुर्यादित्युपलक्ष्यते ।

१. दृष्ट्या च दिव्यान्विघ्ना–ख०सं० । २. ततो वह्नि–ख०सं० । ३. अन्तविघ्न–क० । ४. निवारणमाह–ख० । ५. मेढ्रान्तरं–ख० । ६. 'इति पदान्तरम्' इत्यधिकं–क० । ७. कंसान्तर्गतो ग्रन्थो नास्ति–ख० । ८. मूमावयवो–ख० । ९. मध्य–क० । १०. स्थानेषु–ख० नास्ति । ११. सौभाग्यविद्याबीजचतुष्टयन्यासेन–ख० । १२. गुदमेढ्रान्तरं कन्दं लक्ष्यते–क० । १३. कंसान्तर्गतं–क० नास्ति । १४. ए–ख० नास्ति । १५. पु–ख० नास्ति । १६. रूपेण–ख० । १७. रूपरूपातीतस्थाना–ख । १८. कन्दहृदय–ख० । १९. तदूर्ध्वं तदनालचिन्मयाद्वयविश्रान्तिर्निवास इत्यर्थः–ख० । २०. पूजानन्तरमपि कुर्यादित्युपलक्ष्यते–ख० ।

दी० अन्तर्यागे[1] देहस्यैव यागगृहत्वात्तदन्तर्विघ्नान्निरस्य बहिर्याग-[2]मन्दिरगतानां विघ्नानामुत्सारणं कुर्यादित्याह—यागमन्दिरेति ।

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते [3]नश्यन्तु शिवाज्ञया ॥

'हूं[4]अस्त्राय फट्' इति मन्त्रेण मन्त्रवित् साधको निर्गच्छतां [5]विघ्नानां निजवामाङ्गसङ्को[6]चतो मार्गं दत्त्वा उत्सार्य भूमिगतान्न-भोगतान् विद्यांश्च विघ्नानुत्सारयेदित्याह—पार्ष्णिघातेनेति । [पा[7]र्ष्णिघातेन पार्ष्णिघातत्रयेण । भौमान् भूमिष्ठान् विघ्नान् । अस्त्रमन्त्रेणेति सर्वत्रानुवर्तते । तालेन करतालत्रयेण । नभोगतान् अन्तरिक्षगतान् विघ्नान् दृष्ट्या वीक्षणेन विद्यांश्च विघ्नान् ।] अपोहयेद् निःसारयेत् ।

निर्ग[8]तानां विघ्नानां पुनरप्रवेशाय वह्निप्राकारभावनामाह—दिक्ष्वधोर्ध्वमिति ।

संविदग्नौ महासारे विमर्शैकशरीरिणि ।
भेदाभासमिदं हव्यं जुहोम्यपुनरुद्भवम् ॥

इत्यभियुक्तवचनोक्तरीत्या [9]सर्ववस्तुतत्परसंविदेव महावह्निः, स एव प्रकारः दुर्लङ्घ्यत्वात्सर्वतो दिक्षु परिस्फुरदद्वयपरसंविदात्मक-महावह्निप्राकारपरिकल्पनाभावनया भेदप्रतीतिलक्षणानां विघ्नानाम-प्रवेश इत्यर्थः ॥ ९४-९६ ॥

(से०) (पिण्डेत्यादि) । पिण्डः कुण्डलिनी शक्तिरित्यादिस्वच्छन्दसंग्रहोक्त-रीत्या पिण्डशब्देन मूलाधारमुच्यते । पदशब्देन सामीप्यान्मणिपूरम् । रूपशब्देनाप्याज्ञाचक्रम् । एतेषु त्रिषु क्रमेण ब्रह्मविष्णुरुद्रग्रन्थयः सन्ति । एवं गुह्यशब्देन लिङ्गम् । मुखशब्देन ललाटम् । गुह्यादिचतुष्टये वाग्भवादिकूटत्रयं मूलविद्या

---

१. अन्तर्यागगृहस्यैव यागगृहान्तरत्वात् तदन्तर्विघ्न—ख० । २. मन्दिर—ख० नास्ति । ३. गच्छन्तु—ख० । ४. हुः—ख० । ५. विघ्नसङ्घानां—ख० । ६. सङ्कोचात्—ख० । ७. कंसान्तर्गतो ग्रन्थो नास्ति—ख० । ८. निगच्छतां—ख० । ९. सर्वस्फुरितपरसंविदेव—क० ।

चेति चतुष्टयस्य न्यासेन ग्रन्थित्रयस्य भेदनं भवति । तेन चान्तरविघ्ना भिद्यन्त से० इत्यर्थः । केचित्तु ग्रन्थिपदेन ब्रह्मरन्ध्रमुच्यते । तत्र तुरीयबीजस्य न्यासः कार्य इति व्याचक्षते ॥ ९९ ॥

एवमान्तरं विघ्ननिरासमुक्त्वा भौमनाभर्सादिव्यभेदेन त्रिविधानां बाह्य-विघ्नानां निरसनोपायमाह—(यागेत्यादि) । अपसर्पन्त्विवतिश्लोकात्मकं मन्त्रमुच्चरन् वामपार्ष्णिं भूमावभिहन्यात् । तेन भौमविघ्ननिरासः । मन्त्रार्थस्तु स्पष्टः । वामकरतले दक्षमध्यमातर्जनीभ्यामभिघातरूपेण तालेनान्तरिक्षगतान् विघ्नान् हन्यात् । अत्रापि पूर्वमन्त्रस्यैव करणत्वम्, ये भूता विघ्नकर्तार इति मन्त्रलिङ्ग-स्याविशेषेण प्रयोगसमवेतार्थप्रकाशकत्वात् । अत एव विघ्नानुत्सार्येत्यत्र भौम-नभोगते द्वे एव विघ्नविशेषणे । मन्त्रविदिति कथनं तयोर्निरास एव मन्त्रस्य करणत्वमिति द्योतनायेति सङ्गच्छते । परन्तु प्रतिप्रधानन्यायेन मन्त्रो न द्विरा-वर्तनीयः, द्वितीयावृत्तौ भूमिसंस्थिता इत्यंशस्यासमवेतार्थप्रकाशकत्वापत्तेः । अतः सकृदेव मन्त्रमुच्चरन् पार्ष्णिघाततालौ यौगपद्यन कुर्वन् विघ्नद्वयनिरासं कुर्या-दिति निष्कर्षः । अनेनैव न्यायेन दिव्यविघ्ननिरासेऽपि करणत्वेन प्राप्तमिमं मन्त्रमपवदति--अस्त्रेति । पञ्चदश्या हृदयादिषडङ्गन्यासे षष्ठो मन्त्रो यस्तेने-त्यर्थः । अस्त्राय फडिति जातिमात्रेणेत्यन्ये । फट्पदमात्रेणेत्यपि केचित् । दृष्टया क्रूरदृष्ट्यावलोकनेन । ततो दशदिक्षु वह्निमयं प्राकारं परितो भावयेत् ॥ १००–१०२ ॥

**सामान्यार्घ्येण देवेशि! मार्तण्डं परिपूजयेत् ।**
**प्रकाशशक्तिसहितमरुणाकल्पमुज्ज्वलम् ॥ ६७ ॥**
**ग्रहादिपरिवारश्च विश्वतेजोऽवभासनम्[1] ।**

(दी०) सूर्यपूजामाह—सामान्यार्घ्येणेति । सामान्यार्घ्यं विशेषार्घ्यं च [2]वक्ष्यते । [[3]प्रकाशशक्तिसहितश्च] । प्रकाशशक्तिसहितः प्रकाशः परमशिवः, शक्तिर्विमर्शाख्या तया सहितो नित्यसमवेतः ।

स्वप्रकाशशिव एव भास्कर-
स्तद्विमर्शविभवो मरीचयः ।

१. तेजोऽवभासकम्–ख०से० । २. लक्ष्यते–क० । ३. कंसान्तर्गतमधिकं–क० ।

दी० यैः स्म भासयति वेद्यमण्डलं
तस्य पूजनमहन्तया मतिः ॥

[1]इत्यभियुक्तवचनोक्तरीत्या सर्वं सामान्यार्घ्येण स्वात्माहम्भावभावनालक्षणया पूजया भावयेदित्यर्थः । बाह्यार्थस्तु[2] स्पष्ट एव ।

अस्यैव गुणाधिक्यमाह—अरुणेति ।

स्वसंवित्त्रिपुरा देवी लौहित्यं तद्विमर्शनम् ।

इति प्रामाणिकवचनोक्तरीत्या [3]विमर्शविभवविधारुणभूषणम् । उज्ज्वलं उदयास्तमयरहितत्वात् ॥ ९७ ॥

ग्रहादीति । ग्रहादिपरिवारं च[4] विषयान् [5]गृह्णन्तीति ग्रहा इन्द्रियाणि । तेषामादि मनः, तत्परिवारं च विविधविषयग्रहलक्षणसङ्कल्पप्रत्ययप्रवाहप्रवर्तकमित्यर्थः । अत्रोपनिषत्—'धियो यो नः प्रचोदयात्" इति । विश्वतेजोऽवभासकम्, 'तदेव [6]ज्योतिषां ज्योतिः" [7]इत्युपनिषदुक्तरीत्या [8]बाह्यतेजोगणप्रतीतिकारणनिजस्फुरणम् । बाह्यार्थस्तु सोमादयोऽत्र[9] ग्रहाः । सूर्यस्य प्रधानत्वादादिशब्दात् षडङ्गानि गृह्यन्ते । स्पष्टमन्यत् ।

(से०)(सामान्येत्यादि)। पात्रासादनविधौ हि पद्धतिकाराः कलशः सामान्यार्घ्यं विशेषार्घ्यमात्मपात्रं गुरुपात्रं शक्तिवटुकभोगादिपात्राणि चेति यथायथं लिखन्ति । तेषु सामान्यार्घ्यविधानेन तत्पात्रमासाद्य तत्रत्यजलेन प्रकाशशक्तिसमेतं मार्तण्डं पूजयेत् । अरुणा आकल्पा भूषणानि यस्य तम् । ग्रहाः सोमादयोऽष्टौ । आदिशब्देन माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्वका गृह्यन्ते । षडङ्गानि गृह्यन्त इत्यन्ये ॥ १०३ ॥

**सौम्याग्नेययुतैर्देवि ! रोचनागरुकुङ्कुमैः ॥ ९८ ॥**
**मूलमुच्चारयन् [10]सम्यग्भावयेच्चक्रराजकम् ।**
**योगिनीमूलमन्त्रेण क्षिपेत् पुष्पाञ्जलिं ततः ॥ ९९ ॥**

१. इत्यस्मदुक्तरीत्या—ख० । वस्तुतस्तु 'इत्यस्मद्गुरूक्तरीत्या' इत्यपेक्ष्यते । २. तु—ख० नास्ति । ३. विमर्शविधारणम्—ख० । ४. च—क० नास्ति । ५. गृणातीति—ख० । ६. तदेवान्तरं ज्योतिः—ख० । ७. इति श्रुत्युक्तरीत्या—ख० । ८. तेजोगुण—ख० । ९. अत्र—ख० नास्ति । १०. सम्यगालिखेत्—से० ।

मणिमुक्ताप्रवालैर्वा विलोमं मूलविद्यया ।
अशून्यं [1]सर्वदा कुर्याच्छून्ये विघ्नास्त्वनेकशः ॥१००॥

(दी०) बाह्यचक्रोद्धारमाह—सौम्येति ।

सौम्यं कर्पूरम् सोमनामवाच्यत्वात्। आग्नेयं काश्मीरम्, [[2]अग्निशिखासंज्ञकत्वात् । ] "काश्मीरजन्माग्निशिखम्" इत्यमरः । रोचना [3]गोरोचना, अगरुः कालागरुः, कुङ्कुमं घुसृणम्, [4]एतैः सुधया पङ्कीकृत्य तेन स्वर्णादिमये पट्टे[5] हेमसूच्या विलिख्य । मूलं सौभाग्यविद्याम् । उच्चारयन् परेण चेच्चक्रं लेखयति, स्वयं चेल्लिखति तदोच्चरन् चक्रराज [6]चतुराम्नायमयत्वात् [7]सर्वपूजाचक्रेभ्याऽप्युत्तमं सम्यक् ।

समत्रिकोणशक्त्यग्रं समरेखं मनोहरम् ।

इत्यभियुक्तवचनोक्तरीत्या भावयेल्लिखेद् [8]लेखयेद्वा । तदुक्तमभियुक्तैः— 'कस्तूरीघुसृणेन्दुचन्दनसुधाभिश्चक्रराजं लिखेत्' इति[9] ।

योगिनीति । योगिनीनां प्रकटादीनां मूलमन्त्रेण 'समस्तप्रकट' इत्यादिपूर्वोक्तेन पुष्पाञ्जलिम् । ततः श्रीचक्रे निक्षिपेत् ॥ ९८-९९ ॥

[10]पुष्पादीनामभावे[11]ऽपि कार्यतामाह—मणिमुक्तेति ।

विलोम प्रतिलोमम् । [12]उच्चारितमूलविद्यया सौभाग्यविद्यया वा । [13]वाशब्दः काका[14]क्षिवदुभयत्रापि सम्बध्यते। अशून्यम् अविरहितम्। [15]सर्वदा येन केन प्रकारेण कुर्यात् । पुष्पाणामभावे मण्यादिभिर्वा योगिनीमूलमन्त्रेण सौभाग्यविद्यया । [16]सर्वदा अशून्यं चक्रं कुर्यात् पूजयेदित्यर्थः ।

[[17]थाऽकरणे निष्फलतामाह]—शून्ये इति । मण्यादिभिः शून्ये सति श्रीचक्रेऽनेकशः[18] बहुशो विघ्नाः सपर्यान्तरायाः सम्भवेयुः॥१००॥

---

१. सर्वथा–ख०से० । २. कंसान्तर्गतं–ख० नास्ति । ३. गोरोचनम्–क० । ४. एतैतेपंकुरश्यात्ययाकीरुनस्वर्णा–ख० । ५. पट्टे–क० नास्ति । ६. चतुराम्नायत्वात्–क० । ७. तत्सर्व–ख० । ८. लेखयेच्च–ख० । ९. 'तत्र' इत्यधिकं–क० । १०. पुष्पाणामभा–ख० । ११. ऽपि कार्यतामाह–क० नास्ति । १२. उच्चरितया सौभा–ख० । १३. वा–क० नास्ति । १४. काकाक्षिवदुभयत्र संयुज्यते–ख० । १५. सर्वथा एकेनापि प्रकारेण–ख० । १६. सर्वथा अशून्यं चक्रं पूजयेदि–ख० । १७. कंसान्तर्गतं–क० नास्ति । १८. अनेकशो विघ्ना बहवो विघ्नाः–ख० ।

(से०)(सौम्येत्यादि)। गोरोचनादित्रयं सौम्याग्नेयद्रवाभ्यां मर्दितं चन्द्रलेखने कारणम्, लेखनी तु लेखन्या हैमतारयेति ज्ञानार्णवे कथिता। सौम्याग्नेयपदे परान्यासप्रकरणेऽनुपदमेव व्याख्याते। कुण्डगोलोद्भवे इति यावत्। तदुक्तं कुमारीकल्पे चक्रराजं प्रकृत्य—

एतत्तु विलिखेत्ताम्रे कुण्डगोलविलेपिते।
स्वयम्भुकुसुमैर्युक्ते कुङ्कमागुरुनेविते॥ इति।

स्वतन्त्रेऽपि—

इत्थं विन्यस्तदेहस्तु चक्रराजं लिखेत् सुधीः।
स्वर्णे वा रजते ताम्रे पाषाणे वाष्टधातुषु॥
स्वयम्भुकुसुमं कुण्डगोलोत्थं रोचनागुरुः।
काश्मीरमृगनाभी च मद्यं च मलयोद्भवम्॥
एष गन्धः समाख्यातः सर्वदा चण्डिकाप्रियः।
एतेन गन्धयोगेन योनिचक्रं समालिखेत्॥ इति।

प्राञ्चस्तु—सौम्यं कर्पूरम्, "घनसारश्चन्द्रसंज्ञः" इति कोशात्। आग्नेयं काश्मीरम्, "काश्मीरजन्माग्निशिखम्" इति कोशात्। एतत्पञ्चकं कारणेन मर्दितं सत्कारणमिति व्याख्यन्। ते परान्यासप्रकरणे मूलकृता सूचितं सौम्याग्नेयपदयोरर्थं स्वयमुपपाद्यापि कथमिह व्यस्मार्षुः। यत्तु पूर्वतन्त्रे सिन्दूरादेर्निरपेक्षकारणत्वमुक्तं तदीदृशद्रव्यालाभेऽनुकल्पत्वेन ज्ञेयम्। नव्यास्तु—यदा भूमौ भूप्रस्तारो लिख्यते तदा कुङ्कुमरजोभिः पूरणं मेरुप्रस्तारश्चेत् सिन्दूररजोभिस्ताम्रादिपट्टे चेद्रोचनादिपङ्केन लेखनमिति व्यवस्थामाहुः। तत्र प्रमाणं मृग्यम्, भवदभिमते ज्ञानार्णवतन्त्रे—

भूप्रदेशे समे शुद्धे सिन्दूररजसापि वा।
कुङ्कुमस्य रजोभिर्वा भूमौ चक्रं समालिखेत्॥

इति श्लोके प्रत्युत सम इति पदेन भूप्रस्तारस्यैवाभिमतिध्वननेन मेरुप्रस्तारस्य भवत्तन्त्रानभिमतत्वात्। "यत्तु श्रीचक्रमपि देवेशि मेरुरूपं न संशयः" इत्यर्णववचनं तदेतच्चक्रं मेरुरूपमिति सबिन्दुकपाठमगलप्य श्रीविद्यार्णपदेन समस्ततामङ्गीकृत्य नवार्णमेरुनामकमन्त्रान्तरस्य निखिलश्रीविद्यामन्त्रघटकत्वात्तादृशाक्षरैरेव चक्रोत्पत्तेर्लकारः पृथिवीबीजं तेन भूबिम्बमुच्यत इत्यादि तत्रैव कथनाच्च सर्वानुगतत्वरूपधर्मवत्त्वमात्रेण सादृश्याभिप्रायमिति भवद्भिरेव व्याख्यातत्वेन विरोधाच्च। यदपि भूप्रदेशे भूमाविति पदद्वयवैयर्थ्यापातादसम इति

छित्त्वा भूमावेव मेर्वानुगुण्येन विषमे प्रदेशे लिखेदिति व्याख्येयमिति । तदपि सेन, लिखेदिति क्रियाया अपकर्षेण द्वयोरपि भिन्नवाक्यत्वेन तद्घटकपदद्वयस्य वैयर्थ्याभावात् । एतत्तन्त्रेऽपि भूप्रदेशे समे शुद्ध इत्येतत्समानच्छायेन वाक्येन भूप्रस्तारस्यैव ध्वनिततया तत्संवादायैवमेव व्याख्यातुमुचितत्वाच्च । अस्तु वा तन्त्रराजगौरीयामलादिसम्मतस्य मेरुप्रस्तारस्येह ध्वननमात्रम्, तथापि रोचनाकुङ्कुमाभ्यां चेति विधौ सिन्दूररजसेति विधौ च तृतीयाविभक्तेरविशेषेऽपि क्वचिच्छुष्कचूर्णपूरणं क्वचित्पङ्केन लेखनमिति पूर्वोक्ता व्यवस्था वेति द्वयमप्यप्रमाणकमेवेति दिक् । उच्चारयन्निति तु स्वार्थे णिच्, करशुद्धिं तु कारयेन्निषादस्थपतिं याजयेदित्यादिवदाचार्यस्य प्रयोजककर्तृत्वमभिप्रेत्य वा । प्राञ्चस्तु—उच्चारयँल्लेखयेत्, उच्चरन्नालिखेदिति पदद्वयाध्याहारेण स्वयं लिखेत् परहस्ताल्लेखयेद्वेति व्याचक्षते । एतत्पक्षे यस्य हस्ताच्चक्रं लेखनीयं स मूलोच्चारणादिकार्युपासक एवापेक्षित इति निर्बन्धो निष्प्रमाणक आपद्यते । लेखनाभ्यासशीलस्तु लिखेद्यन्त्राणि नापर इति वचनानुसार्यनुपासकशिल्पिहस्ताल्लेखनशिष्टाचारोऽपि विरुध्यते । योगिनीमूलमन्त्रेण ततस्तस्मिंश्चक्रे क्षिपेत् । चक्रमशून्यकरणेनालङ्कुर्यात् । पुष्पालाभे त्वाह—मणीति । एतत्पक्षे समष्टिमन्त्रमपवदति—विलोममिति । प्रातिलोम्यञ्च कूटानां न तु पञ्चदशाक्षराणामिति मन्तव्यम । विघ्नाः सपर्यासमाप्तिपर्यन्तमुपवेशनरूपस्यासनस्यान्तराया भौमादयः । एतेनेदृशचक्रालङ्कारस्य विघ्ननिरासार्थत्वध्वननद्वारासनपदार्थस्यायं चरमावयव इति ध्वनितम् । तेनासनं परिकल्प्येति ल्यपा चक्रं विलिख्यालङ्कृत्य न्यासजालं विदधीतेति कल्पसूत्रे स्फुटीकृतः क्रमः सूचितो भवति । यस्त्वासनावयवानां व्युत्क्रमः कल्पसूत्रे दृश्यते स तन्त्रान्तरमूलक इति द्रष्टव्यम् ॥१०४-१०६॥

**श्रीचक्रस्यात्मनश्चैव मध्ये त्वर्घ्यं [1]प्रतिक्षिपेत् ।**
**चतुरस्रान्तरालस्थकोणषट्के सुरेश्वरि ॥१०१॥**
**षडासनानि सम्पूज्य त्रिकोणस्यान्तरे पुनः ।**
**[2]पीठानि चतुरो देवि कापूजाओ इति क्रमात् ॥१०२॥**
**अर्चयित्वाऽर्घ्यपादे तु वह्नेर्दश कला यजेत् ।**

---

१. प्रतिष्ठयेत्–ख० से० । २. पाठांश्चिचतुरो–क०, पीठांश्च–से० ।

अर्घ्यपात्रं प्रतिष्ठाप्य तत्र सूर्यकला यजेत् ॥ १०३ ॥
पात्रे सूर्यकलाश्चैव कभादिद्वादशार्चयेत् ।
विधृते तु पुनर्द्रव्ये षो॰शेन्दुकला यजेत् ॥ १०४ ॥
अमृतेशीं च तन्मध्ये भावयेच्च नवात्मना ।
नवात्मना ततो देवि तर्पयेद्धातुदेवताः ॥ १०५ ॥
आनन्दभैरवं [1]वौषडन्तेनैव च तर्पयेत् ।

(दी०)सामान्यार्घ्यविधानमाह—श्रीचक्रस्येति । श्रीचक्रस्य पूर्वोक्त-रीत्या उद्धृतस्य, साधकस्य च मध्ये अर्घ्यं वक्ष्यमाणरीत्या [2]प्रतिक्षिपेत् [ [3]प्रतिष्ठापयेत् ] ।

अर्घ्यप्रतिष्ठा[4]प्रकारमाह—चतुरस्रान्तरालस्थेति । चतुरस्रान्त-रालस्थकोणषट्के आदौ चतुरस्रं लिखित्वा तदन्तर्वृत्तं तदन्तः षट्कोणं तन्मध्ये त्रिकोणमिति मण्डलं गोमयोपलिप्तभूतले मत्स्यमुद्रया विलि-खेदिति सामर्थ्या[5]ल्लभ्यम् । तदुक्तं श्रीपराक्रमे—

ततो गोमयसंलिप्ते चतुरस्रभुवस्थले ।
प्रवह[6]च्छ्वासहस्तेन कृतया मत्स्यमुद्रया ॥
दिव्यगन्धं तुल्ययुक्तं विलिखेदर्घ्यमण्डलम् ।
वेदास्रवृत्तषट्कोणं त्रिकोणान्यन्तरेऽन्तरे ॥

[7]एवं चतुरस्रवृत्तान्तरालकोणषट्के ॥ १० ॥

षडासनानीति । षडासनानि [8]सम्पूज्य । अमृतार्णवपोताम्बुज आत्मचक्रमन्त्रसाध्यसिद्धासनानि सम्पूज्य । षट्कोणान्तरस्थत्रिकोण-मध्ये का[9] कामगिरिपीठम्, पू[10] पूर्णगिरिपीठम्, जा [11]जालन्ध्रपीठम्, ओ[12] ओड्याणपीठं [13]क्रमात्। त्रिचतुरस्रोन् [14]वा चतुरो वा। त्रिकोण-

१. चैव वौषडन्तेन—ख० से० । २. प्रतिष्ठयेत्—ख० । ३. कंसान्तर्गतं—ख० नास्ति । ४. प्रकार—ख० नास्ति। ५. सामर्थ्यलभ्यम्—ख० । ६. द्वाम—क० पाठान्तरमपि । ७. इति—ख० । ८. षडासनानि सम्पूज्य—क० नास्ति । ९. का—ख० नास्ति। १०. पू.—ख० नास्ति । ११. जा—ख० नास्ति । १२. ओ—ख० नास्ति । १३. इति—क० । १४. त्रिचतुरस्रीन् वा चतुरो वा—ख० नास्ति ।

कोणेषु चतुरस्रे[1] तन्मध्ये चार्चयित्वा तत्राधारं प्रतिष्ठाप्य अर्घ्यपाद- दी[2]माधारं तस्मिन् मध्ये[3] वह्निबिम्बमभ्यर्च्य तत्परितः कलाश्चाभ्यर्चयेत्। तदुक्तं स्वच्छन्दसङ्ग्रहे--

षट्कोणान्तत्रिकोणे तु वह्निबिम्बं कलायुतम्।
आवाह्याधारतो देवि ! पूजयेन्मन्त्रवित्तमः ॥ इति[4] ।

क्रमाद् यादिक्षान्तदशवर्णपूर्वास्तस्य[5] वह्नेर्दश कला धूम्रार्चिराद्या यजेत्। तदुक्तं स्वच्छन्दसङ्ग्रहे--

यादिक्षान्ता[6]त्मवर्णानि कला वह्नेर्महेश्वरि !।
एताः कलाः समभ्यर्च्य स्वस्ववर्णैर्यथाविधि ॥
स्वबीजाद्याश्चतुर्थ्यन्तनाममध्या नमोन्तिकाः[7] ।
प्रोक्ता वह्निकला मन्त्रनामानि शृणु साम्प्रतम् ॥
धूम्रार्चिर्नीललक्ता च कपिला विस्फुलिङ्गिनी[8] ।
ज्वालामालिन्यर्चिष्मती तदूर्ध्वं हव्यवाहिनी।
अष्टमी कव्यवाहा च रौद्री संवाहिनी[9] तथा ॥
[धू[10]म्रार्चिरूष्ट्या ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी।
सुश्रीः सुरूपा कपिला हव्यकव्यवहेश्वरी।
इति तन्त्रान्तरे ]॥ १०२-१०३ ॥

पात्रे इति। पात्रे [11]अर्घ्यपात्रमध्ये। सूर्यबिम्बमभ्यर्च्य। तदुक्तं स्वच्छन्दसङ्ग्रहे--

[12]अस्त्रप्रक्षालितं शङ्खं स्थापयित्वा तथोपरि।
हृदयात्सूर्यबिम्बं च समावाह्य [13]स्वमन्त्रतः ॥
कादिठान्तं भादिडान्तं वर्णजातं क्रमोऽक्रमात्।
द्वयं द्वयं [14]प्रयोक्तव्यं कलाश्च तदनन्तरम् ॥

---

१. 'चतुरस्रे तन्मध्ये चार्चयित्वा' इत्यत्र 'त्र्यं मध्ये कमर्चयित्वा'--ख०। २. अर्घ्यपादे आधारे--ख०। ३. तन्मध्ये--ख०। ४. इति--क० नास्ति। ५. तस्यैव--ख०। ६. यादिक्षान्तानि--ख०। ७. नमोऽन्तिमाः--ख०। ८. विस्फुलिङ्गिणी--क०। ९. संहारिणी ततः--ख०। १०. कंसान्तर्गतो ग्रन्थः ख० नास्ति। ११. पात्रमभ्यर्च्य पात्रमध्ये--ख०। १२. अथ प्र--ख०। १३. च मन्त्रतः--ख०। १४. च वक्तव्यम्--ख०।

दी० इत्यस्मद्गुरुक्तरीत्या कभादि ककारभकारादि[1] वर्णयुगलं द्वादशादित्यकलाः। क्रमात्तपिन्याद्या द्वादशार्चयेत्। तदुक्तं स्वच्छन्दसङ्ग्रहे--

कादिठान्ताक्षरा देवि ! मूर्तिनाम्ना समीरिताः।
तपिनी तापिनी चैव शोधनी शोषणी तथा॥
भ्रा[2]मणी क्लेदिनी चैव वरेण्या कर्षणी तथा।
सुषुम्ना [3]वृष्टिवाहा च ज्येष्ठा चैव हिरण्यदा॥
एताः सौरकलाश्चैव [4]व्युत्क्रमाद्भादिडान्तिमाः।

कभादिकथनाद्यकारादयो दश [5]वह्निकलाः। अकारादयः षोडश स्वराः[6] सोमकला इति गम्यते। तत्र पात्रे लवङ्गादिभिः सुगन्धि[7]कुसुमैश्च वासितं सलिलमापूर्य तस्मिन्निन्दुमण्डलमभ्यर्च्य। तदुक्तं स्वच्छन्दस[8]ङ्ग्रहे--

एलालवङ्गकङ्कोल[9]जातीफलसुसंयुतान्।
सुगन्धिकु[10]सुमैर्द्रव्यैः सह तस्मिन् जले क्षिपेत्॥ इति।
नवयोनिं समालिख्य पूर्ववज्जलमध्यतः।
विशुद्धितः समावाह्य चन्द्रमण्डलमर्च[11]येत्॥

विधृते इति। तस्मिन् विधृते द्रव्ये द्रवे। द्रवात्मकं द्रव्यं विशेषाघ्यमत्रं द्रवमयमेव हि। तदुक्तं स्वच्छन्दसङ्ग्रहे—

अतो हि विशेषार्घ्यस्य साधनं प्रोच्यतेऽधुना।
आधारपात्रयोश्चैव तयोर्वह्न्यर्कपूजनम्॥
सामान्यार्घ्योक्तमार्गेण कृत्वा [12]पूजेत सूर्यके।
पात्रे त्वासवमापूर्य शिरोमन्त्रेण पूर्ववत्।

षोडशेन्दुकला यजेदिति[13]। क्रमादकारादिषोडश स्वरादिका अमृतादिकाः[14] षोडश कला यजेत्। तदुक्तं स्वच्छन्दसङ्ग्रहे—

आदिकाद्यन्तिकाः सौम्याः कलाः षोडश कीर्तिताः।
तासां नामानि वक्ष्यामि शृणु सर्वाङ्गसुन्दरि !॥

१. वर्णयुग्मयुक्तद्वाद–ख०। २. भ्रमणी–ख०। ३. तुष्टिवाहा–ख०। ४. व्युत्क्रमाद् डादिमान्तिमाः–ख०। ५. वह्निकला दश–ख०। ६. स्वरा–ख० नास्ति। ७. कुसुमैर्वा वासितममृतसलिल–ख०। ८. स्वच्छन्दे–ख० नास्ति। ९. कक्कोलं–ख०। १०. सुगन्धिकुसुमैर्दिव्यैर्महत्तास्मिन् जलं किरेत्–ख०। ११. चतुरस्रे समर्चयेत्–ख०। १२. कृतपूजितपूज्यके–ख०। १३. यजेदिति–ख० नास्ति। १४. अमृताद्याः–ख०।

अमृता मानदा पूषा[1] पुष्टिः प्रीतिर्महेश्वरि ! । दी०
रेवती ह्रीमती चैव[2] श्रीः कान्तिश्च सुधा ततः ॥
ज्योत्स्ना हैमवती चैव छाया सम्पूरिता[3] तथा ।
रामा[4]श्यामाकलानां च नामान्येतानि वल्लभे[5] ! ॥
अमृतेशीं च तन्मध्ये भावयेच्च नवात्मना । इति ।
लकु[6]लेशं समुद्धृत्य भृगुं[7] संवर्तकं तथा ॥
पिनाकिनं च खड्गीशं भुजङ्गं [8]यावनं तथा ।
योजयित्वा क्रमेणैव कायकारणमस्तकम् ॥
अर्घीशं योजयेदन्ते नवात्मायं समुद्धृतः ।

इति [9]स्वच्छन्दसङ्ग्रहोद्धृतं नवात्मानम् । तन्मध्ये तेन[10] मन्त्रेण अमृतेशीम् ।

अमृतामृतर[11]श्म्यौघसन्तर्पितचराचराम् ।
भवानीं भवशान्त्यै त्वां भावयाम्यमृतेश्वरीम् ॥

इत्यभियुक्त[12]वचनोक्तरीत्यामृतस्राविणीं भावयेत् । नवात्मना ततो देवि[13] इति । धातुदेवता डाकिन्याद्याः । अत्रैवोक्तम्—

विशुद्धौ हृदये नाभौ स्वाधिष्ठाने तु मूलतः ।
आज्ञायां धातुनाथाश्च न्यस्तव्या धातुदेवताः ॥ इति ।

नवात्मना पूर्वोक्तेन तर्पयेत् ॥ १०४-१०५ ॥

आनन्दभैरवमिति । आनन्दभैरवं चैवका[14]रेण नवात्मनैव आनन्दभैरवं तर्पयेदिति । नवात्मानमुच्चार्य "आनन्दभैरवाय वौषट्" इति तर्पयेदित्यर्थः ।

(से०) सामान्यार्घ्यस्यावान्तरप्रकरणेन प्राप्तमासनपदार्थाङ्गत्वमपवदितुमाह—(श्रीचक्रेत्यादि) । आगमशास्त्रस्यानित्यत्वात्स्थापयेदित्यत्र न पुरागमः । यद्यपि मध्यशब्दोऽत्र देशविशेषवचनो न केवलवचनस्तथापि चक्रात्ममध्यदेश-

---

१. पुष्टिस्तुतिः–ख० । २. देवि–ख० । ३. सम्पूरिणी–ख० । ४. वामा रामा–ख० । ५. वस्तुतः–ख० । ६. अमृतेशीं–ख० । ७. भृगुः संवर्तकश्च यः–ख० । ८. भुजगं वालिनं–ख० । ९. इति–ख० नास्ति । १०. अनेन–ख० । ११. रश्मौघ–क० । १२. इत्यभियुक्तोक्त्या–ख० । १३. गौरि –ख० । १४. चैव इत्येवकारात्–ख० ।

से० निर्णयस्य चक्रलेखनात्पूर्वमसम्भवाच्चक्रलेखनोत्तरमेवार्घ्यस्थापनं कुर्यादित्यर्थः सामर्थ्यरूपाल्लिङ्गाल्लभ्यते, लैङ्गिकत्वादेव वाऽऽसनन्यासयोः श्रुत्या विहितः क्रमो नानेन बाध्यते । तेनासनोपवेशनादिवह्निप्राकारविभावनान्तं कृत्वा चक्रं विलिख्य पुष्पाञ्जलिं दत्त्वा पूर्वोक्तां परां पूजां विधाय पात्रासादनं कुर्यादिति क्रमः सिध्यति । कल्पसूत्रेऽप्येवम् । यद्यपि सामान्यार्घ्येतिकर्तव्यतायाश्चतुरस्रान्तरालस्थेत्यादिग्रन्थेनोत्तरत्र कथनादप्ययं क्रमः सिध्यत्येवेति न पाठक्रममात्रेणासनपदार्थावयवसन्दंशेन सामान्यार्घ्यस्यानुष्ठानं प्रसज्यते, नापि मार्तण्डपूजायाः, तस्याः सामान्यार्घ्यकरणकत्वेनार्थक्रमेण पाठक्रमबाधात्, तथाप्युत्तरग्रन्थस्य विशेषार्घ्येतिकरणकत्वेनाप्यत्र कर्तव्यताविधायकत्वपक्ष इदं प्रयोजनमस्योपपद्यते । अत्रात्मशब्दः स्वासनस्थानपरः । श्रीचक्रशब्दस्तु बिन्दुस्थानपरः । तथैव सम्प्रदायात् । आभ्यामवधिभूताभ्यामर्धमन्तर्वेदि मिनोतीत्यादाविव देशविशेषो लक्ष्यते । तस्य [ मध्य ]भागे पात्रासादनं विधीयते । स च मध्यभागो लक्षितदेशस्य त्रेधा विभागमन्तरेणानुपपद्यमानस्तमाक्षिपति । स च विभागः समं स्यादश्रुतत्वादिति न्यायात् सम एव । ततश्च लिखितस्य स्थापितस्य वा चक्रस्य बिन्दुस्थानात् स्वासनस्थानपर्यन्तो यावान् देशस्तं देशं त्रेधा समं विभज्य पूर्वापरभागयोरेकैकं भागं परित्यज्य [ मध्य ]भागे पात्राण्यासादयेदिति सिध्यति । स चैकैको भागो द्वादशद्वादशाङ्गुल इति तु तन्त्रान्तरलभ्योऽर्थः । पात्रासादनं प्रक्रम्य —

साध्यसाधकयोर्मध्ये षट्त्रिंशदङ्गुलं भवेत् ।
द्वादशाङ्गुलमूर्ध्वं च अधोभागे तथाङ्गुलम् ॥
द्वादशाङ्गुलं मध्यस्थं तत्र संस्थापयेद् बुधः । इति वचनात् ।

तथाङ्गुलं द्वादशाङ्गुलमित्यर्थः । एतेनाथ पुरतो विहाय निजविष्टरादरत्निमवनिमिति प्रपञ्चसारसङ्ग्रहे चक्रलेखनं स्वासनादरत्निं परित्यज्य परतो हस्तमात्रभूमौ तदाधारपीठे स्वनाभिसमसूत्रोच्चे कार्यमिति संप्रदाय इत्युक्तं शङ्करानन्दनाथेन ।

अथ सामान्यार्घ्यस्थापनमाह पञ्चभिः—( चतुरस्रेत्यादि ) । अत्र "यो वै संवत्सरमुख्यं भृत्वाग्निं चिनुयात्" इति वैश्वानरादिहविस्त्रयक्रमविधायके वाक्य उद्देश्यकोटौ निवेशादेव संवत्सराख्यधारणाभावपक्षस्य कण्ठरवेण वचनान्तरेणाविहितस्यापि विधेयताक्षेपोऽङ्गीक्रियते, तथेह यन्त्रलेखनादिकतिपदार्थानामेकवाक्य उद्देश्यकोटौ निवेशादेव विधिरुन्नेयः । तेनायं समुदितार्थः—त्रिकोणवृत्तषट्कोणचतुरस्रात्मकं मण्डलं देव्याः स्वस्य च मध्यस्थं स्ववामभागे गन्धा-

दिना कुर्यात्, विधाय वामभागे तु चतुरस्रं हि मण्डलमिति ज्ञानार्णवे वाम- सै०
पदेन देवीवामापेक्षया स्ववामस्य पुरःस्फूर्तिकत्वेनोपस्थितत्वात्। देवीवामभाग एव मण्डलकरणेन सामान्यार्घ्येण पूजासमर्पणक्रियायां प्रयोगसौकर्यलाभात् स्वदक्षिणभाग एव सामान्यार्घ्यस्थापनम्। अत एव परिवारदेवतातर्पणैकप्रयोजनकलशस्थापनविधिवाक्ये मण्डलं वामतः कृत्वेत्यत्र स्ववामभागस्यैव ग्रहणमिति तु नव्याः। तच्चिन्त्यम्, स्ववामभागस्य पुरःस्फूर्तिकत्वाविशेषेऽपि प्रयोगसौकर्यमात्रावलम्बेन व्याख्यावैषम्यस्यायुक्तत्वात्। ततः स्वाग्रादिप्रादक्षिण्येन षट्सु कोणेषु सुधार्णवासनादीनि षडासनानि त्रिपुरादिचक्रेश्वरीमन्त्रषट्केन क्रमात् पूजयेत्। ततस्त्रिकोणस्य मध्ये बिन्दुस्थाने मूलविद्यया कामरूपपीठमभ्यर्च्य स्वाग्रादिप्रादक्षिण्येन त्रिभिः कूटैः पूर्णगिरिजालन्धरौड्यानपीठान् कोणान्तर्भागे पूजयेत्, अन्तरशब्देनैव पूजनीयचतुष्कसहितेन चतुर्णां स्थानानामुपस्थितेः सम्भवात्। ततोऽर्घ्यपाद आधारे, ऐमग्निमण्डलाय दशकलात्मनेऽर्घ्यपात्राधाराय नम इति मन्त्रेणार्चयित्वा स्थापिते यं धूम्रार्चिषे नम इत्यादिभिर्दशभिर्मन्त्रैर्वह्निकलादशकं स्वाग्रादिप्रादक्षिण्येनैव वर्तुलाकारं पूजयेत्। तस्मिन्नाधारे हेमादिनिर्मितं पात्रं शङ्खं वा क्लीं सूर्यमण्डलाय द्वादशकलात्मनेऽर्घ्यपात्राय नम इत्यर्चयित्वा प्रतिष्ठाप्य तस्मिन् सूर्यकलास्तपिन्यादीर्द्वादश वृत्ताकारं पूजयेत्। ताश्च सूर्यकलाः कादिद्वादश भादिद्वादश संयोज्य जातैर्मन्त्रैः पूजयेत्। अत्र भादीत्यादिशब्देन प्रातिलोम्येन बकारादिडकारान्ता गृह्यन्ते, सम्प्रदायात्। न तु सम्भवन्तोऽपि मकारादयः। तेन कं भं तपिन्यै नमः, खं बं तापिन्यै नम इत्यादयो मन्त्रा भवन्ति। तत्र सौः सोममण्डलाय षोडशकलात्मनेऽर्घ्यामृताय नम इति मन्त्रेण शुद्धजलमापूर्य कारणाद् बिन्दुमात्ररूपं द्रव्यं दत्त्वा, अं अमृतायै नम इत्यादिभिर्मन्त्रैः सोमकलाषोडशकं पूजयेत्। ततो नवाक्षरात्मककूटमन्त्रेणामृतेशीं कारणाधिदेवतां शुद्धजले विभावनापूर्वकमर्चयित्वा पुनर्नवाक्षरात्मककूटान्तरमन्त्रेण डाकिन्यादिषट्कं सप्तकं वा नमोऽन्तेन पूजयेत्। तेनैवानन्दभैरवं वषडन्तेन शुद्धजलमध्य एव तर्पयेत्। नवाक्षरात्मककूटद्वयोद्धारो ज्ञानार्णवे यथा—

शिवचन्द्रौ मातृकान्तं कालशक्राम्बुवह्नयः।
वायुश्च वामकर्णेन योजितो बिन्दुनादिना॥

बीजमेतत्समुच्चार्य तथा चानन्दभैरवम्।
ङेन्तं शिखामन्त्रयुतं पुनर्बीजं समालिखेत्॥

से० चन्द्रं हित्वादिमं कुर्यात् कर्णे वामाक्षि योजयेत् ।
सुधादेव्यै ततो वौपडयमानन्दभैरवः ॥ इति ।

शिवो हः । चन्द्रः सः । मातृकान्तः क्षः । कालो मः । शक्रो लः । अम्बु वः । वह्नी रः । वायुर्यः । वामकर्ण ऊकारः । स च बिन्दुनादाभ्यां युक्तः । एतद्बीजान्त आनन्दभैरवाय वपडित्येको मन्त्रः । पुनस्तस्मिन्नेव शिवचन्द्रयोर्व्यत्यासेनोकारस्थान ईकारयोगेन च कूटान्तरं कृत्वा तदन्ते सुधादेव्यै वौपडित्यपरो मन्त्रः । एतद्द्वयमपि मिलित्वैक एव मन्त्र इत्यपि केचित् । अत्र द्वितीयमन्त्रोऽमृतेश्याः । प्रथममन्त्रकूटान्ते डाकिन्यै नम इत्यादियोजनेन पट् सप्त वा मन्त्राः कार्या इति विवेकः । अत्रोक्तानां कलादिमन्त्राणां तन्त्रभेदेन भूयोवैलक्षण्यदर्शनादिहैदम्पर्येणैकस्याप्यनुद्धाराद्विकल्पः ॥१०७-१११॥

**तदाज्ञाप्रेरितं तच्च गुरुपङ्क्तौ निवेदयेत् ॥ १०६ ॥**
**तथैवार्घ्यं विशेषेण साधयेत् साधकोत्तमः ।**
**[1]गुरुपादालिमापूज्य भैरवाय ददेत् पुनः ॥ १०७ ॥**

(दी०) तदाज्ञेति । तस्य गुरुरूपिणो भैरवस्याज्ञा[2]प्रेरितमनुज्ञातम् । [3]तच्च द्रव्यं पुनश्च गुरुपङ्क्तौ निवेदयेत् ॥ १०६ ॥

सामान्यार्घ्यप्रकारं[4] विशेषार्घ्येऽप्यतिदिशति–तथैवेति । इति स्पष्टम् । ( एवमर्घ्यशुद्धिं कृत्वा तदनन्तरं गुरून् पूजयेदित्याह–गुरुपादालिमिति । गुरूणां परमशिवादिस्वगुरुपर्यन्तानां पादावलिं[5] पादुका[6]परम्परां दिव्यसिद्धौघ[7]मानवौघत्रयवतीमापूज्य स्वशिरस्यर्घ्योदकाक्षतकुसुमैरभ्यर्च्य । शोधितमर्घ्यमाललाटं त्रिरुद्धृत्य[8] महापद्मवनान्तस्थशृङ्गाटोदरवासिने गुरुरूपिणे पूर्वोक्तनिवचनाय भैरवाय ददेद् निवेदयेत् । तत्[9] पुनः ॥ १०७ ॥

(से०) एवं सामान्यार्घ्येतिकर्तव्यतां सविस्तरं विधाय तदतिदेशपूर्वकं विशेषार्घ्यमर्धश्लोकेनोपदिशति—(तथेत्यादि) । यथा सामान्यार्घ्यः साधित

१. गुरुपादावलिं पूज्य–क० । २. भैरवाज्ञाप्रे–ख० । ३. तच्च द्रव्यं पुनश्च–ख० नास्ति । ४. सामान्यार्घ्यप्रकारमेव विशेषार्घ्यस्यासादनमिति–क० । ५. पादावलीं–ख० । ६. पादुका–ख० नास्ति । ७. सिद्धमा–ख० । ८. समुद्धृत्य–ख० । ९. तत्–क० नास्ति ।

स्तथैवार्घ्यान्तरं साधयेत् । स त्वम्बुसामान्येनायं तु विशेषजलेनेति विशेषः । से• अत एव [पूर्वचतुःशत्यामम्बुकरणकसामान्यार्घ्यविधिरुक्तो हेमादिपात्रे साधारे स्थापयेदर्घ्यमम्बुने]ति श्लोकद्वयेन । तत्र चत्वारः पक्षाः पूर्वमस्माभिः प्रदर्शिताः । तेषु यदि सामान्यार्घ्यविधिपरत्वपक्षस्तदात्रत्येतिकर्तव्यतायास्तत्रत्येतिकर्तव्यतया सह समुच्चयः । विशेषार्घ्यविधिरिति मनोरमाकारपक्षे तु तत्रैव समुच्चयः । विशेषार्घ्येऽम्बुनो मेलनविधिरिति पक्षेऽप्येवम् । विशेषालाभे प्रतिनिधिरिति चन्द्रिकापक्षे पूतीकेष्विव सोमधर्मा अम्बुन्यपि विशेषधर्मा भवन्ति । वस्तुतस्तु—तत्र विधिरिति पक्षे तद्धर्माणां विभज्य कथनस्वारस्यभङ्गापत्तेः सामान्यार्घ्यविधिपर एव स ग्रन्थो युक्तः, अम्बुनेतिपदस्वारस्यात् । उपपदविभक्त्यपेक्षया कारकविभक्तेर्बलीयस्त्वाच्च । तत्रोत्पन्नस्य सामान्यार्घ्यस्य तर्पयेत्तेन योगिनीरितिवन्मार्तण्डं परिपूजयेदित्यपि विनियोगविधिः । श्रीचक्रस्यात्मनश्चैवेति तु तस्यैव देशकालविधिः । तदुत्तरैः सार्धैः पञ्चभिः श्लोकैर्विशेषार्घ्यस्य विधिः । तत्र चरमार्ध उत्पत्तिविधिः । पूर्वश्लोकपञ्चके तदितिकर्तव्यताविधिरिति विवेकः, उत्पत्तिविधेरुत्तरत्रैवेतिकर्तव्यता वर्णनीयेति निर्बन्धे मानाभावात्, अन्यथा विधृते तु पुनर्द्रव्य इत्युक्तिस्वारस्यविरोधापत्तेः । द्रव्यपदस्य जले तान्त्रिकाणां स्वारसिकप्रयोगाभावात्, बिन्दुप्रक्षेपस्य मैत्रावरुणं पयसा श्रीणातीत्यादिवत्संस्कारमात्रस्य पात्राधिकरणकद्रव्यविधारणरूपत्वाभावेन तथा निर्देशायोगाच्च, कल्पसूत्रज्ञानार्णवादिषु कलापूजाया आधारमण्डलस्थामृतेश्यादिपूजनस्य च विशेषार्घ्य एव विधिदर्शनेन बहुविसंवादापत्तेश्च, सामान्यार्घ्यस्थापन ईदृशविस्तारस्य तन्त्रान्तरेऽनुपलम्भाच्च । न च हेमादिपात्रं सामान्यार्घ्ये तन्त्रान्तरे न दृश्यते, शङ्ख एव तु प्रायेण विधीयत इति वाच्यम्, तत्रापि हेमादीत्यादिपदेन शङ्खस्यापि ग्रहणसम्भवेन भूयोविसंवादाभावात् । एतेन यत्प्राचां व्याख्यानं पञ्चभिः श्लोकैः सामान्यार्घ्यविधिस्तन्मध्य एव विधृते तु पुनर्द्रव्य इत्यादिना विशेषार्घ्यविधिस्तथैवार्घ्यमित्यनेन सामान्यार्घ्यधर्मातिदेश इति, तत्पूर्वापरविरोधान्नादर्तव्यम् । न चेह पञ्चभिरेव श्लोकैर्विशेषार्घ्यविधिरस्त्विति वाच्यम्, तयोरर्घ्यपदव्यवहारस्य क्वाप्यभावात् । न चैवं सत्युत्तरग्रन्थे गुरुभ्य आत्मने च द्रव्यविनियोगो विधीयमानो द्रव्याभावाद्विरुध्येतेति वाच्यम्, विशेषार्घ्यस्यैव तत्रापि करणत्वात् । अत एव कल्पसूत्रम्—विशेषार्घ्यं विधाय तद्बिन्दुभिस्त्रिः शिरसि गुरुपादुकामिष्ट्वाद्रं ज्वलति स्वाहेति तद्बिन्दुमात्मनः कुण्ड-

से० लिन्यां जुहुयादेतदर्घ्यशोधनमिति शिवमिति। प्रकृततन्त्रेऽपि विशेषार्घ्यविध्यव्यवहितोत्तरमेव गुर्वादिपूजाकथनेन मृदस्ति पात्रं कुर्विति वाक्ययोरिव पूर्ववाक्योदितस्योत्तरवाक्योपात्ते करणत्वभानात्। यत्तु नव्यैस्तथा सति देवीविनियोगात् पूर्वं स्वस्मै विनियोगादुच्छिष्टदोषः स्यादित्यतस्तयोः पात्रयोराक्षेप इत्युक्तम्। तन्न, पात्रान्तरेण विशेषार्घ्यात्किञ्चिज्जलमुद्धृत्य गुर्वादिपूजने नोच्छिष्टदोषप्रसक्तिस्तावन्मात्रस्यैवाक्षेपात्, भैरवाय निवेदनोत्तरमेव स्वस्मै विनियोगाच्च, रागतः प्राप्तभक्षण एव दोषप्रसक्त्या वैधे निषेधस्याप्रवृत्तेश्च। अन्यथा पाशुकहविःशेषभक्षणादावपि "न मांसमश्नीयात्" इति निषेधातिक्रमदोषप्रसक्त्यापत्त्या बहुव्याकुली स्यात्। एतेनासंस्कृतद्रव्येणैवात्मपूजनं कार्यमिति केषाञ्चित्साहसमपास्तम्। तस्मादेतत्तन्त्रानुसारेण द्वयोरेव पात्रयोः स्थापनमिष्टम्। यत्तु कलशस्थापनं पद्धतिकारैर्लिख्यते तदपि दक्षिणामूर्तिसंहिताज्ञानार्णवकल्पसूत्रादिषु न दृश्यते। अत एव केवलसामयिकपूजायामेव तत्स्थापनमित्युपदिशन्ति वृद्धाः। नव्यास्तु—

अनेन चन्द्रं सम्पूज्य पूजार्हः सकलो भवेत्।
एवं सम्पूज्य सकलं श्रीविद्यां परितो यजेत्॥
चक्रमभ्यर्च्य सकलं विधिवत्परमेश्वरि।

इत्यादिज्ञानार्णवश्लोकेषु सर्वत्र सकलपाठं प्रामादिकत्वेनाधिक्षिप्य कलशपदस्यैव प्रामाणिकत्वात् कलशस्थापनं तत्तन्त्रकारस्येष्टमिति क्लेशेन समर्थयन्ते॥ ११२॥

अनेनैव विशेषार्घ्योदकेन गुरून् पूजयेदित्याह—(गुर्वित्यादि)। तत्पात्रस्थं जलं पात्रान्तरेण गृहीत्वा स्वशिरसि विभावितां परशिवादिस्वगुरुपर्यन्तपरम्परां पादुकामन्त्रेण पात्रान्तरोद्धृतार्घ्योदकाक्षतैरभ्यर्च्य स्वहृदयस्थिताय कामेश्वराय कामेश्वरीसहिताय तज्जलं दत्त्वाज्ञां गृहीत्वा दिव्यसिद्धमानवौघाख्यगुरुपङ्क्तित्रयं पुनः स्वशिरसि पूजयेदित्यर्थः। प्राञ्चस्तु—विशेषार्घ्यपात्रमेवाललाटमुद्धृत्य तज्जलेन स्वशिरसि परशिवादिपरम्परामोघत्रयं च सन्तर्प्य पुनर्भैरवात्मकाय स्वगुरवे शिरस्येव समर्प्य तस्य गुरोराज्ञया प्रत्यक्षगुरुपङ्क्तौ निवेदयेदिति व्याचक्षते। तदयुक्तम्, यावत्पूजासमाप्त्यर्घ्यपात्रचालनं न कार्यमिति तन्त्रसारोक्तनिषेधविरोधात्, प्रत्यक्षगुरुपङ्क्तेः कादाचित्कत्वेन नित्यवच्छ्रवणविरोधाच्च, भैरवपदस्य गुरुपरत्वेन व्याख्याने मानाभावाच्च॥ ११३॥

तदीयं शेषमादाय कामाग्नौ विश्वतस्थुषि[1] ।
पादुकां मूलविद्यां च जपन् होमं समाचरेत् ॥ १०८ ॥
महाप्रकाशे विश्वस्य संहारवमनोद्यते ।
मरीचिवृत्तीर्जुहुयान्मनसा कुण्डलीमुखे ॥ १०९ ॥
अहन्तेदन्तयोरैक्यमुन्मन्यां[2] स्रुचि कल्पितम् ।
मथनोद्रेकसम्भूतं वस्तुरूपं महाहविः ॥ ११० ॥
हुत्वा हुत्वा स्वयं चैवं सहजानन्दविग्रहः ।
[3]स्वप्रधाप्रसराकारं श्रीचक्रं पूजयेत् सुधीः ॥ १११ ॥

(टी०) प्रसादग्रहणमाह—तदीयमिति । तदीयं शेषं गुरुदे[4]वतयोर्निवेदितं शेषं द्रव्यमादाय तत्त्वचतुष्टयशोधनमन्त्रैः । 'कामो देवः स काम्यत्वात्' इत्यस्मद्गुरू[5]क्तरीत्या विश्वघस्मरकी[6]लाले कामेश्वराख्ये सर्वप्राणिष्वात्मन्यग्नौ । विश्वतस्थुषि[7] विश्वग्रसनशीलं तद्रूपं तेजोमयम् । तत इत्याज्ञावतारोक्तरीत्या विश्वघस्मरकीला[8]लजाले पादुकां स्वगुरुश्री[9]पादुकां मूलविद्यां [10]सौभाग्यविद्यां च जपन् होमं भेदेन्धनप्रक्षेपलक्षणं समाचरेत् । तदुक्तं श्रीपराक्रमे—

निवेद्य [11]मस्तकस्थाय गुरवेऽर्घ्यं तदाज्ञया ।
कल्पान्तहुतभुक्तुल्यचिदग्नौ विश्वघस्मरे ॥
मेय[12]राशिमयं हव्यं वासनात्मोपदंशकम् ।
[13]व्यतिषङ्गेण स जुह्वन् जपेदात्मानमामृशन् ॥इति॥ १०८॥

ननु कः कामाग्निः, स[14] कुत्र [15]वा निवसति, किं हविरित्यत आह—महाप्रकाशे इति । कुण्डली[16]मुखे व्यवस्थिते इति शेषः । अत्र श्रुतिः—"तस्या शिखाया मध्ये परमात्मा व्यवस्थितः" इति । महाप्रकाशे

---

१. विश्वतस्त्विषि—ख० । २. मुन्मनीस्रु—ख० । ३. स्वप्रथा—ख० । ४. गुरुदेवतायाः पीतशेषं द्र—ख० । ५. इत्यस्मदुक्त—ख० । ६. कलापतौ—ख० । ७. विश्वतस्त्विषि—ख० । ८. कलाजाले—ख० । ९. श्री—ख० नास्ति । १०. सौभाग्यमूलविद्यां—ख० । ११. निवेद्यामस्तकं स्वीयगुरोरर्घ्यं—ख० । १२. ज्ञेयरा—ख० । १३. एतेषां गणशो जुह्वन्—ख० । १४. स—ख० नास्ति । १५. वा—ख० नास्ति । १६. कुण्डलीमुखे—ख० नास्ति ।

दी० निरिन्धनदीप्ते निर्वाणरहिते प्रमातरि वह्नौ [ विश्वसंहारवमनोद्यते[1] ] विश्वस्य शिवादि[2]भूम्यन्तस्य संहारे निजकारणतावन्मात्राऽव[3]-स्थितौ वमने सर्जने चोद्यते शिवस्याद्यै[4]वेच्छा शक्तिः। [तदुक्त[5]-माम्नावतारे ]—

स्वेच्छयैव जगत्सर्वं निगिरत्युद्गिरत्यपि।

मनसा सार्धं मरीचिवृत्तीर्जुहुयात्। आन्तरस्य चित्कलस्य मरीचयो[6]ऽक्षाणि [7]बहिरर्थेषु तेषां सञ्चारा[8] वृत्तयः। तदुक्तं विज्ञानभैरवभट्टारकैः—

तत्र तत्राऽक्षमार्गेण चैतन्यं व्यज्यते प्रभोः। इति।

कोऽर्थः? कुण्डलिन्याः शिखायां महाशून्ये व्यवस्थिते सर्वप्राणिष्वात्मनि प्रकाशलक्षणे कामाग्नौ "आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेन" इति तन्त्रान्तरोक्तरीत्या बहिरर्थेषु प्रसृतचिन्मरीचिरूपाक्षवृत्तिलक्षणं हविस्तेनैव मार्गेणान्तर्मुखतया मनसा सह जुहुयाद् इत्यर्थः। तदुक्तं [9]श्रीविज्ञानभैरवभट्टारकैः-

महाशून्यालये वह्नौ भूताक्षविषयादिकम्।
हूय[10]ते मनसा सार्धं स होमश्[11]चेतनास्रुचा॥ इति।

अयमेवान्तरो होमः। तदुक्तं पद्धतिषु—

धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा।
सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम्॥

आन्तरामेव पूर्णाहुतिमाह-अहन्तेदन्तयोरिति।

नैदानैस्तर्पणैः सम्यग्व[12]शुद्धैरमृतात्मभिः।
मद[13]हन्तां करोमीदं विश्वं हव्यभुजःसमम्॥

इत्यभियुक्तवचनोक्तरीत्या अहन्तेदन्तयोरैक्यम्। अहन्ता प्रमाता, इदन्ता प्रमेयम्, तयोरैक्यं प्रमाणं तत्त्रितयसामरस्यात्मकम्।

विश्वक्षिप्तपद[14]प्रमेयसुभगां ब्राह्मीं महावा[15]गभत्रे

१. कंसान्तर्गतं–क० नास्ति। २. शिवादेर्भू–ख०। ३. मात्रस्थितौ–क०। ४. विश्वाद्यैव शक्तिः–ख०। ५. कंसान्तर्गत–ख० नास्ति। ६. अक्षनिवहः–ख०। ७. बहिः–ख० नास्ति। ८. सवादिकाः–ख०। ९. श्री–ख० नास्ति। १०. वाते–ख०। ११. महामहिमशालिनि–ख०। १२. शनैः शनैस्तर्पणैः सं–क०। १३. समाहन्तां–ख०। १४. लसत्–ख०। १५. महावैभवैः–ख०।

विश्वोत्तीर्णमहाप्रकाश[1]वपुषं शक्तिं [2]च नैसर्गिकीम्। दी०
प्रामाण्य [3]प्रवणत्रिशक्तिख[4]चितां मध्ये तु चातुर्दशीं।
सञ्चिन्त्याम्ब ! समिन्ध[5]यन्नुभयतो मथ्नामि तन्त्रारणिम् ॥

इत्यभियुक्तवचनोक्तरीत्या तन्त्रारणिमथनो[6]द्रेकेण सम्भूतं तत्त्रितय-समष्टिरूपं[7] वस्तुरूपं वस्तुद्रव्यं तद्रूपम्[8]। तदुक्तं मुख्याम्नायक्रमे—

स्वीकुर्यात् सततं वस्तु यदानन्दसुखं भवेत्। इति[9]।

महाहविः। यस्मिन् हुते स्वप्रमेयलक्षणे हविषि[10] प्रमातृलक्षणं ज्योतिर[11]नवरतं प्रज्वलति तन्महाहविः पूर्णाहुति[12]होमः। उन्मन्यां स्रुचि कल्पितम्। उन्मनी नाम [13]समनोर्ध्वे निरस्तकालकलाक्रियादिका पूर्वोक्तलक्षणा सा। स्रुचि [14]तन्मयेनाऽमृतेनापूर्य पूर्णाहुतिं जुहुयात्। एवंरूपं हविर्हुत्वा।

आनन्दं ब्रह्मणो रूपं तच्च [15]देहे प्रतिष्ठितम्।
तस्याभिव्यञ्जकं द्रव्यं योगिभिस्तेन पीयते॥

इति प्रामाणिकवचनोक्तरीत्या याव[16]दानन्दाविर्भावो भवति। तदुक्तं विज्ञानभैरवभट्टारकैः-

जग्धिपानकृतोल्लासरसानन्दविजृम्भणात्।
भावयेद्भरितावस्थां महानन्दस्ततो भवेत्॥

कोऽर्थः ? मन्त्रारणिमथनसम्भूतम् इदन्ताहन्तासामरस्य[17]रूपं मद्य-रूपं घृतपूर्णाहुतिं बहुशो हुत्वा परिस्फुरत्परमानन्दो भवेदित्यान्तरपूर्णाहुतिः। अत एव-

---

१. महाप्रमातृवपुषः–ख०। २. तु–ख०। ३. प्रामाण्यप्रणयेन श–क०। ४. तामध्युष्य्या–ख०। ५. संवित्त्यर्कसमिद्धवस्तुभरितो–ख०। ६. द्रेक-सम्भूतं–ख०। ७. रूपं- ख० नास्ति। ८. तद्रूपम्–ख० नास्ति। ९. इति–क० नास्ति। १०. हवींषि–क०। ११. ज्योतिर्निरन्तरं–ख०। १२. होमे–ख०। १३. 'समनोर्ध्वे' इत्यारभ्य 'लक्षणा' इत्यन्तस्य ग्रन्थस्य स्थाने पूर्वोक्तलक्षणा सा स्रगित्युच्यते तस्यां–ख०। १४. तन्मयेन घृतेन–ख०। १५. मोक्षे–ख०। १६. यावदित्यादि भवतीत्यत्र यो भावस्तमनुभवेन–ख०। १७. सामरस्य-वस्तुरूपघृतरूपपूर्णाहुतीर्व–ख०।

दी० प्रविश्टे[1]ऽन्तः सिन्धुरसे भेदनिर्हरणात्मके ।
स्थैर्यमेति[2] चमत्कारं विना विषयसङ्गतिम्[3] ॥ इति

क्रमोदयोक्तरीत्या मनसि[4] स्थिरीभूते बाह्यचक्रार्चनं कुर्यादित्याह— स्वप्रधेति। सुधीः सीधुरसपानेन अनन्यविषयासक्तः स्वसंवि[5]न्मात्रस्थिरमनाः । मनसि स्थिरे सति धारणा स्थिरा, तस्यां स्थिरायां 'तत्र प्रत्ययैकतानता ध्यानम्" इति योगपातञ्जलशास्त्रोक्तरीत्या[6] प्रत्ययैकतानतालक्षणं ध्यानं भवति। विना ध्यानं पूजा निष्फला भवति । अथादावमृतीकृतमासवं शिवादिभ्यो गुरुभ्यः शिवाभ्याञ्च निवेद्य स्वात्माग्नौ हुत्वा ज्वलन्[7] परमानन्दस्थिरधीर्भूयादित्यर्थः । स्वप्रधाप्रसराकारः स्वप्रधा स्वसंवित्तस्या बहिरर्थेषु इन्द्रियद्वारा प्रसरो व्यापारः। [8]तदात्मना स्फुरणम् । ततस्तदाकारं श्रीचक्रं पूजयेत्। श्रीचक्रं नाम[9] नान्यत्किञ्चित्, अपि तु स्वसंविद्देवतायाः प्रसररूपान्तःकरणचतुष्टयाव्यक्तमहदहङ्कृतितन्मात्रदशेन्द्रियतद्वृत्ति[10]तद्विषयतत्पुर्यष्टकषोडशविकारधातुप्रपञ्च [11]एव श्रीचक्रात्मना स्फुरति, [12]एतावत् ॥ १०९-१११ ॥

(से०) (तदित्यादि) । गुरुसम्बधिनं हविःशेषं गृहीत्वा गुरुपादुकामन्त्रं मूलविद्याञ्च जपन्विश्वतस्त्विषि सर्वतः प्रसृमरतेजस्के शिवाग्नौ स्वात्माभिन्ने वह्नौ जुहुयात् । कामाग्नाविति पाठेऽपि स्वसंविद्रूपः कामेश्वर एवाग्निरिति व्याख्येयम् । स्वात्मानं वह्नित्वेन विश्वं स्वमरीचित्वेन विभाव्य जुहुयादित्यर्थः । अत्र जपन्निति शतृप्रत्ययेन मन्त्रयोर्होमसमानकालिकत्वोक्त्या क्रियमाणानुवादितैव युक्ता युवा सुवासा इतिवन्न तु परवीरसीतिवत्करणमन्त्रत्वमिति सूचितम् । तेन मन्त्रसमाप्तिं यावत्पुनः पुनर्हविःशेषं निःशेषकरणेन जुहुयादिति ध्वनितम् । अत एव च हुत्वा हुत्वा स्वयं चैवेति वीप्सोपपद्यते । तेन प्रतिहोमं प्रतिप्रधानन्यायेन मन्त्रयोरामनहोममन्त्रस्येव नावृत्तिरपि तु वेदिप्रोक्षणमन्त्रस्येव सकृदेव

---

१. प्रविष्ट उद्यत् श्रीधुम्नि भेदनिर्हरणात्मकं–ख० । २. स्थैर्यं मतेश्च–ख० । ३. सङ्क्रमात्–ख० । ४. मनःस्थैर्यं जायते चेच्च–ख० । ५. स्वयं चिन्मा–ख० । ६. रीत्या–ख० नास्ति । ७. प्रज्वलत्प–ख० । ८. तत आत्मना–ख० । ९. श्रीचक्रं नाम–ख० नास्ति । १०. तद्वृत्ति–ख० नास्ति । ११. एव–ख० नास्ति । १२. एतत्–ख० ।

मन्त्रयोः प्रयोगः । होमसंख्या तु हविःशेषस्य निःशेषप्रतिपत्तिपर्यन्तत्वादनियतैव । वस्तुतस्तु श्लोकत्रयेण विधित्रयम् । तेनाभ्यासात्कर्मभेदः । ततश्च समुच्चितमन्त्रद्वयस्य त्रिरावृत्तिसमकालं होमत्रयमेवेति ज्ञेयम् । पात्रहविरादीनां वासनापूर्वकं द्वितीयहोममाह—महाप्रकाश इति । प्रकाशः स्वात्माभिन्नोऽग्निरेव । तस्य महत्त्वं तु सर्वव्यापकत्वात्, निरिन्धनदीप्तत्वादनिर्वाणत्वाच्च । तथा च तन्त्रान्तरे मन्त्रलिङ्गम्— से०

अन्तर्निरन्तरमनिन्धनमेधमाने
मोहान्धकारपरिपन्थिनि संविदग्नौ ।
कस्मिंश्चिदद्भुतमरीचिविकासभूमौ
विश्वं जुहोमि वसुधादिशिवावसानम् ॥ इति ।

संहारो नाशो वमनं सृष्टिः । तयोः कृत्ययोस्तदिच्छासाध्यत्वादेव प्रकाशस्य तदुद्यतत्वम्, "स्वेच्छयैव जगत्सर्वं निगिरत्युद्गिरत्यपि" इति वचनात् । तमग्निं कुण्डलिन्या मुखे विभाव्य पात्रं मनस्त्वेन भावयित्वा तदीयमरीचिरूपा वृत्तय एव हविरिति विभाव्य जुहुयात् । बहिर्मुखतया प्रसरन्तीर्वृत्तीरन्तर्मुखीकृत्य स्वात्मनि योजयेदिति भावः । तथा च मन्त्रलिङ्गम्—

धर्माधर्महविर्दीप्त आत्माग्नौ मनसा स्रुचा ।
सुषुम्णावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥ इति ।

मनसेति तृतीया तु सहार्थ इति प्राञ्चः । तत्पक्षे शुद्धेर्मनस्त्वेन वासना कार्या । पलेन मनसा सार्धमिति वृद्धानामुक्तेरिति समर्थनम् । प्रकारान्तरेण वासनापूर्वकं तृतीयां पूर्णाहुतिमाह—अहन्ता स्वात्मनिष्ठा । इदन्ता विश्वनिष्ठा । तयोरैक्यमस्त्व( मेका )धिकरणवृत्तित्वमिति मथनक्रियाविशेषणम् । तयोः सामानाधिकरण्यमनाहार्यं यथा भासेत तथा मथनस्य विभावनस्योद्रेकेणावर्तनेन सम्भूतं सम्यग्घनं( गुद्भूतं ) वस्तुरूपं वास्तविकं तत्त्वं रूप्यते विषयीक्रियते यस्मिंस्तादृशमात्मनिर्विकल्पकविज्ञानमेव महाहविरुन्मन्यां पूर्वोक्तलक्षणायां स्रुचि कल्पितं भावितं शिवाग्नौ जुहुयादित्यनुषङ्गेण तादृशं ज्ञानमपि स्वात्मन्येव लीनं कुर्यादित्यर्थः । श्रूयते च ब्रह्मबिन्दूपनिषदि—

घृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानम् ।
सततं मन्थयितव्यं मनसा मन्थानभूतेन ॥ इति ।

ईदृशभावनानिष्कर्षश्च सूतगीतायामुक्तः—

से०
शास्त्राचार्योपदेशेन तर्कैः शास्त्रानुसारिभिः ।
सर्वसाक्षितयात्मानं सम्यङ्निश्चित्य सुस्थिरः ॥
स्वात्मनोऽन्यतया भातं समस्तमविशेषतः ।
स्वात्ममात्रतया बुद्ध्वा पुनः स्वात्मानमद्वयम् ।
शुद्धं ब्रह्मेति निश्चित्य स्वयं स्वानुभवेन च ॥
निश्चयञ्च स्वचिन्मात्रे विलाप्याविक्रियेऽद्वये ।
विलापनञ्च चिद्रूपं बुद्ध्वा केवलरूपतः ॥
स्वयं तिष्ठेदयं साक्षाद् ब्रह्मवित्प्रवरो मुनिः ।
ईदृशीयं परा निष्ठा श्रौती स्वानुभवात्मिका ॥ इति ।

प्राञ्चस्तु—अहन्ता प्रमा । इदन्ता प्रमेयम् । तयोरैक्यं प्रमाणम् । तत्त्रितयसामरस्यरूपं वस्त्विति व्याख्यन् । तदक्षराननुगुणत्वाच्चिन्त्यम् । एवं-भावनापूर्वकाहुतित्रयोत्तर सहजोऽकृत्रिम आनन्द एव विग्रहः शरीरं यस्य तादृशः सन्, शून्याकाराद्विसर्गान्तादित्यत्र वर्णितस्वरूपः सुधीः समाहितचित्तः सन्नेव स्वप्रथाप्रसराकारं स्वात्मस्फुरत्तालहरीप्रसारत्वेन तत्रैव वर्णितं श्रीचक्रं पूजयेत् । स्वप्रथाप्रसराकारमिति विशेषणेन परापरपूजालक्षणं स्मारितम् । तेन च पूर्वतन्त्रोक्तां केवलामपरां पूजामपेक्ष्य मध्यमपूजैव सर्वदा कर्तुमुचितेति ध्वनितम्, अद्वैतपानगन्धविधुरायास्तदभ्यासमहितपूजातोऽत्यन्तमपकृष्टत्वात् ॥ ११४–११७ ॥

**गणेशं दूतरीं चैव क्षेत्रेशं दूतिकां तथा ।**
**बाह्यद्वारे यजेद् देवि देवीश्च स्वस्तिकादिकाः ॥ ११२ ॥**

(दी०) श्रीचक्रपूजामाह—'गणेशम्' इत्यादिना 'चक्रे पूजां विधाय' इत्यन्तेनेति । श्रीचक्रद्वारशाखयोर्गणेशं तच्छक्तिं दूतरीं क्षेत्रेशं बटुकाख्यं तच्छक्तिं दूतिकां च यजेत् । तदुक्तं सङ्केतपद्धत्याम्—

द्वैताद्वैतमहामोहशर्वरीक्षपणक्षमः ।
भास्वानिव जयत्येको गणेशो दूतरीयुतः ॥
प्रतिभायाः परोल्लासो निशाकर इवाऽपरः ।
दूतीयुक्तः स जयति बटुकस्ताण्डवान्वितः ॥

बाह्यद्वारे इति । बाह्यद्वारे श्रीचक्रद्वारबाह्यप्रदेशे । स्वस्तिकादिकाः

[1]देवीः सरस्वतीश्रीदुर्गाभद्रकाल्यश्चतस्रः । स्वस्तिका [2]आदिर्यासामिति दी० समासः। स्वाहाशुभङ्करीगौरीलोकधात्रीवागीश्वर्यश्च पञ्च । [3]एतास्ताश्च देवीः । [4]गायका यजेत् । तत्प्रसिद्धं पद्धतिषु ।। ११२ ।।

(से०) ( गणेशमित्यादि ) । गणेशक्षेत्रपाल्यौ दूतरीदूत्यौ क्रमेण शक्ती । एतन्मिथुनद्वयं द्वारशाखयोरभ्यर्च्य स्वस्तिकासरस्वतीश्रीदुर्गाभद्रकाल्यादिका देव्यो बाह्यद्वारे यष्टव्याः ।। ११२ ।।

**ततश्चान्तस्त्रिकोणेऽपि गुरुपङ्क्तिं त्रिधा स्थिताम् ।**
**तदन्तश्च महादेवीं तामावाह्य यजेत् पुनः ।। ११३ ।।**
**महापद्मवनान्तस्थां कारणानन्दविग्रहाम् ।**
**मदङ्कोपाश्रितां देवीमिच्छाकामफलप्रदाम् ।। ११४ ।।**
**भवतीं त्वन्मयैरेव नैवेद्यादिभिरर्चयेत् ।**
**त्रिकोणे तत्स्फुरत्तायाः प्रतिबिम्बाकृतीः पुनः ।। ११५ ।।**
**तत्तिथिमयीर्नित्याः काम्यकर्मानुसारिणीः ।**
**तत्र प्रकटयोगिन्यश्चक्रे त्रैलोक्यमोहने ।। ११६ ।।**
**मातृकास्थूलरूपत्वात्त्वगादिव्यापकत्वतः ।**
**योगिन्यः प्रकटा ज्ञेयाः स्थूलविश्वप्रधात्मनि[5] ।।११७।।**

(दी०)तत इति । ततः तस्य श्रीचक्रस्य[6] त्रिकोणे त्रिधा स्थितां दिव्यसिद्धमानवौघत्रयवर्तीं गुरुपङ्क्तिं शिवादिस्व[7]गुरुपर्यन्तानां गुरूणां पङ्क्तिः परम्परा ताम् । अपिशब्दाद्यजेदित्यनुषङ्गः । गुरुपरम्परा गुरुमुखादेव ज्ञातव्या । न लोकतो न च पुस्तके लिखिता[8] अत्यन्तरहस्यत्वात् ।

तदन्तरिति । तदन्तः श्रीचक्रस्य[9] मध्ये बैन्दवाख्ये चक्रे तां महापद्मवनान्तस्थाम् । "महापद्मवनान्तस्थे वाग्भवेद् गुरुपादुकाम्"

---

१. स्वस्तिकाद्याः देव्यः–ख० । २. स्वस्तिकास्ता आ–ख० । ३. मञ्चगतास्ताश्च–ख० । ४. गायिका–ख० । ५. प्रधात्मनि–ख० । ६. श्रीचक्रस्य अन्तः–क० नास्ति । ७. स्व–क० नास्ति । ८. लिखनीया–क० । ९. श्रीचक्रमध्यबैन्दवाख्ये–ख० ।

दी० [1]इत्यत्रोपपादितरूपाम् अकुलाधोमुखसहस्रदलं कमलं महापद्म-वनम्। मदङ्कोपाश्रयाम् अनाश्रितस्य[2] स्वप्रकाशात्मनो ममाऽङ्कस्थाम्। कारणानन्दविग्रहां कारणं [3]नाम हेतुद्रव्यम्। अत्रैव वक्ष्यति—

"क्षेत्राणां पतये मह्यं बलिं कुर्वीत हेतुना" इति।

द्रव्यपानेन तेन य आनन्दः स एव विग्रह आकारो यस्यास्ताम्। कोऽर्थः ? शोधितामृतीभूतद्रव्यपानपरिस्फुरत्परमानन्दमात्रशरीरा-मित्यर्थः। भवतीम् अनाश्रितां [4]मम देवीं विमर्शात्मिकाम्। इच्छाकाम-फलप्रदाम् इच्छया यत्काम्यते तत्फलं तस्य सर्वस्य दात्रीम्।

महापद्मवनान्तस्थे ! कारणानन्दविग्रहे !।
सर्वभूतहिते ! मातरेह्येहि परमेश्वरि !॥

इति मन्त्रेणावाह्य यजेत्। ननु महापद्मवनान्तस्थामित्यनेनैव अनाश्रितो देवः, अनाश्रिता देवी चाऽत्र चक्रे समावाह्य कामेश्वरी-कामेश्वररूपेण पूज्याविति कथमवसीयत इति चेदुच्यते—महापद्मवना-न्तस्थः सकलागमशास्त्राणां वक्ता देवोऽप्यनाश्रित एव, तच्छक्तिर-नाश्रिता अत एव। अन्यथा 'महापद्मवनान्तस्थां मदङ्कोपाश्रयाम्' इति वचनं कथं घटते ? सदाशिवादीनां तु यद्यप्यागमशास्त्रवक्तृत्व-मस्ति, तथाऽपि महापद्मवनान्तस्थत्वं नास्ति। तदुक्तं स्वच्छन्दसङ्ग्रहे—

अनाश्रितस्य मध्यस्थं व्योमपद्मं सुविस्तरम्।
असङ्ख्ययोजनायामं तत्र सिंहासनाश्रितः॥
सूर्यकोट्यर्बुदप्रख्यः शशाङ्ककृतशेखरः।
पञ्चवक्त्रो दशभुजस्त्रिपञ्चनयनः प्रभुः॥
सर्वावयवसम्पूर्णो ब्रह्ममूर्तिः सनातनः।
सर्वज्ञः सर्वकर्ता च सर्वानुग्रहणे रतः॥
सर्वरत्नसमाकीर्णः सर्वावयवभूषणः।
अनाश्रितकला देवी [5]तस्योत्सङ्गे सदा स्थिता॥
पञ्चवक्त्रा त्रिनेत्रा च दशबाह्विन्दुशेखरा।
व्यापिन्यादिचतुष्कं च तादृशं परिकीर्तितम्॥

---

१. इत्यत्रोपपादितरूपकुलाधोमुखसहस्रदलकमलमहापद्मवनमध्यस्थां–ख०। २. 'ईश्वरस्य–इत्यधिकं'–ख०। ३.नाम–ख० नास्ति। ४. 'मम देवीम्' इत्या-रभ्य 'सर्वावयवभूषणः' इत्यन्तो ग्रन्थः–ख० नास्ति। ५. तथोत्सङ्गे कथं–ख०।

पूर्वादुत्तरपर्यन्तं [1]दिग्गतैः सेवकैः शिवः। दी०
रुद्र[2]कोट्यर्बुदानीकैः स्वसारूप्यैः [3]सशक्तिभिः ॥
सेवितो [4]लोकनाथैस्तैः सृष्ट्यादीनि करोति [5]सः।
अनाश्रितोऽयं भगवान् पञ्चवक्त्रस्त्रिदृक्तथा ॥
दशबाहुश्चतुर्बाहुर्द्विबाहुश्चैकबा[6]हुकः।
लोका[7]गमादिवक्ताऽसौ देवदेवः सदाशिवः ॥
परापरविभागेन प्रोवाचाऽसङ्ख्यमागमम्। इति।

उत्तरपदेऽप्युक्तम्—

व्योमाम्बुजे सहस्रारे सितकेसरसङ्कुले।
तत्रासीनं महादेवमपृच्छत् कुलनायिका ॥ इति।

भवतीमि[8]त्यत्र त्वन्मयैरेवेति। भवतीं स्वसंविल्लक्षणाम्। त्वन्मयैरेव।

पञ्चभूतमयं विश्वं [9]तन्मयी सा सदाऽनघे!।
[10]तन्मयी मूलविद्या च तत्तथा[11] कथयामि ते ॥

इति पूर्वोक्तरीत्या [पञ्चभूतानि भवदिच्छाविजृम्भितानि [12]त्वद्रूपाणि]।

पञ्चरूपिणमात्मानं दिव्यैः पञ्चोपचारकैः।
अर्पयेत् सह गन्धेन पृथिवीं कुसुमेन खम् ॥
धूपेन वायुं दीपेन तेजोऽन्नेन रसं पुनः।

इति प्रामाणिकवचनोक्तरीत्या [[13]तैरेव नैवेद्यादिभिरर्चयेत्। नैवेद्यादिभिरित्यादिपदेन गन्धपुष्पधूपदीपनैवेद्यानि गृह्यन्ते।] सुगन्धवत्पदार्थाऽनुभवेन प्रत्यङ्मुखतया प्रमातरि विश्रान्तिर्गन्धसमर्पणम्। [14]सुशब्दवत्पदार्थाऽनुभवेन प्रत्यङ्मुखतया प्रमातरि विश्रान्तिः पुष्प-

---

१. निर्याता सेविका शिवा—ख०। २. सेविका—ख०। ३. च—ख०। ४. संसेविलोकपालांशसृ—ख०। ५. सा—ख०। ६. वक्त्रकः—क०। ७. कौलागमादिवक्त्रांशादेवमेव—ख०। ८. भवतीमित्यात्राप्यन्वेति—ख०। ९. त्व—ख०। १०. त्वन्नयी—ख०। ११. तथा च—ख०। १२ कंसान्तर्गतग्रन्थस्थाने 'पञ्चरूपाणि पञ्चोपचारैरर्चयेत्' इति—ख० पाठः। १३. कंसान्तर्गतग्रन्थस्थले 'नैवेद्ययागम्। कोऽर्थः ?' इति ख० पाठः। १४. तत आत्मशब्दाऽनुभवेन—ख०।

दी० समर्पणम् । [1]सुस्पर्शवत्पदार्थानुभवेन प्रत्यङ्मुखतया प्रमातरि विश्रान्ति-धूपसमर्पणम् । सुरूपवत्पदार्थाऽनुभवेन प्रत्यङ्मुखतया प्रमातरि विश्रान्तिर्दीपसमर्पणम् । स्वादु[2]रसवत्पदार्थानुभवेन प्रत्यङ्मुखतया प्रमातरि विश्रान्तिर्नैवेद्यसमर्पणमित्यर्थः । तदुक्तं मुख्याम्नायरहस्ये—

इन्द्रियग्रामसङ्ग्राह्यैर्गन्धाद्यैरात्मदेवताम् ।
स्वाभेदेन [3]समाराध्य ज्ञातुः सोऽयं महामखः ॥

"बहिरपि गन्धपुष्पधूपदीपनैवेद्यानि [4]पृथिव्याकाशवायुतेजःसलिल-भावनया देव्यै समर्पयेत्" [5]इत्युपचारोपनिषत् ।

त्रिकोणे इति । त्रिकोणे श्रीचक्रस्य त्रिकोणे रेखात्रये तत्स्फुरत्तायाः प्रतिबिम्बाकृतीः ।

गुणाः पञ्चदश प्रोक्ता भूतानां तन्मयी शिवा ।

इत्यत्रैव पूर्वोक्तरीत्या भूतगुणात्मिकायाः पञ्चदशाक्षरशरीरि[6]ण्याः श्रीविद्यायाः । [7]तत्र स्फुरणात् पञ्चदशप्रतिबिम्बरूपाः तत्तत्तिथि-मयीः तत्सख्याकप्रतिपदादिति[8]थ्यात्मिकाः काम्यकर्मानुसारिणीः ।

नवचक्रक्रमो [9]योऽसौ महावश्यादिसिद्धिदः ।

इति सङ्केतपद्धत्युक्तरीत्या बाह्यचक्रार्चनं [10]काम्यकर्म तदनुरूपकर-चरणादिमद्रूपधा[11]रिणीः । उत्पत्तिविनाशरूप[12]रहितत्वान्नि[13]त्यत्वाच्च नित्याः ।

ततः कामेश्वरी नित्या नित्या च भगमालिनी ।
नित्या [14]क्लिन्नाऽपि च तथा भेरुण्डा वह्निवासिनी ॥
महाविद्येश्वरी दूती त्वरिता कुलसुन्दरी ।
नित्या नीलपताका च विजया सर्वमङ्गला ॥
ज्वाला मालिनी चित्रा चेत्येवं नित्यास्तु षोडश ।

इति चतुःशतीशास्त्रोक्ताः । पुनःशब्दादर्चयेदित्यनुषङ्गः ।

---

१. सु—ख० नास्ति । २. स्वादूपदंशवत्पदार्थाऽनुभवेन—ख० । ३. स्व-भावेन—ख० । ४. पृथिवीवाय्वाकाशतेजः—ख० । ५. उपचारोपनिषत्—ख० नास्ति । ६. पञ्चदशाक्षरशालिन्याः श्री—ख० । ७. तत्र—ख० नास्ति । ८. प्रतिपदादितत्तत्तिथ्यात्मिकाः—ख० । ९. चक्रमयो योऽसौ—ख० । १०. काम्यं कर्म—ख० । ११. धारिण्यः—ख । १२. रूप—ख० नास्ति । १३. रहितत्वा-न्नित्याः—ख० । १४. नित्यक्लिन्ना—ख० ।

तत्रेति । तत्र श्रीचक्रे । त्रैलोक्यमोहने चक्रे पूर्वोक्तनिर्वचने चतुरस्रत्रय-लक्षणे प्रकटयोगिन्यो यष्टव्या इत्युत्तरत्र[1] स्थितेनान्वयः ॥११३-११६॥ दी०

प्रकटशब्दनिर्वचनमाह—मातृका इति । मातृकाः[2] परापश्यन्तीमध्यमावैखर्यस्तासु स्थूलमकारादिक्षकारान्तपञ्चाशद्वर्णमयवैखरीरूपम् । तदुक्तं स्वच्छन्दसङ्ग्रहे—'स्थूलपञ्चाशदक्षरम्' इति । तद्रूपत्वाद् मातृका [4]स्थूलरूपवैखरीवर्णवर्गाष्टकमयत्वात् सिद्धीनां ब्राह्म्यादीनां च । तदुक्तं चतुःशत्याम्—

वर्गानुक्रमयोगेन [5]महासिद्ध्यष्टकं स्थितम् ।
वन्दे वाग्भवगोत्थां महासिद्ध्यष्टकेश्वरीम् ॥ इति ।

त्वगादिव्यापकत्वतः त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रौजस आदि-[6]शब्देन गृह्यन्ते । तद्व्यापकत्वात्त्वगाधार[7]भ्रूमध्यरक्तनितम्ब[8]स्तनमांसनाभि[9]मेदोहृदयास्थिकण्ठमज्जास्यशुक्रनासापुटक्रोधललाटचक्रेषु स्थितत्वाद् ब्राह्म्यादीनाम् । स्थूलविश्वप्रधात्मनि स्थूलत्वकथनात् । अत एव विश्वं प्रकर्षेण [10]धत्त इति विश्वप्रधा विश्वम्भरा, तदात्मनि भूगृहत्रयात्मके त्रैलोक्यमोहने चक्रे स्थितत्वाच्च[11] मातृकास्थूलरूप[त्वाच्च[12] वैखर्यवयवत्वाच्च त्वगादीनां धातूनां] शरीरावयवतया व्यापकत्वात् त्रैलोक्यमोहनचक्रस्य स्थूलविश्वम्भरात्मकत्वाच्च[13] तदन्तर्गताः सिद्धयो ब्राह्म्याद्याश्च प्रकटा ज्ञेया इत्यर्थः ॥ ११७ ॥

(से०) (तत इत्यादि) । त्रिकोणेऽप्यन्तर्बिन्दोः पश्चाद्भागे पङ्क्तित्रयेणोपविष्टां दिव्यसिद्धमानवौघात्मिकां मुनिवेदनागसंख्यां गुरुपङ्क्तिं यथासम्प्रदायमिष्ट्वा तदन्तर्बिन्दुचक्रे तां प्रसिद्धां महादेवीमावाह्य पुनरुपचारैस्तामेव यजेत् ॥ ११९ ॥

तामेव विशेषयन्नुपचाराणां वासनामाह—( महेत्यादि ) । महापद्मवनं सहस्रारकमलं तदन्तस्थाम् । कारणभूतो य आनन्दो विषयानन्दबिन्दुसन्दोह-

१. इत्युत्तरस्थितेन–ख० । २. मातृकायाः–ख० । ३. वैखर्य्यायाः स्थूल–ख० । ४. स्थूलरूप–ख० नास्ति । ५. यस्यां मात्रष्टकं–ख० । ६. शब्देन–ख० नास्ति । ७. भ्रूमध्य–ख० नास्ति । ८. स्तन–ख० नास्ति । ९. स्नायु–ख० । १०. दधत–क० । ११. त्वात् मातृ–ख० । १२. कंसान्तर्गतग्रन्थस्थले 'त्वात्त्वगादिधातूनां–ख० । १३. त्वात्तदन्त–ख० ।

से० मूलभूतो ब्रह्मानन्दः, "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः। अथवा कारणे हेतौ जातः कारणः। तत्र जात इत्यण्। स चासावानन्दश्च स एव विग्रहः स्वरूपं यस्या महादेव्यास्ताम्, "महत्यै वा एतद्देवतायै रूपं यन्मधु" इति श्रुतेः। मदङ्कोपाश्रयां परमशिवपर्यङ्कनिलयां त्वां त्वन्मयैरेवोपचारैरर्चयेत्, "ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्" इति भगवद्वचनात्।

अर्पयेत् सह गन्धेन पृथिवीं कुसुमेन खम्।
धूपेन वायुं दीपेन तेजोऽन्नेन रसं सुधीः॥

इत्यादिवचनैरुपचाराणां पञ्चभूतात्मकत्वेन सम्प्रदायार्थप्रकरणे—"पञ्चभूतमयं विश्वं तन्मयी त्वं सदानघे" इत्युक्तत्वेन चोपचाराणां देवीमयत्वमिति तु प्राञ्चः। इच्छाकाम इच्छाविषयः। उपचारेषु पाद्यस्य प्राथम्येऽपि नैवेद्यस्यैवाद्यत्वेन ग्रहणं तु विशुद्धेश्वरतन्त्रे—

उक्तेष्वेषूपचारेषु यत्किञ्चिद(न्न)त्मय(मेव) द।
तत्कल्पनीयं मनसा मूलबीजत्रयोपरि॥
पादुकां पूजयामीति त्रिधा पुष्पं विनिक्षिपेत्।

इति वचनेन प्रत्यक्षोपचारासम्भवे मानसिकस्य विधानं नैवेद्यातिरिक्तविषयमिति विशेषद्योतनार्थम्। अत एवाहुर्नव्याः—बालातोऽतिदेशात्प्राप्तस्यापि 'नैवेद्यं षड्रसोपेतम्' इत्यादिना पुनर्विधिस्तु 'मनःकल्पितरूपं वा त्रिपुरायै निवेदयेत्' इति पद्धतौ विहितस्य विकल्पस्य निरासार्थमिति। अथवा षष्ठीतत्पुरुषबहुव्रीह्योर्नैवेद्यादिपदयोः शब्दतः सारूप्यादेकशेषः। वस्तुतस्तु नैवेद्यान्तैरर्चयेदित्येवार्थः, व्युत्क्रमे तस्यैवादित्वात्। देवतान्तरापत्तौ पुष्पान्तपूजोत्तरमेवावरणपूजाया विहिताया इहापवादार्थमित्थमुक्तिः। तेन कल्पसूत्रैकवाक्यता सङ्गच्छते, तत्र नैवेद्यान्तानामेव चतुःषष्टेरुपचाराणामावरणार्चनात्पूर्वं विधानात्। नैवेद्यमादयश्चेति द्वन्द्वसमास एव वाङ्गीकरणीयः॥१२०॥

(त्रिकोण इत्यादि)। अत्रार्चयेदित्यनुषङ्गः। त्रिकोणे मध्यत्र्यस्रे तत्तत्तिथ्यभिन्ना नित्याः पूजयेत्। ज्ञानार्णवे तु त्र्यस्रबिन्दोर्मध्ये महात्रिकोणान्तर विभाव्य तत्र पूजयेदित्युक्तमिति नव्याः। परन्तु 'विभाव्य च महात्र्यस्रम्' इत्यर्णववाक्ये तन्त्रान्तरकल्पसूत्रयोरानुगुण्यायैकस्यैव त्रिकोणस्य महत्त्वेन विभावनमात्रमुच्यत इति व्याख्यातुं युक्तत्वान्नातीव नव्योक्तावेव विश्वसनीयम्। तन्त्रराजे तु बिन्दावेव पूजनमुक्तम्। चतुरस्रान्तराले वा तत्पूजेति स्वावरणान्ते

वक्ष्यते । एतासां नामानि तु शास्त्रारम्भे मूल एवोक्तानि । तन्मन्त्रोद्धारस्तु से० कल्पसूत्रे तन्त्रराजे चैकरूपः । ज्ञानार्णवादौ तु विलक्षणः । तस्या देव्या या स्फुरत्ता तदात्मिका देवीप्रतिबिम्बरूपा ज्ञानेन देवीसमानवेषतया ध्यातव्या इत्युक्तं भवति । उक्तञ्च स्वतन्त्रतन्त्रे—

नवावरणशक्तीनां ध्यानं देव्याः समं भवेत् ।
कामाङ्कयन्त्रादन्यत्र भूषावर्णायुधादिकम् ॥
तत्समं परमेशानि चक्रस्थानामशेषतः ॥ इति ।

संहितायामपि—

अथवा रश्मयः सर्वा देवीरूपेण चिन्तयेत् । इति ।

तत्तत्तिथिमयीरिति तत्तत्पदबहुवचनाभ्यामिदमुक्तं भवति—आदौ तत्तत्तिथिनित्यां सम्पूज्य पश्चात्सर्वास्तिथिनित्याः पूजयेदिति । तत्प्रकारश्चोक्तो ज्ञानार्णवे—

एतस्मिन् समये देवि तिथिनित्यां प्रपूजयेत् ।
कामेश्वर्यादिका नित्या विचित्रान्ता महेश्वरि ॥
प्रतिपत्पौर्णमास्यन्तास्तिथिरूपाः प्रपूजयेत् ।
विभाव्य च महात्र्यस्रमग्रदक्षोत्तरक्रमात् ॥

इत्यादिना रेखात्रये पञ्च पञ्च मध्ये षोडशीं च सङ्कीर्त्य—

प्रतिपत्तिथिमारभ्य पौर्णमास्यन्तमद्रिजे ।
एकैकां पूजयेन्नित्यां महासौभाग्यमाप्नुयात् ॥
कृष्णपक्षे महेशानि पूजयेत्तिथिमण्डलम् ।
विचित्राद्या वरारोहे यावत्कामेश्वरी भवेत् ।
पूजनीया विलोमेन अन्यत्र परमेश्वरि ॥
कलाः षोडश देवेशि यस्तु चन्द्रकलाः क्रमात् ।
स सौभाग्यं महादेवि प्राप्नोति गुरुशासनात् ॥
कामेश्वर्यादिका नित्याः पूजयित्वा क्रमात्ततः ।
तिथिनित्यां त्रिधा देवि पूजयेद्भाग्यहेतवे ॥
पुनः श्रीत्रिपुरां नित्यां यजेत् सौभाग्यहेतवे ॥ इति ।

अत्रैतस्मिन् समय इत्यर्धेन तिथिनित्यार्चनस्यापूर्वो विधिः । समय इति तु पाठप्राप्तक्रमानुवादः । तिथिनित्यामित्येकत्वस्योपादेयगतत्वेन विवक्षितत्वा-

से० दुपस्थितत्वाच्च तत्तत्तिथिनित्याया एकस्याः पूजनं कुर्यादित्यर्थः। ततः कामेश्वर्यादिका इति श्लोकेन पञ्चदशानामपि नित्यानां पूजनान्तरं विभाव्य चेत्यादिना तदपेक्षितेतिकर्तव्यतां च विधाय विसर्गे षोडशीं यजेदित्यनेन त्रिपुरसुन्दर्या एव महानित्यायाः पूजनान्तरं विहितम्। ततोऽस्यैव पूजनत्रयस्य विवरणायोत्तरो ग्रन्थः। तत्र प्रतिपत्तिथिमारभ्येत्यनेनैकैकनित्यापूजायाः शुक्लकृष्णपक्षभेदेन व्यवस्थितक्रमविधानम्। मन्त्रोद्धारनित्यान्यासादिषु कामेश्वर्यादिक्रमस्यैव क्लृप्तत्वेन तादृशक्रमे चित्रो(त्रा) [ य इ ] व तासां व्युत्क्रमेऽपि त्रिपुरसुन्दर्याश्चित्रातः प्रागव्यवस्थानेनैत्र पूजनं तदपूजनमेव वा मा प्रसाङ्क्षीदतः कलाः षोडशेत्यनेन पुनस्तत्कीर्तनेन कामेश्वर्युत्तरं तत्पूजाप्रापणेन दृढीकरणम्। एवं गुरुशासनादित्यन्तेन ग्रन्थेन तिथिनित्यापूजनप्रकारो योऽयमुक्तः स नित्यः। पञ्चदश नित्याः प्रथमत्र्यस्ररेखास्थितपञ्चदशस्वरेषु पूजा( ज्या ) विसृष्यै( सर्गे ) षोडशीं मूलविद्ययाभ्यर्च्य मध्य इति कल्पसूत्रे तु प्राथमिक्येकैकनित्यापूजा कृष्णपक्षे व्युत्क्रमश्चेति द्वयमेव नास्तीति विशेषः। ततः कामेश्वर्यादिका इति ग्रन्थेन तु पूजनत्रयोत्तरं पुनरप्येकैकनित्यापूजनं त्रित्वसङ्ख्याविशिष्टमेकविंशतिमनुब्रूयादित्यादिवत् काम्यं विधीयते। परन्तु न तन्नित्यस्य बाधकम्, पुनःशब्देन काकाक्षिन्यायेन पूर्वोत्तरयोरन्वितेन समुच्चयस्य वाचनिकत्वात्। एवञ्च लक्ष्मीकामश्चेत्पूर्वोक्तं पूजनत्रयं कृत्वा तत्तत्तिथिनित्यां त्रिः सम्पूज्य त्रिपुरसुन्दरीं पूजयेदित्यर्थः। तदिदं द्योतयितुमुक्तं मूले काम्यकर्मानुरूपिणीरिति। स्वस्वकामनासदसद्भावानुगुण्येन पूजयेदिति तदर्थः। केचित्तु—त्रिधापूजनादिकमपि नित्यमेवेत्याहुः। एतत्पक्षाभिप्रायेण प्राञ्चोऽपि काम्यकर्मपदं नित्यचक्रार्चनपरमेव, बहुफलकपदत्वेन सर्वेषामुपासकानामिच्छाविषयत्वादिति व्याचक्षते। परे तु—तृतीयपूजनोत्तरं त[त्त]त्तिथिनित्यां सकृदेव पूजयेत्। प्रथमपूजायां द्वितीयपूजायाञ्च द्विःपूजितत्वेन तेन सह त्रैविध्योक्तिरनुवाद इति मन्यन्ते। अन्ये तु—कामेश्वर्यादिका नित्या विचित्रान्ता इत्यादिकं शुक्लप्रतिपदभिप्रायेणैवोक्तम्। तदिदमुपलक्षणं तत्तत्तिथिनित्याप्राथम्यतत्पूर्वतिथिनित्याचारम्ययोः ( चारम्भयोः )। ततश्च शुक्ले द्वितीयायां भगमालिन्यादिकामेश्वर्यन्ताः पूज्याः। तृतीयायां नित्यक्लिन्नादिभगमालिन्यन्ता इत्यादिकः क्रमः। एवं कृष्णपक्षे विचित्राद्या इत्यादेरप्युपलक्षणत्वाच्चित्रादिकामेश्वर्यन्ता ज्वालामालिन्यादिचित्रान्ताः सर्वमङ्गलादिज्वालामालिन्यन्ता इत्यादिः कृष्णप्रतिपदादिषु क्रम इत्याहुः। नव्या

अप्येतदनुमन्यन्ते। तादृशव्याख्यायां मूलं त उभय एव जानते। समूल- से०
कत्वे यथासम्प्रदायं व्यवस्थेति द्रष्टव्यम्॥ १२१ ॥

अथ त्रैलोक्यमोहनादिचक्रेषु प्रतिचक्रं योगिन्यश्चक्रं चक्रेश्वरी सिद्धिर्मुद्रा चेति पञ्चानां पदार्थानां पूर्वतन्त्रोक्तपूजाक्रमेण वासना उपदिशति—(तत्रेत्यादि)। तत्र नवावरणदेवीनां मध्ये, नित्यापूजनोत्तरदेशे वा। त्रैलोक्यमोहनचक्रस्य ज्येष्ठाशक्तिनिवृत्तिशक्त्यादिरूपा वासनाः पूर्वमुक्तास्तत्र पूजनीया देवताः प्रकटयोगिन्य इत्युच्यन्ते। [ता]स्वणिमाद्यष्टकं(के) [प्रकटत्वं] परापश्यन्त्यादिचतुर्विधा मातृका [तत्रत्या] स्थूला वैखरीनामिका, अकचटतपय [शवर्गरूपा तद्रूपत्वादित्यर्थः। तथा चोक्तं] शास्त्रारम्भ एव द्वादशश्लोक्याम्—वन्दे तामष्टवर्गोत्थमहासिद्ध्यष्टकेश्वरीमिति। ब्राह्मयाद्यष्टकस्य प्रकटरूपतामाह—त्वगादीति। 'त्वगसृङ्मांसमेदोस्थिमज्जशुक्राणि धातवः' इति सप्त धातवो वैद्यके प्रसिद्धाः। ओजोनामको धातुरष्टम इति तु वेदभाष्ये। एतेषां चाभिमानिन्यो देवता ब्राह्मयाद्याः क्रमादष्टौ। तासाञ्च शरीरे स्थितिर्भ्रूमध्यनितम्बनाभिहृदयकण्ठास्यनासाललाटादिस्थानावच्छेदेनेति प्राचां ग्रन्थेषु प्रसिद्धम्। ततश्च लिङ्गशरीराद्यपेक्षया त्वगादिर्घटितशरीरस्य स्थूलत्वात्तदीयदेवतानामपि प्रकटत्वम्। नन्वेवं सति प्राप्तिसिद्धिसर्वकामसिद्ध्योस्तन्त्रान्तरे पूजनीयत्वेनोक्तस्य मुद्रादशकस्य च कथं प्रकटत्वमित्याशङ्क्य सर्वानुगतं निर्वक्ति—स्थूलेति। स्थितत्वाच्चेति शेषः। विश्वस्य षट्त्रिंशत्तत्त्वात्मकस्य या प्रथा स्थूला क्षितिरूपा तदात्मनि चक्रे भूगृहे स्थितत्वादपि प्रकटत्वमित्यर्थः। एतेन यत्सुन्दरीतापिन्यां श्रूयते—"साणिमाद्यष्टकं भवति समात्रष्टकं भवति सप्रकटं भवति" इति, तत्प्राप्तिसिद्ध्यादेरुपलक्षणपरत्वेन व्याख्येयमिति ध्वनितम्॥ १२२-१२३ ॥

**अणिमाद्या महादेवि सिद्धयोऽष्टौ व्यवस्थिताः।**
**[1]तासु रक्ततरा वर्णैर्वराभयकरास्तथा॥ ११८ ॥**
**धृत[2]चिन्तामहारत्ना मनीषितफलप्रदाः।**
**ब्राह्मयाद्या अपि तत्रैव यष्टव्याः क्रमतः प्रिये॥ ११९ ॥**

---

१. तास्तु–से०। २. धृताचिन्ता–ख०।

**ब्रह्माणी पीतवर्णा च चतुर्भिः शोभिता मुखैः ।**
**वरदाऽभयहस्ता च कुण्डिका[1]क्षलसत्करा ॥ १२० ॥**

(दी०)अन्त्यभूगृहनिवासिनीनां नामग्रहणपूर्वकं ध्यानमाह—अणिमाद्या इति । अणिमाद्याः[2] 'अणिमा पश्चिमद्वारा' इत्यादि चतुःशतीशास्त्रोक्ता लघिमामहिमेशितावशिता[3]प्राकाम्यभुक्तीच्छाप्राप्तिसर्वका-[4]माख्याः सिद्धयस्तत्रादिशब्देन गृह्यन्ते[5] । अष्टौ व्यवस्थिता अष्ट-[6]सिद्धयो निघण्टुप्रसिद्धाः । अत्र तु दशेति तात्पर्यम्,

वामजङ्घां समारभ्य वामादिक्रमतोऽपि च ।
सिद्ध्यष्टकं न्यसेत्तेषु द्वयं पादतले न्यसेत् ॥ (या.हृ.सं.)

[7]इत्यत्रैवोक्तत्वात् । [8]महारत्नं चिन्तामणिः । शेषं स्पष्टम् । ब्राह्म्याद्या इति ।

ब्राह्म्याद्या 'ब्रह्माणी पश्चिमद्वारा' इति चतुःशतीशास्त्रोक्तास्तत्रैव मध्यचतुरस्रे यष्टव्याः । क्रमतः क्रमेण ॥ ११८-११९ ॥

तासां [9]प्रत्येकं ध्यानमाह—ब्रह्माणीति । करैरिति शेषः । [[10]शिष्टं स्पष्टम् ] ॥ १२० ॥

(से०) अणिमादीनां ध्यानान्याह दशभिः—( अणिमेत्यादि ) । वराष्टकाभेदाभिप्रायेण श्रुतावष्टत्वोक्तिरिति द्योतनायाष्टावित्युक्तम् । वराभयेति । पाशाङ्कुशौ वामदक्षयोर्दधतीति तु मन्त्रमहोदधौ । चिन्तामहारत्नं चिन्तामणिनामकं रत्नम् । तच्छिरसा दधती ॥१२४॥

( ब्राह्मीत्यादि ) । तत्रैव द्वितीयवीथ्यां द्वितीयरेखायां वा । कुण्डिका कमण्डलुः । अक्षोऽक्षमाला ॥ १२५-१२६ ॥

**माहेश्वरी श्वेतवर्णा त्रिनेत्रा शूलधारिणी ।**
**कपालमेणं परशुं दधाना पाणिभिः प्रिये ॥ १२१ ॥**

---

१. क्षस्रगुज्ज्वला–क० । २. अणिमाद्याः–ख० नास्ति । ३. वशित्व–ख० । ४. कामाख्यसिद्धयो दशादि–ख० । ५. गृह्यन्ते–ख० नास्ति । ६. अष्टौ सिद्धयो–ख० । ७. इत्यत्रैवोक्तम्–ख० । ८. धृतचिन्तामहारत्ना चिन्तामणिः–क० । ९. प्रत्येकं–ख० नास्ति । १०. कंसान्तर्गतं नास्ति ।

[ऐन्द्री[1] तु श्यामवर्णा च वज्रोत्पललसत्करा] ।
कौमारी पीतवर्णा च शक्तितोमरधारिणी ॥ १२२ ॥
वरदाभयहस्ता च ध्यातव्या [2]परमेश्वरी ।
वैष्णवी श्यामवर्णा च शङ्खचक्र[3]वराभयान् ॥ १२३ ॥
हस्तपद्मैस्तु[4] बिभ्राणा भूषिता दिव्यभूषणैः ।
वाराही श्यामलच्छाया पोत्रि[5]वक्त्रसमुज्ज्वला ॥ १२४ ॥
हलं च मुसलं खड्गं खेटकं दधती भुजैः ।
(ऐन्द्री[6] श्यामलवर्णा च वज्रद्वयलसत्करा) ॥ १२५ ॥
चामुण्डा कृष्णवर्णा च शूलं डमरुकं तथा ।
खड्गं वेतालकं चैव दधाना दक्षिणैः[7] करैः ॥ १२६ ॥
नागखेटकघण्टा[8]ख्यान् दधानान्यैः कपालकम् ।
महालक्ष्मीस्तु पीताभा पद्म[9]दर्पणमेव च ॥ १२७ ॥
मातु[10]लुङ्गफलं चैव दधाना परमेश्वरी ।
एवं ध्यात्वा यजेद्देताश्चक्रेशीं त्रिपुरां ततः ॥ १२८ ॥
कर्मेन्द्रियाणां वैमल्यात् कर[11]शुद्धिकरी स्मृता ।
[12]कायशुद्धिभवा सिद्धिर्गणिमा[13]चात्र संस्थिता ॥ १२९ ॥

(टी०) माहेश्वरीति । [एकेन[13] पाणिना शूलधारिणी त्रिभिः कपालमेणं परशुं दधाना] ॥ १२१-१२२ ॥

वरदाभयेति । स्पष्टम् । वैष्णवीति । स्पष्टम् । ऐन्द्रीति[14] स्पष्टम् ॥ १२३-१२५ ॥

---

१. कंसान्तर्गतं नास्ति—क० से० । २. च सुरेश्वरी—ख० । ३. चक्रगदाब्जकान्—ख० से० । ४. हस्तपद्मैश्च—ख०से० । ५. पोत्र—क० । ६. कंसान्तर्गतं नास्ति—ख०, किन्तु 'कपालमेणं परशुम्' इत्यस्याऽनन्तरं 'कौमारी पीतवर्णा च' इति वर्तते—ख० । ७. दक्षिणैर्भुजैः—ख०से० । ८. मुण्डाख्यं—ख० । ९. पद्मौ—ख०, पद्मे—से० । १०.मातुलिङ्ग—क० । ११. करशुद्धि—ख० से० । १२. तत्र—ख० । १३. कंसान्तर्गतं नास्ति—ख० । १४. ऐन्द्री इति' इत्यस्य पूर्वं 'करैरित्यर्थः' इत्यधिकं—ख० ।

दी॰ चामुण्डेति । वेतालः पिशाचविशेषः । शूलडमरुखड्गवेतालान् दक्षिणैः करैर्नागखेटकघण्टाकपालानि[1] वामकरैर्दधानेत्यर्थः ।

महालक्ष्मीरिति । स्पष्टम् । ननु मुद्रादशकं किमित्यन्तश्चतुरस्रे पूज्यत्वेन नोक्तम् ? सत्यम्, चतुःशतीशास्त्रे[2] अनुक्तत्वादत्रापि प्राधान्येन नाख्याताः[3] । किन्तु श्री[4]श्रीचक्रन्यासे—

मूलाधारे न्यसेन्मुद्रादशकं साधकोत्तमः ।

इति सूचिताः । अतोऽन्तश्चतुरस्रे मुद्रादशकमपि पूजयेत् ।

एवमिति । एवमुक्तप्रकारेण । एताः प्रकटयोगिनीः ध्यात्वा, चक्रेशीं त्रिपुरां यजेत् ॥ १२६-१२८ ॥

विद्यादेवतयोरभेदविवक्षया [5]त्रैलोक्यमोहनचक्रे[6] श्रीविद्यानिर्वचनमाह—कर्मेन्द्रियाणामिति ।

आत्मतत्त्वगतयोरशुद्धयोरत्र कर्मकरणात्मनोर्द्वयोः ।
शुद्धतत्त्वलय[7]भावनामयी शुद्धिरात्मकरयोः परा मता ॥

इत्यस्म[8]द्गुरूक्तरीत्या आत्मतत्त्वस्याऽशुद्धत्वात् कर्मेन्द्रियाणामात्मतत्त्वान्तःपातित्वात् करयोश्च कर्मेन्द्रियत्वा[9]दशुद्धयोः कार्यकरणात्मनोः करयोः स्वकारणशुद्धतत्त्वशिवाद्वैतभावनाकरशुद्धिः, तत्करीयम् । स्मृता निरुक्ता ।

कार्यशुद्धिभवेति ।

कारणात्मपरामृष्ट[10]कार्यरूपेण संस्थिताम् ।
करोमि चिन्मयीं शुद्धिं करयोः स्पर्शशोधिनीम्[11] ॥

इत्यभियुक्तवचनोक्तरीत्या कार्यस्य शुद्धिर्नाम कारणतावन्मात्रतया पर्यवसानम्[12] । 'अणोरणीयान्' इति श्रुत्युक्ताणीयसि कारणे विद्यमा-

---

१. खेटकमुण्डकपालानि—ख॰ । २. शास्त्रेऽप्यनुक्तत्वादत्रैव—ख॰ । ३. प्राधान्येनाख्यातव्याः—ख॰ । ४. श्री—ख॰ नास्ति । ५. च—इत्यधिकं—ख॰ । ६. मोहनचक्रेशीविद्या—ख॰ । ७. गत—ख॰ । ८. इत्यस्मदुक्तरीत्या—ख॰ । ९. दशुद्धयोः करयोः कार्ययोः स्वकारणशु—ख॰ । १०. कार्यरूपाङ्गलिस्थिताम्—ख॰ । ११. स्पर्शशोधनम्—ख॰ । १२. पर्यवसाना—क॰ ।

नस्यात्मनोऽणिमा [1]सिध्यतीत्यणिमासिद्धिः । सा चात्र त्रैलोक्यमो-[2] दी० हनचक्रे स्थितेति तात्पर्यम् ॥ १२६ ॥

(से०) ( माहेश्वरीत्यादि ) । एणं हरिणम् ॥ १२७ ॥

( कौमारीत्यादि ) । शक्तिः सैन्तीति महाराष्ट्रभाषया प्रसिद्धमायुधम् । तोमरो लोड इति प्रसिद्धः खलूरिकायां विद्यमानः ॥ १२८ ॥

( वैष्णवीत्यादि ) । चक्रं सुदर्शनाख्यं सहस्रारम् । गदा भाषया गदा इति प्रसिद्धा । अब्जकः पद्मः । "वा पुंसि पद्मं नलिनम्" इत्यादिकोशे वा पुंसीत्यस्य पुष्कराम्भोरुहाणि चेत्यन्तमन्वयात् पुंलिङ्गता ॥ १२९ ॥

( वाराहीत्यादि ) । पोत्री वराहः । "वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः" इत्यमरः । हल लाङ्गलम् । खेटकं चर्म ॥ १३० ॥

( ऐन्द्रीत्यादि ) । इन्द्राणी श्यामलेन्द्रनीलमणिवर्णा छाया कान्ति-र्यस्याः सा ॥

( चामुण्डेत्यादि ) । वेतालो भूतपिशाचाधिपतिर्देवताविशेषः । नागः सर्पः । अन्यैर्वामैः ॥ १३१-१३२ ॥

( महेत्यादि ) । पद्मे कमलद्वयम् । मातुलुङ्गो बीजपूरः ॥ १३३ ॥

(एवमित्यादि)। एता अणिमादिमहालक्ष्म्यन्ताः। त्रिपुराख्या त्रैलोक्यमोहन-चक्रेश्वरी तस्यास्तद्विद्यायाश्च करशुद्धिकरीति नाम निर्वक्ति—कर्मेन्द्रियाणा-मिति । करयोः कर्मेन्द्रियविशेषरूपत्वात् करपदं कर्मेन्द्रियसामान्योपलक्षकम् । तेषां वैमल्यं नाम तत्कृतदुरितक्षालनं तत्कर्तृत्व प्रवृत्तिनिमित्तीकृत्य तत्पदं प्रवर्तत इत्यर्थः । प्रतिचक्रमेकैका सिद्धिस्तत्तच्चक्रेश्यभेदेन विभाव्यैव पूजनीये-त्याह—करशुद्धिमवेति । नवमचक्रे योनिमुद्रा पूजनीयेति मूलकृतैवाग्रे वक्ष्यते । तेन ज्ञापकेनात्र चकारात् सर्वसंक्षोभिणीमुद्रापि पूज्येत्यर्थो वर्णनीयः ॥१३४॥

षोडशस्पन्दसन्दोहे चमत्कृतिमयीः कलाः ।
प्राणादिषोडशानां तु [3]वायूनां प्राणनात्मिकाः ॥ १३० ॥
बीज[4]भूताः स्वरात्मत्वात् कलनाद् बीजरूपकाः[5] ।
अन्तरङ्गतया [6]गुप्ता योगिन्यः [7]संव्यवस्थिताः ॥ १३१ ॥

---

१. सिध्यतीति सिद्धि—ख० । २. मोहने चक्रे—ख० । ३. प्राणानां—ख० से० । ४. बीजभूतत्व—ख० से० । ५. रूपगाः—ख० से० । ६ गुप्तयोगि—ख० से० । ७. संस्थिता मताः—ख० से० ।

कामाकर्षणरूपाद्याः सृष्टेः[1] प्राधान्यतः प्रिये ।
सर्वाशापूरणाख्ये तु चक्रे वामेन पूजयेत् ॥ १३२ ॥

[2]पाशाङ्कुशधरा ह्येता रक्ता रक्ताम्बरा[3]वृताः ।
प्राणशुद्धिमयी सिद्धिर्लघिमा भोक्तुरात्मनः ॥ १३३ ॥

त्रिपुरेशी च चक्रेशी पूज्या सर्वोपचारकैः ।
( [4]कौलिकानुभवाविष्टभोगपुर्यष्टकाश्रिताः ॥ १३४ ॥

वाग्भवाष्टकसम्बन्धसूक्ष्मा वर्गस्वरूपतः ।
तास्तु गुप्ततराः सर्वाः सर्वसंक्षोभणात्मके ॥ १३५ ॥

अनङ्गकुसुमाद्यास्तु रक्तकञ्चुकशोभिताः ) ।
( वेणीकृत[5]लसत्केशाश्चापबाणधराः शुभाः ) ॥ १३६ ॥

तत्तदाकारबुद्ध्यात्मभोग्यभोक्तु[6]महेशितुः ।
पिण्डादिपदविश्रान्तिसौन्दर्यगुणसंयुता ॥ १३७ ॥

चक्रेश्वरी बुद्धिशुद्धिरूपा च परमेश्वरी[7] ।
महिमासिद्धिरूपा [8]तु पूज्या सर्वोपचारकैः ॥ १३८ ॥

(दी०)द्वितीयचक्रे[9] पूजां सवासनामाह–षोडशस्पन्देति । स्पन्दो नाम परायास्तत्त्वरूपेण प्रसारः[10] । तदुक्तं परापञ्चाशिकायाम्—

सिसृक्षोः प्रथमस्पन्दः शिवतत्त्वं प्रभोः स्मृतम् ।

---

१. सृष्टिप्राधा–ख० से० । २. पाशाङ्कुशकरा एता–ख० । ३. इति–क० । ४. कंसान्तर्गतग्रन्थस्थले "प्रकृत्यष्टकरूपस्थाः कवर्गाद्यष्टवर्गगाः । अनङ्गकुसुमाद्यास्तु सर्वसंक्षोभकारके ॥ चक्रे चात्यन्तरङ्गत्वादेता गुप्ततरा मताः । पाशाङ्कुशधनुर्बाणकराः रक्ताः समर्चयेत् ॥" ख०से० पाठः । ५. कंसान्तर्गतं नास्ति–ख० से० । ६. महेशितुः–ख० से० । ७. परमेश्वरि–ख० । ८. च–ख० से० । ९. चक्रे सवासनां पूजामाह–ख० । १०. प्रसरः–ख० ।

तेन षोडश स्पन्दाः षोडश विकारा भूतेन्द्रियमनांसि तेषां [1]सन्दोहः। चमत्कारो नाम[2] तस्मिन् चिदतिशयोदयः। तदुक्तं क्रमोदये— दी०

स्थैर्यमेति[3] चमत्कारो विना विषयसङ्गतिम्[4]।

तन्मय्यो भूतेन्द्रियमनःसु[5] चिदनुप्रविष्टाः कलाः षोडश[6] स्फुरन्ति, तदात्मिका इत्यर्थः। कलाः षोडशसङ्ख्याकाः[7] कलाभिधानाश्च प्राण आदिर्येषां[8] ते अपानोदानसमानव्याननागकूर्म[9]कृकरदेवदत्तधनञ्जया दश प्रसिद्धा[10] वायवः,[11] अन्येष्वागमान्तरेषु मृग्याः. तेषां प्राणनात्मिकाः [ [12]सर्वेषां प्राणनात्मिकाः ] प्राणादयो ह्येते[13] तु तेषां प्राणादीनामपि प्राणनात्मिका इत्यर्थ । बीजभूता बिन्दुयुक्तत्वात् स्वराः षोडश अकारादिविसर्गान्ताः। तदात्मकत्वात् कलना[14]क्रमात्। सबिन्दुकस्वरप्राप्तत्वात्[15] कलनाद् बीजरूपकाः [ [16]स्वस्वबीजस्वरूपा अन्तरङ्गतया षोडशविकाराणां त्वगादिधातुवत्तत्राप्रकटत्वात्तन्मय्यः। ] तन्मया योगिन्यो गुप्ताः[17] संव्यवस्थिताः। अन्तरङ्गतया अन्तरङ्गम् अन्तरिन्द्रियं बुद्धिस्तच्चमत्कारमयत्वादेना अन्तरङ्गाः। अत एव गुप्ताः सर्वाशापूरणाख्ये तु[18] चक्रे। योगिन्य इत्यत्र छान्दसत्वाद् द्वितीयार्थे प्रथमा। कामाकर्षणरूपाद्याः[19] 'कामाकर्षणरूपा च' इत्यादिचतुःशता[20]शास्त्रोक्ताः। सृष्टः [21]प्राधान्यतः सृष्टो वामचक्रस्यैव प्रधा[22]नत्वादस्यैव चक्रस्य सृष्टिरूपत्वा[23]दतस्ता योगिनीर्वामेन पूजयेद् वामावर्तक्रमेण[24] पूजयेत्। विकाराः षोडश विलासभूताः। प्राणादिषोडशवायूनां [25]जगत्प्राणनादिशक्त्या-

---

१. 'समूहः' इत्यधिकं–ख०। २. नाम कश्चिदिति–क०। ३. मेव–ख०। ४. विषयसङ्गतिम्–इति–क०। ५. भूतेन्द्रियमनांसि–क०। ६. षोडशधा–ख०। ७. संख्याकलाभि–ख०। ८. येषां प्राणापानव्याना‍दो–ख०। ९. क्रुकल–क०। १०. प्रसिद्धाः–ख० नास्ति। ११. वायवः तेषु षडागमा–ख०। १२. कंसान्तर्गतं नास्ति–ख०। १३. ह्येतत्तु एतेषां–क०। १४. कलनात् प्रक्रमात्–ख०। १५. प्राप्तत्वाद् बीजरूपगः–ख०। १६. कंसान्तर्गतं नास्ति–ख०। १७. गुप्ताः संस्थिताः–ख०। १८. तु–ख० नास्ति। १९. कामाकर्षणरूपाद्या–क० नास्ति। २०. चतुःशतिशा–क०। २१. सृष्टिप्रा–ख०। २२. प्रधान्याद् अस्य चक्रस्य–ख०। २३. त्वात्ततस्ताः–ख०। २४. क्रमेणार्चयेत्–ख०। २५. जगत्प्राणादि–ख०।

दी० त्मिकाः सबिन्दु [1]षोडशस्वरैराकलिताः । प्रत्येकं तन्मयीरन्तरङ्ग-चिदनुप्रविष्टषोडशविकारतया गुप्ताः कामाकर्षिण्याद्याः कलाः सर्वाशा-परिपूरके चक्रे वाममार्गेण पूजयेदित्यर्थः ॥ १३०–१३२ ॥

एतासां ध्यानमाह—पाशाङ्कुशेति । स्पष्टम्[2] । तच्चक्रदेवतार्चने[3] सिद्धिमाह—प्राणशुद्धिमयीति ।

'आनन्द[4]वातं सुधया सुतोदकम्' इति श्रुत्युक्तरीत्या [5]विश्वप्रा-णनरूपया [6]स्वधया सह [ [7]यदेकमपारगुणः प्राणिति तस्मिन् ] स्वकारणे लयः । प्राणादीनां वायूनां शुद्धिर्नामाऽत्र प्राणशब्दो वायु-मात्रोपलक्षणपरः, तेन वायुलयलक्षणायां [8]शुद्धौ मनोलयलक्षणः[9] समाधिर्भवति । [10]अतस्तदेकरसभूतस्य भोक्तुरात्मनो जीवस्य [11]यस्तद्गुणो लघिमा सिद्धिर्भवति ॥ १३३ ॥

त्रिपुरेशीति । यादृशैरुपचारैः सर्वै[12]र्गन्धादिभिर्मूलदेवी पूजिता, यादृशैरेवोपचारैः सर्वाशापरि[13]पूरणचक्रे चक्रेशी त्रिपुरेशी पूज[14]नीयेत्यर्थः ।

तृतीयचक्रे पूजां सवासनामाह—कौलिकेति । कुलं[15] षड्विंशत्त-त्त्वात्मकशरीरम्, तद्विषयानुभवः कृशोऽहं स्थूलोऽहमित्यादि । तेनाविष्टो जीवः । तदाश्रिततया तस्य भोगपुर्यष्टकम् ।

चितिश्चित्तं च चैतन्यं चेतनाद्वयकर्म च ।
जीवः कला च देवेशि ! सूक्ष्मपुर्यष्टकं मतम् ॥

इति स्वच्छन्दसङ्ग्रहोक्तरीत्या सूक्ष्मपुर्यष्टकं तदाश्रिताः तन्मय-तया वाग्भवानामैकाराणामष्टकेन सम्बद्धाः । सूक्ष्मवर्गं वैखरीवर्णाष्टक-वर्गम् । तदुक्तं स्वच्छन्दसङ्ग्रहे—

स्थूलं पञ्चाशदाकारं सूक्ष्ममष्टाष्टकं स्मृतम् ।

---

१. सबिन्दुस्वरैः कलिताः–ख० । २. स्पष्टम्–ख० नास्ति । ३. देवतार्चन-सिद्धि–ख० । ४. आनन्दवातं स्वधया तदेकम्–क० । ५. विश्वप्रीणन–ख० । ६. सुधया–ख० । ७. कक्षान्तर्गतग्रन्थस्थले 'यदेकरसमयमतः प्राणा एत-स्मिन्'–ख० । ८. 'तु' इत्यधिकं–ख० । ९. लक्षणा समा–क० । १० ततस्तदे–ख० । ११. यद्गुणो–ख० । १२. सर्वगन्धा–ख० । १३. परि–ख० नास्ति । १४. पूज्येति स्पष्टम्–ख० । १५. 'कुलम्' इत्यारभ्य 'रक्तकञ्चुकेति' इत्यन्तं नास्ति–ख० ।

तत्स्वरूपत्वात्तदात्मकत्वाद् गुप्ततरा सूक्ष्मवैखरीवर्णवर्गाष्टकमय- दी० त्वादेता अपि सूक्ष्माः। अतोऽत्यन्तरङ्गतया गुप्ततरा इत्यर्थः। ताः सर्वा अनङ्गकुसुमाद्याः अनङ्गकुसुमा पूर्वा' इत्यादिचतुःशतीशास्त्रोक्ताः सर्वसङ्क्षोभणाह्वये तृतीये चक्रे अष्टदलकमले पूज्या इति योज्यम्।

तासां ध्यानमाह—रक्तकञ्चुकेति। स्पष्टम्॥ १३४-१३६॥

तत्तदाकारेति। इन्द्रियद्वारा बहिर्निर्गत्य तत्तदाकारा तत्तदिन्द्रियार्थाकाराकरिता[1] बुद्धिरन्तःकरणपरिणतिस्तदात्मनो भोग्याः शब्दस्पर्शरूपरसगन्धास्तेषां भोक्ता प्रमाता स एव महीशिता भूपतिः क्षेत्रज्ञ इति यावत्। तस्य पिण्डादीनां पिण्डपदरूपरूपातीतानां स्थानानां विश्रान्ति[2]रूपातीते तुरीयपदे मुक्तिः। अत्र [3]प्रामाणिकवचनम्—

पिण्डे मुक्ताः पदे मुक्ताः रूपे मुक्ता षडानन!।
रूपातीते तु ये मुक्तास्ते मुक्ता नाऽत्र संशयः॥

[4]सैव सौन्दर्यम् [5]इत्यनित्याशुचिसंसारलक्षणपरमदौर्भाग्यवि[6]-रणनित्यशुद्धपरमप्रेमास्पदसर्वसम्पूर्णानन्दपरमशिवरूपप्रकाशनमेव सौन्दर्यं तदेव गुणस्तेन संयुता तदेकरसतया चक्रेश्वरी सर्वसङ्क्षोभणाख्यतृतीयचक्रेश्वरी। कोऽर्थः? चिन्मयशब्दादिविषयप्रमातुः क्षेत्रज्ञस्य पिण्डपदरूपरूपातीतविश्रान्तिरूपलक्षणा तत्त्रितयपुरातनी तदेकरस्यसौन्दर्यशालिनी त्रिपुरसुन्दरी त्रितयचक्रेश्वरीत्यर्थः। बुद्धिशुद्धिरूपा बुद्धिशुद्धिर्नाम विषयसंसर्गं विहाय निर्विकल्पचिदात्मलयस्तद्रूपा। अत एव महिमासिद्धिरूपा बुद्धेर्विषयोपरागाच्चिदात्मनो महिमा महिमत्वं[7] सिद्ध्यति। तत्सिद्धिरूपा चक्रेश्वरी सर्वोप[8]चारैः पूर्वोक्तैर्गन्धादिभिः[9] पूज्या॥ १३ -१३८॥

(से०) अथ द्वितीयावरणवासनामाह—( षोडशेत्यादि )। षोडशसंख्या ये स्पन्दाः स्पन्दनशीलाः प्राणाः प्राणापानादयः पञ्च, एकादशेन्द्रियाणीत्येवं षोडश। एतेषां मध्ये वायुचलनमेव स्पन्दनम्। इन्द्रियेषु स्वस्वविषया-

---

१. कारिता–ख० नास्ति। २. विश्रान्ती रूपापीतं तुरीयपदं मुक्तिः–ख०। ३. प्रमाणव–ख०। ४. सैवायसौ–क०। ५. सुन्दरत्वं अनि–ख०। ६. विहाय तस्य नि–ख०। ७. महत्त्वं–ख०। ८. सर्वोपचारकैः–ख०। ९. गन्धादिभिरभ्यर्च्या–ख०।

से० भिमुख्यमेव स्पन्दनम् । एते सर्वेऽपि प्राणपदवाच्यत्वात् स्पन्दाः, "प्राणमनुत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्ति" इति श्रुतौ प्रथमप्राणपदस्य प्राणादिवृत्तिपञ्चकपरत्वेन द्वितीयप्राणपदस्यैकादशेन्द्रियपरत्वेन च भगवत्पादभाष्यकारैर्व्याख्यातत्वात्, "सप्त गतेर्विशेषितत्वाच्च" इत्युत्तरमीमांसाद्वैतीयाधिकरणे तथा निर्णयाच्च । एतेषां षोडशप्राणानां सन्दोह एकीकरणमेव चमत्कृतिः, अनवरतस्पन्दनस्वभावानामेकत्र स्तम्भनस्यासाध्यत्वेन चमत्काराधायकत्वात् । सम्यग्दोहः प्रपूरणमिति व्युत्पत्त्या स्वात्मैकतानतारूपा परिपूर्तिरेव चमत्कारस्तदाधायिकास्तदभिन्ना वा तन्मयीः । अमुमेवार्थं विवृणोति—प्राणादीति । षोडशप्राणानां प्राणनं जीवनं तदात्मिकाः, तेषां स्वात्मैकतानतापरित्यागेन विषयान्तरसञ्चारस्यैव मरणरूपत्वात् । उक्तञ्च क्रमोदये—

"स्थैर्यमेव चमत्कारो विना विषयसङ्गतिम् ।" इति ।

प्राञ्चस्तु—पञ्च भूतानि दशेन्द्रियाणि मनश्चेति षोडश स्पन्दास्तत्त्वानि, सन्दोहः समूह इति पूर्वार्द्धं व्याख्याय प्राणादयो नागकूर्मादयश्चेति दश वायवोऽन्ये षड्वायवस्त्वागमान्तरे मृग्याः, एवं षोडश प्राणा इत्युत्तरार्द्धं व्याचक्षते । बीजभूता अनुस्वारैः सहिताः, तत्साहित्यमन्तरेण वर्णानां बीजत्वाभावात् । तादृशस्वरात्मताया आकलनेन बीजरूपं सृष्टिबीजत्वं गच्छन्तीति तथा त्वगादिधात्वपेक्षयान्तरङ्गत्वाद् गुप्ततया संस्थिता गुप्तयोगिन्य इति मताः कामाकर्षिण्याद्याः कलाः सर्वाशापूरकचक्रे पूजयेत् । इतिशब्दाध्याहारे योगिनीशब्दे न द्वितीयापेक्षा । द्वितीयार्थे प्रथमा विभक्तिरिति तु प्राञ्चः । एताः सृष्टिबीजभावापन्नत्वेन वामाशक्तिप्रधानत्वाद्वामेन स्वाग्राद्यप्रादक्षिण्येनैव पूजयेत् । वाममार्गेणेति व्याख्यानं त्वाग्रहमात्रम् । एतासां ध्यानमाह—पाशेति । "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति श्रुत्युक्तलक्षणस्य संघातात्मकस्य भोक्तुरात्मनो ये षोडश प्राणास्तच्छुद्धयभिन्ना लघिमा सिद्धिस्त्रिपुरेशी चकारात् सर्वविद्राविणी मुद्रा च पूज्येत्यर्थः ॥१३५-१३९॥

---

तृतीयावरणवासनामाह—( प्रकृतीत्यादि ) । सांख्यतन्त्रे हि पञ्चविंशतिस्तत्त्वानि गणितानि—प्रकृतिर्महानहङ्कारः पञ्चतन्मात्राणि पञ्चभूतानि दशेन्द्रियाणि मनः पुरुषश्चेति । तेषामाद्या सर्वेषां प्रकृतिर्न कस्यापि विकारः । द्वितीयाद्याः सप्त तु स्वपूर्वपूर्वेषां विकाराः स्वोत्तरोत्तरेषां प्रकृतयश्च । नवमाद्याः षोडश तु स्वपूर्वविकारा एव । न कस्यापि प्रकृतयः । पञ्चविंशस्तु

न कस्यापि विकारो न कस्यापि प्रकृतिश्चेति वस्तुस्थितिः । तदेतदुक्तमार्यकृष्णेन से० सांख्यसप्तत्याम्—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ इति ।

एतेषु प्राथमिकं तत्त्वाष्टकं प्रकृतिरूपत्वात् प्रकृत्यष्टकपदेनेह गृह्यते । स्पष्टमन्यत् । त्रिपुरसुन्दर्याख्यचक्रेश्वरीवासनामाह—तत्तदिति । घटपटाद्याकारबुद्धिरूपं यद्भोग्यं तस्य भोक्ताऽत एव महीशिता भूपतिरिव तस्य पिण्डादिपदेषु मूलाधारानाहताज्ञासहस्राख्येषु चतुर्षु स्थानेषु या प्रत्येकं विश्रान्तिः संसारकदध्वाटनजन्यश्रमनिवृत्तिपूर्वकसहजानन्दावाप्तिः, सैव सौन्दर्याख्यो गुणः, तेन संयुता तत्प्रदात्री । तदुक्तञ्च—

पिण्डे मुक्ता पदे मुक्ता रूपे मुक्ताः षडानन ।
रूपातीते तु ये मुक्तास्ते मुक्ता नात्र संशयः ॥ इति ।

ईदृशी या बुद्धिशुद्धिः—"ऋतम्भरा तत्र प्रज्ञा" इति योगसूत्रोक्तसत्यग्राहित्वलक्षणा तद्रूपा परमेश्वरी त्रिपुरसुन्दरीनाम्नी चक्रेश्वरी तद्रूपैव महिमासिद्धिश्चकारात् सर्वाकर्षिणीमुद्रा च पूज्येत्यर्थः ॥ १४०–१४३ ॥

**द्वादशग्रन्थिभेदेन समुल्लसितसंविदः ।**
**विमर्शान्तदशावेशाच्छाक्तानुभवपूर्वकम् ॥ १३९ ॥**
**उन्मेषशक्तिप्रसरैरिच्छाशक्तिप्रधानकैः ।**
**तदेवाऽकुलसङ्घट्टरूपैर्वर्णचतुष्टयैः ॥ १४० ॥**
**वेद्योष्मरूप[1]सावर्णमिश्रेच्छाभावितैरपि ।**
**कुलशक्तिसमावेशरूपवर्णद्वयान्वितैः ॥ १४१ ॥**
**शक्तेः सारमयत्वेन प्रसृतत्वान्महेश्वरि ।**
**सम्प्रदायक्रमायाताश्चक्रे सौभाग्यदायके ॥ १४२ ॥**

(दी०) चतुर्थचक्र [2]सवासनां पूजामाह—द्वादशग्रन्थिभेदेनेति । ग्रन्थिः षट्चक्राणां प्रत्येकम् ऊर्ध्वाधोग्रन्थिद्वयमिति द्वादशग्रन्थयः । अत्रैव वक्ष्यति—

---

१. शाद्यर्णैं—क० से० । २. पूजां सवासना—ख०

दी०

द्वादशग्रन्थिभेदेन वर्णानां ह्यन्तरे प्रिये ! ।
[1]यदोल्लसति शृङ्गाटपीठात् कुटिलरूपिणी ॥ इति ।

चतुःशती[2]शास्त्रोक्तरीत्या समुल्लसिताया उद्गच्छन्त्याः। संविदः कुण्डलिन्याः। द्वादशग्रन्थिभेदेन विसर्गान्तदशावेशाद्विसर्गः षोडशस्वरः। तेन विसर्गशब्देन षोडशसंख्या गृह्यते। अतो विसर्गान्तं षोडशान्तम्।

यच्छोडशकलाकारं भूतान्तं व्योमगञ्ज [3]तत् ।
षोडशान्तमिति ख्यातं व्योमस्थानेन्दुमण्डलम् ॥

इति स्वच्छन्दसङ्ग्रहोक्तरीत्या तदेव। [ [4]दशावेशश्चिद्दीपाकारत्वात्तदावेशस्तत्रासक्तिः।] तदुक्तमत्रैव—

व्योमेन्दुमण्डलासक्ता सुधा[5]स्रोतःस्वरूपिणी ।

शाक्तानुभवपूर्वकं मूले[6] स्थितायाः कुण्डलिन्याः षट्चक्रग्रन्थिसञ्चयभेदक्रमेण व्योमेन्दुमण्डलासक्ति[7]परिकल्पनमेव शाक्तानुभवः। तत्पूर्वकं भाविवर्णोत्पत्तिरिति क्रियाविशेषणम् ॥ १३ ॥

त्रैलोक्यमोहनादिचक्रत्रये वैखरीमयतावासनामुक्त्वा सर्वसौभाग्यदायकादिचक्रत्रये भूतलिपिमध्यमामय[8]वासनामाह—उन्मेषशक्तीति ।

अकुलसङ्घट्टरूपैरकुलं[9] ब्रह्मरन्ध्राधोमुखसितसहस्रदलकमलम्। तत्रस्थोऽकारः—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ॥

इति सङ्केतपद्धत्युक्तरीत्या[10] अकारः परमशिवात्मकोऽकुलशब्देन लक्ष्यते। तेन सङ्घट्टः सम्बन्धः। [[11]तद्रूपैरिच्छाशक्तिप्रधानकैः। इच्छाशक्तिरिकारः। उन्मेषशक्तिप्रसरैः। उन्मेषशक्तिरुकारः।] तदुक्तं परापञ्चाशिकायाम्—

---

१. यदुल्लसति–ख० । २. चतुःशति–क० । ३. यत्–ख० । ४. कंसान्तर्गतग्रन्थस्थाने 'दशा चिदाधारत्वात् तदावेशस्तदापत्तिः'–ख० । ५. श्रोत–ख० । ६. मूलोत्थितायाः–ख० । ७. सक्त–ख० । ८. मध्यमामयतां वा–क० । ९. अकुलं–ख० नास्ति । १०. पद्धत्युक्तोऽकारः–ख० । ११. कंसान्तर्गतो ग्रन्थः–ख० नास्ति ।

अनुत्तरेच्छा उन्मेष[1] आनन्दै[2]षणमूलता । दी
क्रियेच्छाज्ञानशक्तीनां सत्ता चोच्छू[3]नता च षट् ॥

कोऽर्थः ? मूलोत्थितताया इच्छाशक्तेः कुलकुण्डलिन्या अकुलस्थेन अकारेण सङ्घट्टे सत्येकारो जायते । [4]तस्यैवोन्मेषशक्तिसङ्घट्टे सति ॐकारो जायते । तयोरेवाऽकुलसङ्घट्टे सति ऐकारौकारौ जायेते[5] इत्यर्थः । तदुक्तं परापञ्चाशिकायाम्—

अनुत्तरानन्त[6]शक्तिरिच्छाशक्तौ नियोजिता ।
त्रिकोण[7]मथ षट्कोणमिच्छायां रूढिमागता ॥ इति ।
ते एवोन्मेषयोगेन क्रियाशक्ति[8]स्फुटं वपुः ।
उक्तत्रिशक्तिसङ्घट्टत्रिशूलं द्वैतघस्मरम् ॥ इति च ।

मिश्रेच्छाभावितैरपि ।

इच्छेषणान्तरारूढाः स्फुटास्फुटजगन्मयाः ।
चत्वारः [9]परतो वर्णाः षडात्मानः[10] प्रचोदिताः ॥

इति परा[11]पञ्चाशिकोक्तरीत्या अकुलेषणाभ्यां मिश्रेण भाविताः [12]षण्ढाः स्थूलवर्णाः, तैरपि । तत्र ह्रस्वद्वयमेव ग्राह्यम् । अत एवाऽकुलः । एको वर्ण इच्छात्मक । द्वितीय उन्मेषोऽपरः । परं[13] षण्ढह्रस्वद्वयं च एकारैकारौकारौकाराश्चेति नव स्वरा भवन्ति । वेद्योष्मरूपसावर्णैः ।

सत्तावाचिनि बीजे तु शादिमायान्तिमं जगत् ।
विलुप्तप्रत्ययाकारमेतत् सपरिशिष्यते ॥

इति परापञ्चाशिकोक्तरीत्या वेद्यस्य षट्त्रिंशत्तत्त्वात्मनः । सङ्कल्परूपा ऊष्माणः, 'शषसहा ऊष्माणः' इति तन्त्रान्तरवचनात् । एवम्भूतः स आदिर्यस्य हकारस्य स एव वेद्योष्मरूपशादिर्हकारस्तदाद्यवर्णैः । अत्रैक आदिशब्दोऽध्याहार्यः ।

---

१. उन्मेषा–क० । २. आनन्दशन ऊनता–क० । ३. सत्ता चेच्छूलता वषट्–ख० । ४. उन्मेषशक्तिरूपायास्तस्या एवाकुलसङ्घट्टे–ख० । ५. जायेत क०, जायते–ख० । ६. अनुत्तरानन्द–क० । ७. त्रिकोणमध्यषट्कोणमिच्छायां रूढमागतम्–ख० । ८. शक्तौ–ख० । ९. पुरतो–ख० । १०. षण्ढात्मानः–ख० । ११. परा–ख० नास्ति । १२. षडः ऋॡॠवर्णाः–क० । १३. परं–क० नास्ति ।

दी० कुलशक्तिसमावेशरूपवर्णद्वयान्वितैः ।

कुलशक्तिः कुण्डलिनी, तस्याः समावेश उदयविश्रान्तिस्थानद्वयम्, आधारं ब्रह्मरन्ध्रमयं तद्रूपं वर्णद्वयं लकारवकारात्मकम् ।

आधारपङ्कजं पीतं चतुष्पत्रं [1]सुकेशरम् ।

इत्यादि, 'पार्थिवं पङ्कजं ह्येतत्' इत्यन्तेन स्वच्छन्दसङ्ग्रहोक्तरीत्या आधारपङ्कजस्य पार्थिवात्मकतया[2] लकारः ।

ब्रह्मरन्ध्रे ध्रुवादूर्ध्वे कुलपद्मं महेश्वरि ।
श्वेतं सुकेशरोपेतं सहस्रारमधोमुखम् ॥
[3]व्यापिनी केवला शक्तिरमृतौघप्रवर्षिणी ।

इत्यन्तेन स्वच्छन्दसङ्ग्रहोक्तरीत्या अमृतमयो वकारः । एतद्वर्णद्वयान्वितैः । कोऽर्थः ? कुलशक्तेरिच्छात्मिकायाः कुण्डलिन्या उन्मेषात् षट्चक्रपञ्चगगनद्वादशग्रन्थिभेदक्रमेणाकुलसमावेशात् 'अइउऋऌएऐओऔहयवरल' इति वर्णचतुर्दशकमुत्पद्यते । तदुक्तमागमान्तरे भूतलिप्युद्धार[4]संग्रहे—

"पञ्च ह्रस्वाः सन्धिवर्णा [5]व्योर्वाय्वग्निजलं धरा" इति ।

तन्मयं चतुर्दशारचक्रमित्यर्थः ॥ १४०–१४१ ॥

सम्प्रदायक्रमायातसौभाग्यदायकशब्दयोर्वासनामाह–शक्तेरिति । शक्तेरिच्छाशक्तेः कुण्डलिन्याः सारः प्रसारः पूर्वोक्तरीत्या अकुलस्थानस्थाऽनुत्तरशिवसंसर्गः, तन्मयत्वेन तदुत्पन्नत्वात् । एतेषां[6] वर्णानां तैर्वर्णैः प्रसृतत्वात् सर्वसंक्षोभिण्यादिशक्तीनां सम्प्रदायक्रमायातत्वम् ।

"सम्प्रदायो महाबोधरूपो गुरुमुखे स्थितः" इति ।

पूर्वोक्तरीत्या गुरुमुखादधिगतत्वादेतदेव[7] वर्णोत्पत्तेः । आसां च तन्मयत्वम् । अत एव[8] ताः सम्प्रदायक्रमायाता इत्यर्थः । "अणिमासदृशा[9]स्तास्तु रक्त[10]वर्णैः" इत्यादिपूर्वोक्ता[11] अणिमासिद्धि-

---

१. सकेसरम्–ख० । २. पार्थिवतया–ख० । ३. व्यापिनी केवलं शश्वदमृतौघप्रवर्षिणम्–क० । ४. प्रसङ्गे–ख० । ५. व्योमेराग्निजलं धरा–ख० । ६. एतेन–ख० । ७. त्वाद्वर्णो–ख० । ८. 'च' अधिकं–क० । ९. सदृशीः–ख० । १०. रक्ततरा वर्णैः–ख० । ११. पूर्वोक्ताणिमासिद्धिसदृशीः–ख० ।

सदृशरूपाः । सर्वसंक्षोभिणीपूर्वाः[1] "सर्वसंक्षोभिणी[2] शक्तिः" इत्यादि- दी० चतुःशतीशास्त्रोक्ताः ॥

(से०) चतुर्थावरणवासनामाह—(द्वादशेत्यादि)। व्याकरणतन्त्रे चतुर्दशाक्षरोऽयं परणकारेणाणप्रत्याहारः। स एव मन्त्रतन्त्रे भूतलिपिमन्त्र इत्युच्यते। तथा च तदुद्धारः—

"पञ्चह्रस्वाः सन्धिवर्णा व्योमवाय्वग्निकन्धराः" इति ।

कञ्च धरा चेति विग्रहः। एते च वर्णा वैखरीरूपत्वेन भासमाना अपि मध्यमारूपा एवेति सम्प्रदायः। चतुर्दशारचक्रस्थाश्चतुर्दशदेवतास्तु भूतलिपिवर्णाभिमानिशक्तिकदम्बतः प्रसृताः। वर्णास्तु मूलाधारस्थकुलकुण्डलिन्याः षट्चक्रभेदेनाकुललिङ्गेन योगान्निर्गत्य(च्छ)दमृतानुभवदशायामेव सर्वेऽपि प्रायेणोत्पन्नाः। तत्राकुलाल्लिङ्गादकारः। इच्छाशक्तेरिकारः। तदुन्मेषशक्तेरुकारः। इच्छोन्मेषमिश्रितायाः कुण्डलिन्या ऋकारलृकारौ। अकुलस्य तादृशकुण्डलिन्याः संघट्टनादेकार ओकारश्च। ताभ्यामकुलस्य पुनः संघट्टादैकार औकारश्च। एवमन्येषां वर्णानामुत्पत्तिः परापञ्चाशिकासौभाग्यसुधोदयादिषु वर्णितानुसन्धेया। तदिदमाह—द्वादशेति। प्रतिचक्रमध ऊर्ध्वं चेति द्वौ द्वौ ग्रन्थी। तेषां भेदनेनोर्ध्वं लसितायाः संविदः कुण्डलिन्याः। विसर्गः षोडशवरस्तदन्तस्य षोडशान्तस्य ब्रह्मरन्ध्रस्य दशायां य आवेशस्तस्माज्जायमानो यः शाक्तानां कौलिकानामनुभवस्तत्पूर्वकं यथा भवति तथोत्पन्नैश्चतुर्दशभिर्वर्णैरुपलक्षितायाः शक्तेः शक्तिसमष्टिरूपकुण्डलिन्याः सारमयत्वेन निष्कर्षरूपेण प्रसृतत्वादेता देवताः सम्प्रदाययोगिन्य इत्युच्यन्ते। ईदृशार्थस्य सम्प्रदायक्रमायातत्वादिति योजना। तान् वर्णानाह—उन्मेषेति द्वाभ्याम्। एतेषां तृतीयाबहुवचनान्तानां पदानां चतुर्दशभिरिति विशेष्यमध्याहार्यम्। वेद्योष्मरूपसार्द्वर्णैरित्येव वा विशेष्यम्। उन्मेषशक्तितः प्रसरो यस्योकारस्य तद्वद्भिः। अर्शआद्यच्। इच्छाशक्तिः प्रधानोपजीव्या यस्यैकारस्य तद्वद्भिः। अकुलस्यार्थात् पूर्वोक्ताभ्यां भाविभ्यां च यः सङ्घट्टस्तद्रूपं वर्णानां चतुष्टयमेतद्रूपं येषु तैः। तद्रूपैरित्यस्य योग्यतया सन्ध्यक्षरेष्वेवार्थिका विशेषणता। प्राञ्चस्तु—अकुलेन सङ्घट्ट इति व्याख्याय वर्णचतुष्टयं तस्य विशेषणत्वं मन्यमाना अप्यकुलपदेनाकारमपि स्वातन्त्र्येणाद्रियन्ते। तद् दुर्घटम्, विशेषणत्वेनान्वितस्य स्वातन्त्र्यायोगात्, तथात्वे चतुष्टयोक्त्यस्य

---

१. सर्वसंक्षोभिणीपूर्वाः—ख० नास्ति। २. 'सर्वसंक्षोभिणी शक्तिः' इत्यत्र 'सर्वज्ञा सर्वशक्तिश्च'—ख०।

से० विरोधात्, तस्य चतुर्भिरित्येव भवतां व्याख्यानात्। वेद्यायाः संविद्रूपाया वह्निकुण्डलिन्या ऊष्मरूप उष्णस्पर्शरूपो यो वर्णो रेफः, रेफाधिकारे "श्रीकण्ठ ऊष्मा हृदयम्" इति नान्दनात् कोशात्। तस्योष्मणः सादिरिति विशेषणम्। विशेष्यविशेषणभावे कामचारान्न पूर्वनिपातः। स्वस्यादिना यकारेण सहित इत्यर्थः। वेद्योष्मरूपः सादिर्वर्णो येषु तैः। यकारसहितरेफवद्भिरिति यावत्। अथवा वेद्योष्मणो रूपं स्वरूपं येषु तैः। आदिसहितैश्च तैर्वर्णैश्चेति विग्रहः। प्राञ्चस्तु—वेद्यस्य षट्त्रिंशत्तत्त्वात्मनः सङ्कल्परूपा ऊष्माणः शषसहास्तदन्यतमरूपो यः सादिः सकार आदिर्यस्य स हकारः, स पुनरादिर्ययोस्तौ यकाररेफौ, व्योमादिभूतपञ्चकवर्णेषु तयोर्हकारात् परत्वात्। तेन हयरैस्त्रिभिर्वर्णैरित्यर्थः। द्वितीयस्यादिशब्दस्याध्याहार इति व्याचख्युः। तन्मन्दम्, अध्याहृतेनादिशब्देन सह श्रुतस्य सादिशब्दस्य समासायोगात्, समासे सत्यप्यन्यपदार्थयोर्यकाररेफयोरेव क्रियान्वयित्वेन समस्यमानसादिपदार्थस्य हकारस्य क्रियान्वयालाभाच्च। मिश्ररूपयेच्छया भाविताभ्यां कामगॢकारौ तद्वद्भिः। कुलेत्यकुलस्याप्युपलक्षणम्। समावेशेत्यधिकरणे घञन्तम्। कुलशक्तिश्च समावेशौ च तत्स्वरूपे ये वर्णद्वये। अकारहकाररूपवर्णयुगलवकारलकाररूपवर्णयुगले, ताभ्यां युगलाभ्यामन्वितैः। अकुलकुण्डलिन्यकाररूपा, तत्समावेशस्थानं सहस्रारस्येन्दुमण्डलममृतमयं वकाररूपम्। कुलकुण्डलिनी हकाररूपा, तत्समावेशस्थानं मूलाधारं पार्थिवमण्डलं लकाररूपम्। एवं चतुर्भिरन्वितैरिति यावत्। प्राञ्चस्तु कुलशक्त्योः समावेशाविति तत्पुरुषमङ्गीकृत्य वकारलकारद्वयमात्रमुद्धरन्ति। तन्न, अकारहकारयोरलाभेन न्यूनत्वापत्तेः, त्वदुक्तोद्धारयोरसम्भवस्योक्तत्वात्॥ १४४–१४७॥

**निरन्तरप्रधा[1]रूपसौभाग्यं बलयोगतः।**
**अन्वर्थसंज्ञिके[2] देवि अणिमासदृशाः[3] शुभाः॥ १४३॥**
**सर्वसङ्क्षोभिणीपूर्वा देहाक्षादिविशुद्धिदाः।**
**ईशित्वसिद्धिरपि च प्रोक्तरूपे पुरत्रये॥ १४४॥**
**योगादिक्लेशभेदेन सिद्धा त्रिपुरवासिनी।**
**एताः सम्पूजयेद् देवि सर्वाः सर्वोपचारकैः॥ १४५॥**

---

१. प्रथा–से०। २. संज्ञके–ख० से०। ३. सदृशीः–ख० से०।

(दी०) निरन्तरप्रधा शिवाद्वैतभावना सैव सौभाग्यं परमसुभगपरमप्रेमास्पदपरशिवाभेदगोचरत्वात्तदेव बलं शक्तिः, तद्योगतोऽनित्याशुचिरूपपरमदुर्भगसर्व[1] जुगुप्सिततल्लक्षणसंसारपरिपन्थिपरम[2]प्रेमास्पदसर्वस्पृहणीयपरमसुभगपरमशिवाहन्तालक्षणसौभाग्यप्रतिपादनशक्तिसंयोगात्। अन्वर्थसंज्ञके[3] अनुकूलार्थोत्तरशालिनि[4] संज्ञावति सौभाग्यदायके चक्रे सम्पूजयेदित्यनुषङ्गः।

देहेति। देहः षट्त्रिंशत्तत्त्वसमुदायलक्षणः। तच्छब्देन तदहन्ताभिमानी प्रमाता लक्ष्यते।' अक्षाणीन्द्रियाणि प्रमाणानि। आदिशब्दाद्विषयाः प्रमेयरूपा गृह्यन्ते। तेषां [5]विशुद्धिश्चिदेकविश्रान्तिः। तस्यां [6]विशुद्धौ यष्टुरीश्वरत्वं[7] स्वातन्त्र्यं[8] सिद्ध्यति। सा चाऽत्र प्रोक्तरूपे प्रमातृमानमेयलक्षणे पुरत्रये[9] चिन्निवासस्थानत्वात्। अत्रैव वक्ष्यति—

"मातृमानप्रमेयाणां पुराणां परिपोषणी" इति ॥ १४२-१४४ ॥

योगादीति। योगादिक्लेशभेदेन[10]। आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेन, इन्द्रियाणां [11]प्राप्यकारित्वनियमात्। ततोऽप्यर्थसन्निकृष्टेन्द्रियेणेति तन्त्रान्तरोक्तरीत्या मातृमानमेयेषु[12] तद्रूपेण चिन्मरीचीनां प्रसारः[13] तत्समवाय[14]योगः स[15] एवादिक्लेशः। असङ्गाढ्या[16]परिच्छिन्नसंविदात्मने मानसेन्द्रियविषयात्मना बहिरुपराग एव हि क्लेशः क्लिष्टत्वम्। [17]तदभेदेन प्रत्यङ्मुखतया तदेकरस्येन परप्रमातृविश्रान्तिरभेदः। तदुक्तं परापञ्चाशिकायाम्—

[18]सर्वसंविन्नदीभेदभिन्नविश्रान्तिभूमये।
नमः प्रमातृ[19]वपुषे शिवचैतन्यसिन्धवे[20] ॥

स्तोत्रावल्यामपि—

"यत्र यत्र मिलिता मरीचयः
तत्र तत्र विभुरेव जृम्भते"। इति।

---

१. जुगुप्साभेदलक्षण-ख०। २. पर-ख०। ३. संज्ञिके-क०। ४. शालिसंज्ञा-ख०। ५. शुद्धिर्विवेकविश्रान्तिः-ख०। ६. शुद्धौ-ख०। ७. ईशित्वं-ख०। ८. स्वातन्त्र्यं-क० नास्ति। ९. त्रयेऽपि निवा-ख०। १०. शब्देन-क०। ११. कंसान्तर्गतं नास्ति-क०। १२. प्रमेये-ख०। १३. प्रसरः-ख०। १४. तत्समयो योगः-क०। १५. स चादि-ख०। १६. विच्छिन्न-ख०। १७. तद्भेदेन-ख०। १८. सर्वचित्तादिकाद्भेदाद्भिन्न-ख०। १९. विधये-ख०। २०. सिद्धये-ख०।

दी० सिद्धा त्रिपुरवासिनी पूर्वोक्तपुरत्रयविश्रान्तिरूपिणी चतुर्थचक्रेश्वरी। एताः पूज्या आवरणदेवताः सिद्धिचक्रेश्वरीयुताः सर्वाः सर्वोपचारैर्गन्धादिभिः सम्पूजयेत् ॥ १४५ ॥

(से०) (निरन्तरेत्यादि)। निरन्तरप्रथा भेदाविषयकज्ञानं तद्रूपमेव सौभाग्यं तदेव बलं तद्विषयको योगोऽवयवशक्तिस्तस्याः सत्त्वादन्वर्थके योगरूढपदवाच्ये सौभाग्यदायकाख्ये चक्रे स्थिताः सर्वसंक्षोभिण्याद्या देवताः। तासां ध्यानमाह—अणिमेति। वराभयकराश्चिन्तामणिधरा इत्यर्थः। दर्पणपाशवामकराः पानपात्राङ्कुशदक्षकरा इति तु बृहत्तन्त्रे। ता देहस्येन्द्रियाणां त्वगादिधातूनां च विशोधिकाः। तद्रूपैवेशित्वसिद्धिः। चकारात् सर्ववशङ्करीमुद्रा त्रिपुरवासिन्याख्या चक्रेश्वरी चेत्येताः पूजयेत्। त्रिपुरवासिनीपदं निर्वक्ति—प्रोक्तेति। तत्र तन्त्रोक्तं यत्पुरत्रयं प्रमातृप्रमाणप्रमेयरूपं त्रिपुटीत्वेन प्रसिद्धं तद्विषयको योगः सम्बन्धः। स च प्रमात्रादिभेदेन व्यवस्थितः। आदिपदेन भेदभानम्। तेन यः क्लेशः। भेदज्ञानस्य भयजनकतायाः "य एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति द्वितीयाद्वै भयं भवति" इत्यादिश्रुतिसिद्धत्वात्। योग एवादिक्लेशः प्रथमदुःखमिति केचित्। तस्य भेदेन नाशेन सिद्धा व्युत्पन्ननामा। तेन वासिनीशब्दः काष्ठतक्षणसाधनवासीशब्दवच्छेदनार्थक इत्युक्तम् ॥ १४८–१५० ॥

सदातनानां नादानां नवरन्ध्रस्थितात्मनाम्।
महासामान्यरूपेण व्यावृत्तध्वनिरूपिणी ॥ १४६ ॥
अस्थिरस्थिरवेद्यानां छायारूपैर्दशार्णकैः।
कुलकौलिकयोगिन्यः सर्वसिद्धिप्रदायिकाः ॥ १४७ ॥
श्वेताम्बरधराः[1] श्वेताः श्वेताभरणभूषिताः।
मन्त्राणां[2] स्वप्रथारूपयोगादन्वर्थसंज्ञके ॥ १४८ ॥
सर्वसिद्धिप्रदाद्यास्तु चक्रे सर्वार्थसाधके।
लोकत्रयसमृद्धीनां हेतुत्वाच्चक्रनायिका ॥ १४९ ॥
त्रिपुरा श्रीमहेशानि मन्त्रशुद्धिभवा पुनः।
वशित्वसिद्धिराख्याता एताः सर्वाः समर्चयेत् ॥ १५० ॥

---

१. श्वेता वराभयकराः—ख० से०। २. स्वप्रथामननत्राणयोगा—ख० से०।

(दी०) पञ्चमचक्रे पूजां सवासनामाह—सदातनानामिति । सदातनानां यावच्छरीरभावितानां नादानाम् अविकृतशून्यस्पर्शनादध्वनिबिन्दुशक्तिबीजाक्षराख्यानाम् । नवरन्ध्रस्थितात्मनां नवरन्ध्राणि नवाधाराणि सुषुम्नान्तर्गतगगन[1]भागरूपाणि । [[2]आधारस्वाधिष्ठानमणिपूरानाहततदूर्ध्ववज्रपद्मकण्ठलम्बिकाविशुद्धाज्ञाख्यानि ] । तदुक्तं [3]स्वच्छन्दसङ्ग्रहे—

> आधारं स्वाधिष्ठानं च मणिपूरमनाहतम् ।
> मध्यमं वज्रकण्ठं च लम्बिकां च विशुद्धिकाम् ॥
> आज्ञां च [4]नवकं विद्धि षट्चक्राणि [5]त्रिहीनकम् । इति ।

तेषु स्थितात्मनां तेषां महासामान्यरूपेण महद् आद्यन्तरहितं निर्विशेषध्वनिलक्षणं सामान्यं समष्टिस्तद्रूपेण । व्यावृत्तध्वनिरूपिणी एवं व्यावृत्तो विभक्तो दशधा ध्वनिः तद्रूपिणी, अविकृतादिनादमयसूक्ष्ममध्यमारूपिणीत्यर्थः। अस्थिरस्थिरवेद्यानाम् अस्थिरवेद्यानि कर्मेन्द्रियगोचरतया क्रियारूपाणि वचनादानगमनविसर्गानन्दाख्यानि, स्थिरवेद्यानि ज्ञानेन्द्रियगोचराः शब्दस्पर्शरूपरस[6]गन्धाः, तेषामस्थिरस्थिरवेद्यानाम् । छायारूपैः[7] बिम्बप्रतिबिम्बरूपैः । दशार्णकैः[8] टतवर्गद्वयदशार्णैराविष्कृता इति शेषः । [9]कुलकौलयोगिन्यः । अत एव कुलस्य देहस्य अवयवभूतानि दशेन्द्रियाणि कुलशब्देनोच्यन्ते, [10]तत्सम्बन्धात्तद्बाह्यदशविषयाः कौलिका इत्युच्यन्ते, तैर्योगः सम्बन्धः कार्यकारण[11]भावलक्षणो यासां ताः कुलकौलयोगिन्यः[12] । ननु [13]भूतलिप्युद्धारक्रमे क्रमप्राप्तौ कवर्गचवर्गौ [[14] कथं टतवर्गौ तस्मिन् दशारे व्युत्क्रमेण कथ्येते ? उच्यते ], चतुर्दशारदशारद्वयचक्राणां स्थितिरूपत्वाद् भूतलिपेर्मध्यमावयवत्वान्मध्यमायाश्च स्थितिरूपत्वात् स्थितिक्रमोऽयं वर्गव्यत्ययः[15] । अत एव तत्कारणभूतसूक्ष्ममध्य-

---

१. भासरूपत्वात्–ख० । २. कंसान्तर्गतं नास्ति–ख० । ३. स्वच्छन्दे–ख० । ४. नवके–ख० । ५. त्विहो–क० । ६. रस–क० नास्ति । ७ रूपैः प्रतिबिम्बभूतैर्दशा–ख० । ८. दशार्णकैराविर्भूता–क० । ९. कुलकौलिकयोगिन्यः–ख० । १०. तत्सम्बन्धात्तत्संग्राह्या दश–ख० । ११. भाव–ख० नास्ति । १२. कुलकौलिकयोगिन्यः–ख० । १३. भूतलिपिक्रमेण–ख० । १४. कंसान्तर्गतग्रन्थस्थाने 'अस्मिन् दशारे व्युत्क्रमेणोच्येते'–क० । १५. वर्गन्यासः–ख० ।

दी० मात्मना[1] नादमयत्व[2]संज्ञाकथनमस्य चक्रस्य। सर्वसिद्धिप्रदायिकाः[3] सर्वस्य पूर्वोक्तस्य ज्ञानकर्मेन्द्रियविषयजातस्य सिद्धिः प्रतीतिः प्रमातृविश्रान्तिः, तल्लक्षणायाः [4]सिद्धेः प्रदायिकाः ॥ १४६-१४७ ॥

तासां[5] ध्यानमाह-श्वेताम्बरधरा इति। स्पष्टम्।

सर्वार्थसाधकचक्र[6]व्युत्पत्तिमाह—मन्त्राणामिति। [[7]सर्वसिद्धिप्रदाद्याः "सर्वसिद्धिप्रदा देवी च" इत्यादिचतुःशतीशास्त्रोक्ताः। मन्त्राणां पूर्वोक्तनिर्वचनानां मननत्राणवतां स्वप्रधारूपयोगात् स्वस्य शिवात्मनः साधकस्य]। प्रथा[8] शिवाहम्भावभावना [9]तदेव मननत्राणनं तद्योगादन्वर्थसंज्ञके सर्वार्थसाधकपदा[10]नुकूलार्थवत्संज्ञाशालिनि शिवाहम्भावभावनालक्षणमननात् सर्वेषां [11]स्वस्वसाधकानाम् अर्थं परमप्रयोजनं मोक्षं साधयतीति विशेषात्[12] सर्वार्थसाधकचक्रे संस्थिता इति शेषः।

स्वनामपदा[13]र्थव्युत्पत्तिपुरःसरमेतच्चक्रेश्वरी[14]माह—लोकत्रयसमृद्धीनामिति। [[15]लोकयतीति लोकः, लोकनं लोकः, लोक्यत इति लोकः] इति व्युत्पत्त्या लोकत्रयस्य मातृमानमेयलक्षणस्य समृद्धीनां परिपूर्ण[16]प्रमातृविश्रान्तिलक्षणानां हेतुत्वात् त्रिपुरा[17] श्रीपञ्चमचक्रेश्वरी पूज्येत्यर्थः।

मन्त्रशुद्धीति। मन्त्राणां शुद्धिर्नाम 'अकुले विषुसंज्ञे च' इत्यादिपूर्वोक्तरीत्या [18]उन्मन्यन्तकाललयलक्षणोच्चारणेन। [19]चिन्मयताभावना तादृशमन्त्रशुद्ध्या स्वसाधकस्य वशित्वम्। [[20]सकलजगत्सर्जने रक्षणे

१. त्मना–ख० नास्ति। २. त्व–ख० नास्ति। ३. प्रदायकाः–क०। ४. सिद्धेः–क०नास्ति। ५. आसां–ख०। ६. चक्रोत्पत्तिमा–ख०। ७. कंसान्तर्गतं नास्ति–ख०। ८. स्वप्रथा–ख०। ९. तदेवामननत्राणं त–ख०। १०. पदार्थानुकूला–ख०। ११. स्वसाध–ख०। १२. विशेषात्–क० नास्ति। १३. र्थवद् उत्पत्ति–ख०। १४. चक्रेशीमा–ख०। १५. कंसान्तर्गतस्थले 'लोकयतीति लोकतेऽनेनेति लोक्यत'–ख०। १६. पूर्णपरप्रमा। १७. त्रिपुरा श्रीः पञ्चम–ख०। १८. उन्मनीपर्य्यन्तं कलाबीजलक्षणो–ख०। १९. कंसान्तर्गतस्थाने 'चिन्मयधन्तभावनं मातृमन्त्रशुद्धयादौ'–ख०। २०. कंसान्तर्गतस्थले 'सर्वजगत्प्रसवे सर्वजगत्संहारे च'–ख०।

**संहारे च] स्वायत्तत्वं[1] सिद्ध्यति, तादृशपरशिवप्राप्तिः। सा चाऽस्मिन् दी० चक्रे वशित्वसिद्धिरस्ति। एताः सर्वा आवरणदेवताश्चक्रे[2]श्वरी-सिद्धिसंयुताः समर्चयेत् ॥ १४८-१५० ॥**

(से०) पञ्चमावरणवासनामाह—(सनातनानामित्यादि)। अथ आरभ्योर्ध्वं प्रसृतायां सुषुम्णायां दश पर्वाणि तेषां मध्ये नवावकाशास्त एव रन्ध्रपदेनोच्यन्ते। तादृशदशस्थानान्यभिव्याप्य यावच्छरीरपातं जायमानो नादानुसन्धानाभ्यास-पाटवेन श्रूयमाणो नादो मध्यमा वागित्युच्यते। स एकोऽपि नादस्तत्तत्स्थाना-वच्छिन्नः सन् दशभिर्नामभिरभिलप्यते—अविकृतः शून्यः स्पर्शो नादो ध्वनिर्बिन्दुः शक्तिर्बीजमक्षरमारब्धश्चेति। एवं दशधा विभक्तो यो ध्वनिस्तद्रूपिणा महा-सामान्यरूपेण विभाजकोपाधिदशकव्यापकेन सर्वानुगतमध्यमात्वेन धर्मेणोप-लक्षिता इत्यर्थः, मध्यमास्वरूपा इति यावत्। वेद्या विषयाः पञ्च भूतानि, तानि कार्यकारणभेदेन द्विविधानि। तेषु कार्याण्यस्थिराणि मिथ्यात्वात्। कारणानि स्थिराणि सत्यत्वात्, "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतेः। तानि च कार्याणि स्थूलभूतानि व्योमादीनि कारणानि भूतसूक्ष्माणि शब्दादीनि पञ्च पञ्च, तेषां छायारूपैः प्रकाशरूपैर्दशार्णकैः कवर्गचवर्गोभया-त्मकैर्दशभिर्वर्णैरुपलक्षिताः। तदिदमुक्तं चक्रसङ्केत एव—

भूततन्मात्रदशकप्रकाशालम्बनत्वतः।
द्विदशारस्फुरद्रूपं क्रोध्रीशादिदशार्णकम् ॥ इति।

एतेनैतत् प्राचां व्याख्यानम्(?)अस्थिरवेद्यानि कर्मेन्द्रियगोचरा वचनादीनि, स्थिरवेद्यानि ज्ञानेन्द्रियगोचराः शब्दादीनि, तत्प्रतिबिम्बरूपैष्टवर्गतवर्गोभययोगे सर्वेषां वर्णानां स्थितिरूपता तदभावे तदभाव इत्यर्थः (?) मातृकान्यासत्रैविध्य-विदां स्पष्टत्वात्। कुलं त्रिपुटी, कौलिकश्चिद्रूपात्मा। तयोरभेद एव योगः, तद्वत्यः। कुलमिन्द्रियाणि, कौलिका विषया योगः, कार्यकारणभाव इति तु प्राञ्चः। आसां ध्यानमाह—श्वेता इति। स्वस्यैव प्रथा सर्वात्मत्वेन प्रसरः। तस्य मननं युक्तिभिरनुचिन्तनं [त]देव त्राणं(ण)रूपत्वात् सर्वपुरुषार्था-त्मक(कं) तद्दातृत्वरूपाद्योगादवयवशक्तेः सत्त्वादन्वर्थसंज्ञके सर्वार्थदायक-चक्रे स्थिताः सर्वसिद्धिप्रदाद्या दश देवताः। त्रिपुराश्रीपदमपि त्रिभुवनसमृद्धि-

1. स्वातन्त्र्यं सिद्ध्यतीति तादृशी परशिवताप्राप्तिः—ख०। 2. चक्रे श्रीसिद्धिसंयुताः—ख०।

से० कारणवाचकत्वादन्वर्थमित्याह—लोकत्रयेति । लोकत्रयशब्दोऽपि त्रिपुटीपर एवेत्यन्ये । वशित्वसिद्धेर्वासनामाह—मन्त्रशुद्धीति । उक्तमननत्राणरूपशुद्धि-जन्येत्यर्थः । उपलक्षणमेतदुन्मादिनीमुद्रायाः ॥ १५१–१५५ ॥

ऊर्ध्वाधोमुखया देवि कुण्डलिन्या प्रकाशिताः ।
कुलेच्छया बहिर्भावात् कादिवर्णप्रथामयी[1] ॥ १५१ ॥
निगर्भयोगिनीवाच्याः[2] स्वरूपावेशरूपके ।
सर्वावेशकरे[3] चक्रे सर्वरक्षाकरे पराः ॥ १५२ ॥
सर्वज्ञाद्याः स्थिता[4] एताः सह पुस्ताक्षमालिकाः ।
मातृमानप्रमेयाणां पुराणां परिपोषिणी ॥ १५३ ॥
त्रिपुरामालिनी ख्याता चक्रेशी त्रिपुरमोहिनी[5] ।

(दी०) षष्ठचक्रे पूजां[6] सवासनामाह—ऊर्ध्वाधोमुखयेति । "ऊर्ध्वाधो-मुखया यदोल्लसति" इत्यादिचतुःशतीशास्त्रोक्तरीत्या अकुल[7]स्थपरपुरुष-प्राप्तये ऊर्ध्वमुखया पुनरधोमुखया [8]विश्वसृष्ट्ये मूलाधारं प्रविशन्त्या कुण्डलिन्या प्रकाशिता अभिव्यञ्जिताः कारण सत्त्वात् । कुलेच्छया कुल-मुक्तलक्षणं मातृमानमेयरूपं तत्रेच्छया तन्निर्माणेच्छया बहिर्भावात् [9]कादिवर्णप्रधामयी षट्त्रिंशत्तत्त्वसङ्कलनरूपतत्त्वत्रयमयमातृमानमेय-लक्षणकुलनिर्माणेच्छया [10]अकुलस्थपरशिवाद् बहिः प्रसृतया समस्त-वर्णगर्भिण्या कुण्डलिन्या ककारादिदशवर्णप्रधारूपा निर्मिता इत्यर्थः । निगर्भयोगिनीवाच्या निगर्भयोगिन्य इति[11] वचनाः ।

निगर्भो[12] हि महादेवि ! शिवगुर्वात्मगोचरः ।

इति पूर्वोक्तरीत्या[[13]ऽद्वैतप्रधालक्षणद्वैतप्रधालक्षणपरप्रमातृयोगो यासां ताः] योगिन्यो विषयेन्द्रियसंसर्गलक्षण[14]दशेन्द्रियवृत्तयश्चिन्मरी-

---

१. प्रथामयाः–ख० । २. वाचा स्त्र–क० । ३. सर्वरक्षाकरे चक्रे सर्वावेशकरे पराः–ख० से० । ४. स्थिताश्चैता हस्त–ख० से० । ५. सर्वमोहिनी–से० । ६. चक्रपूजां–ख० । ७. स्थ–ख० नास्ति । ८. स्त्रसृष्ट्ये–ख० । ९. कचादि–ख० । १०. अ–ख० नास्ति । ११. इति वचनात्–ख० । १२. निगर्भोऽपि–ख० । १३. कंसान्तर्गतस्थले 'अद्वैतलक्षणपरप्रमातुः योगो आसामिति'–ख० । १४. लक्षणा दश–ख० ।

चयो निगर्भयोगिन्यः । स्वरूपावेशरूपके स्वरूपस्य साधकस्यात्मनः[1] दी०
प्रमातुरावेशः परशिवोऽहमिति मतिः । आवेशो हि लोके ब्रह्म-राक्षसोऽहमितिवत् पराहन्ताप्रथा, तद्रूपके तन्निरूपके । अत एव सर्वावेशकरे । "यत्र यत्र मनो याति" इत्यादि, "तत्र तत्रात्तमार्गेण चैतन्यं व्यज्यते प्रभोः" इति विज्ञानभैरवभट्टारकोक्तरीत्या सर्वत्र[2]-तदावेशतदभेदेन[3] स्फुरणं करोतीति सर्वावेशकरे । चक्रे षष्ठे चक्रे सर्वरक्षाकरे 'काकेभ्यो रक्षतामन्नम्'[4] इतिवत् [5]प्रतिकूलपदार्थादु-पहतिपरिहारः । रक्षा नाम सर्वस्माद्भेदप्रपञ्चलक्षणात् परिपन्थिनो रक्षा परशिवाभेदप्रतीतिरूपा तत्करे । पराः परशिवाद्वैतप्रतिपादन-[6]परत्वादुत्कृष्टाः । सर्वज्ञाद्याः 'सर्वज्ञा सर्वशक्तिः' इत्यादिचतुःशती-शास्त्रोक्ताः स्थिताः ।

तासां ध्यानमाह—एता इति । पुस्तं पुस्तकम् । शिष्टं स्पष्टम् ।

नामव्युत्पत्तिपुरःसरं [7]चक्रेश्वरीमाह—मातृमानप्रमेयाणामिति । [ [8]परसंवित्स्पन्दरूपत्वान्मातृमानमेयान्येव पुराणि तेषां पुराणां परि-पोषिणी प्रधानेनोपबृंहिणी] । अत एव त्रिपुरामालिनी ख्याता निरुक्ता । चक्रे[9] षष्ठचक्रे । सर्वमोहिनी [10]एतत्कृतमोहवशादेव हि मातृमान-प्रमेयरूपा प्रथा । तदुक्तं परापञ्चाशिकायाम्—

"स्वांशरूपेषु [11]भानेषु मायासत्त्वविभेदधीः" इति ।
विद्याशक्तिविशुद्धिं च सिद्धिं प्राकाम्यसंज्ञिताम्[12] ।
एताः सर्वोपचारेण पूजयेद्देवताः क्रमात् ॥ इति ।

मन्त्राः पुंरूपवाच्याधिष्ठिताः, विद्याः स्त्रीरूपवाच्याधिष्ठिताः । अत एव विद्याशक्तेः सौभाग्यविद्यावर्णवाच्यायाः षट्त्रिंशत्तत्त्वमय्या [13]विशुद्धिस्तदतीतपरचिल्लक्षणा तद्रूपाम् ।

---

१. साधकात्मनः–ख० । २. सर्वत्र तत्पदावेशस्तद्–ख० । ३. देन स्वस्यैव स्फु–ख० । ४. रक्षतामयमिति–ख० । ५. तत्प्रति–क० । ६. परत्वात् सर्व–ख० । ७. चक्रेशीमाह–ख० । ८. कंसान्तर्गतस्थले 'सर्वेषां सर्वप्रथा-प्रदानेनोपबृंहिणी–ख० पाठः । ९. चक्रेशी षष्ठचक्रेशी–ख० । १०. अत एव कृतमोहिनी–ख० । ११. भागेषु–ख० । १२. संज्ञिनां–क० । १३. विशुद्धि-स्तवतीत–क० ।

दी० प्राकाम्यसंज्ञिकां[1] सिद्धिं [2]कामनारूपलक्षणाम्। तदुक्तं महाकविभिः—

द्रवः सङ्घातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः।
व्यक्तो व्यक्तेतरश्चापि प्राकाम्यन्ते विभूतिषु ॥ इति।

एता देवताः[3] क्रमात् प्रथमावरणदेवताः पश्चाच्चक्रेशीं ततः सिद्धिमिति क्रमात्[4] सर्वोपचारेण। [5]जातावेकवचनं [6]सर्वोपचारैः पूजयेदित्यर्थः॥

(से०) षष्ठावरणवासनामाह—(ऊर्ध्वेत्यादि)। कुण्डलिन्या ऊर्ध्वयो-(र्ध्वाधो) यातायातदशायामुत्पन्नाः सर्वज्ञादिदेव्यः। अत एव निगर्भपदवाच्याः, नितरां गर्भे स्थितत्वात्। नन्वीदृशरहस्यस्थले समुत्पन्नाः कथं प्रकटा जाता इत्यत आह—कुलेच्छयेति। कुलस्य त्रिपुर्या निर्माणेच्छया ताः शक्तयो बहिरागताः। अत एव वैखरीरूपकादिवर्णमय्यो जाताः। अत्र कादिशब्दो यथाश्रुतः कवर्गचवर्गरूपवर्णदशकपर इति प्राञ्चः। चक्रसङ्केताविरोधाय मकारादिदशकपर इत्यपि क्लिष्टं व्याख्यातुं युक्तम्। "कादिः कालीति शक्तिस्ते" इति तन्त्रराजे मतद्वयकर्तृत्वेन शक्तिद्वयस्य प्रसिद्धत्वादिह कादिशब्दः शक्तिपरो मतकर्तृत्वलक्षणया कालीपरो वा। शक्तिशब्दस्तु प्र(म)कारपरत्वेन शक्त्यादिनवपर्यन्तेति श्लोके व्याख्यात एव। "मः काली क्लेशितः कालो महाकालो यमो रविः" इति कोशात् कालीशब्दोऽपि मकार एव, ककार एव वा काल्यादिशब्दैकदेशः, ककारात्तु प्रभञ्जनः" इत्यत्र कामकलाशब्दैकदेशवत्। न च मन्वस्रे चक्रसङ्केते टकारादय उक्ताः। पूजासङ्केते त्वणप्रत्याहारी-(र)गाश्चतुर्दश वर्णा उक्ता इति परस्परविरोधः कथं न परिहृत इति वाच्यम्, तत्र परिहारस्यासम्भवेन विकल्पस्यैव न्याय्यत्वात्, सम्भवत्यविरोधेऽष्टदोषदुष्टविकल्पस्यायुक्तत्वात्। स्वं निजं रूपं ब्रह्म तस्यावेशोऽनावृतत्वेन भानम्। भूतोऽहमित्याकारकभान एव भूतावेश इति व्यवहारदर्श(?)करम्। अत एव सर्वरक्षाकरणनामकं चक्रम्, सर्वात्मत्वविषयकावरणभङ्गस्यैव रक्षापदार्थत्वात्। हस्तयोः पुस्तकमक्षमाला च यासां ता इति तु सर्वज्ञादीनां ध्यानमुक्तम्। सप्तमीविशेषणे

१. संज्ञितां–ख०। २. कामनानुरूप–ख०। ३. देवताः सर्वज्ञाद्याश्चक्रेशीसिद्धिमुद्रायुताः क्रमा–ख०। ४. क्रमात् पूर्वोपचारे–ख०। ५. जातावेकत्वं–ख०। ६. सर्वैरुपचा–ख०।

बहुव्रीहाविति हस्तपदस्य पूर्वनिपातः। त्रिपुरमालिनीपदे मल मल्ल धारण इति सै०
धातुतो निष्पन्नोऽपि मालिनीशब्दो पोषणार्थकः, धातूनामनेकार्थत्वादित्याशयेन निर्वक्ति—मात्रिति। त्रिपुरापदे दीर्घस्तु छन्दोव्याकरणयोर्विरोधे छन्दो बलीय इति परिभाषानुसारात्। विद्याप्ति(प्ति)कामाः(याः) शक्तेः पञ्चदश्या विशेषेण शुद्धिस्तदीय(?)वत्फलदानसामर्थ्याधानम्। तदात्मिका प्राकाम्यसिद्धिः। प्राकाम्यपदञ्च व्याख्यातं वृद्धैः—

द्रवः संघातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः।
व्यक्तोऽव्यक्ततरश्चापि प्राकाम्यं ते विभूतिषु॥ इति।

चकारान्महाङ्कुशामुद्रां च पूजयेत्॥ १५६-१५९॥

**निरुद्धवायुसङ्घट्टस्फुटितग्रन्थिमूलतः॥ १५४॥**
**हृदयान्तरसंवित्तिशून्यपुर्यष्टकात्मना।**
**बीजरूपस्वरकलास्पृष्टवर्गानुसारतः॥ १५५॥**
**रहस्ययोगिनीर्देवीः[1] संसारदलनोज्ज्वले।**
**सर्वरोगहरे चक्रे संस्थिता वीरवन्दिते॥ १५६॥**
**वशिन्याद्या रक्तवर्णा वरदाभयमुद्रिताः।**
**पुस्तकं जपमालां[2] च दधानाः सिद्धयोगिनीः॥ १५७॥**
**शुद्धविद्याविशुद्धिं च भुक्तिसिद्धिं महेश्वरि।**
**ईश्वरीं त्रिपुरां[3] सिद्धां पूजयेद् बिन्दुतर्पणैः॥ १५८॥**

(दी०) सप्तमचक्रे पूजां सवासनामाह—निरुद्धेति। निरुद्धयोः[4] परिहृतस्वैराचारयोर्वाय्वोः प्राणापानयोः सङ्घट्टात्।

गुदमाकुञ्च्य बहुशः प्राणापानौ निरुध्य च।
संयोज्यते—

इत्यभियुक्तवचनोक्तरीत्या संयोगात् स्फुटितो ग्रन्थिः सुषुम्नान्तर्गत-मूलाधारकमलपर्यन्तं वसन् तादृशं मूलं मूलाधारम्। ततो हृदयान्तर-

---

१. देवि—ख०से०। २. जपमालाश्च—ख०। ३. त्रिपुरासिद्धिं—ख०से०। ४. 'निरुद्धयोः परिहृत' इत्यारभ्य 'दुर्लक्ष्यत्वाच्छून्यमिति च' इत्यन्तं—ख० नास्ति।

संवित्तिशून्यपुर्यष्टकात्मना "ध्यायन् भुजगाकृतिं हुङ्कारविह्वलज्योतिः दी० पवनक्षेपमनोभिर्गमयेदूर्ध्वम्" इत्यभियुक्तवचनोक्तरीत्या मूलादुत्थितायाः कुण्डलिनीरूपायाः।

ततो हृदयपद्मान्तः स्फुरन्तीं सांविदीं कलाम्।

इत्यभियुक्तवचनोक्तरीत्या हृदयान्तरे स्फुरन्त्याः संवित्तेश्चिदात्मनः।

चितिश्चित्तं च चैतन्यं चेतनाद्वयकर्म च।
जीवः कला च देवेशि सूक्ष्मपुर्यष्टकं मतम्॥

इति स्वच्छन्दसङ्ग्रहोक्तरीत्या सूक्ष्मपुर्यष्टकानां सूक्ष्मतया दुर्लक्ष्यत्वाच्छून्यमिति च।

"हृत्पुण्डरीकं पुरमध्यसंस्थम्" इति [1]श्रुत्युक्तरीत्या पुरं शरीरं चिदष्टकरूपं सूक्ष्मशरीरं शून्यपुर्यष्टकं तदात्मना तद्रूपेण[2] संस्थिता इत्यनुषङ्गः।

द्विधेयं मातृका देवी[3] बीजयान्यात्मना स्थिता।

इति परापञ्चाशिकोक्तरीत्या [ [4]बीजरूपाः स्वरा अकारादिविसर्गान्ताः कलाः षोडश ], ताभिः स्पृष्टा [5]अवर्णेन संयुता वर्गाः कचटतपयशाः, तेषाम्। अनुस्वारः,

अवर्गः प्रथमो देवि! वशिनी तत्र संस्थिता।

इत्यादिचतुःशतीशास्त्रोक्तत्वात्[6]। 'उद्धरेत् प्रथमं रेफम्' इत्यादिचतुःशतीशास्त्रोद्धृताः। स्वस्वबीजानुसारतः क्रमात् स्वस्ववर्गान्ते स्वस्वबीजमुच्चार्य पूजयेदित्यर्थः। ननु चतुर्दशकोणादि[7]पूर्वचक्रेषु देवतानां भूतलिपिमातृका[8]वर्णस्वरनवकहादिपञ्चकटतकचवर्गमयत्वमुक्तम्, अष्टकोणादि[9]देवतानां किमिति [ [10]शिष्टपवर्गशषसमयत्वोक्तमिति चेत्, सत्यम्, अष्टकोणदेवताबीजमनुक्तमप्यवगन्तव्यम्।

"बीजरूपस्वरकलास्पृष्टवर्गानुसारतः।"

---

१. श्रुत्युक्त्या–ख०। २. तद्रूपेण एता इ–ख०। ३. देवि–क०। ४ कंसान्तर्गतस्थले बीजरूपा आदिस्वरा अकारादिविसर्गान्तषोडशस्वरकलाः–ख०। ५. अवर्गेण युताः–ख०। ६. शास्त्रोक्ताः स्वस्ववर्गान्त उद्धरे–क०। ७. पूर्व–क० नास्ति। ८. वर्ण–ख० नास्ति। ९. कोणाधिदेव–ख०। १०. कंसान्तर्गतस्थले ,शिष्टवर्गशषसमयत्वम् अष्टकोणादिदेवतानामनुक्तमप्यवगन्तव्यम्–ख०।

इति तु वशिन्यादिदेवतापूजामन्त्रकथनम् । रहस्ययोगिन्यः[1] सूक्ष्म- दी०
मन्त्ररहस्यं पुर्यष्टकं तेन सह योगः सम्बन्धः कार्यकारणलक्षणो यासां ता वशिन्याद्या योगिन्यः, [ [2]सूक्ष्मतया दुर्लक्ष्यपुर्यष्टकमयत्वाद् गोपनीयाः । संसारदलनोज्ज्वले अनित्याशुचिक्लेशरूपभेदः संसारस्तस्य दलने हरणे उज्ज्वले परप्रकाशतावन्मात्रे । अत एव सर्वरोगहरे चक्रे सर्व ] एवानित्याशुचिक्लेशरूपसंसारो रोगस्तस्य हरणे[3] प्रभावशालिनि सप्तमचक्रे संस्थिता[4] वशिन्याद्याः ।

"अवर्गः प्रथमो देवि ! वशिनी तत्र संस्थिता"

इति चतुःशतीशास्त्रोक्ताः, पूजयेदित्यनुषङ्गः ।

तासां ध्यानमाह—रक्तवर्णा इति । सिद्धः परम[5]शिवस्तेन[6] संयोगः सम्बन्धः पुर्यष्टकात्म[7]कतया तस्य जीवत्वा[8]पादनलक्षणस्तद्वतीः[9] । शिष्टं स्पष्टम् ॥ १५१–१५७ ॥

शुद्धविद्येति ।

"अहन्तेदन्तयोरैक्यमिति[10] विद्या निगद्यते"

इति परापञ्चाशिकोक्तरीत्या शिवाद्वैतप्रथालक्षणायाः शुद्धविद्याया विशुद्धिः । "ज्ञानेन [11]ज्ञेयमालोक्य पश्चाज्ज्ञानं परित्यजेत्" इति[12] प्रतिपादितरीत्या ज्ञातृज्ञानज्ञेय[13]विभागशून्यनिर्विकल्पबोधलक्षण-परम[14]शिवसमावेशस्तद्रूपिणी, अत एव भुक्तिसिद्धिम् ।

"विश्वं शिवादिभूम्यन्तं चमत्काररसाश्रयम्"

[15]इत्यभियुक्तवचनोक्तरीत्या महाभुक्तिर्विश्वविषयिणी स्वसाधकस्य सिद्ध्यति । तां चक्रेश्वरीं सप्तमचक्रेश्वरीं त्रिपुरासिद्धां मातृमान-मेयरूपाणां त्रिपुराणाम्[16] उत्तीर्ण[17]परमशिवलक्षणां[18] सिद्धिं बिन्दु-तर्पणैरनामाङ्गुष्ठयोगलक्षण[19]शिवशक्तिमेलनमुद्रया द्रव्यबिन्दुतर्पणैः साक्षतकुसुमैः पूजयेदिति ॥ १५८ ॥

---

१. योगिनीः–ख० । २. कंसान्तर्गतस्थले 'अत एव सर्व' इयानेव ग्रन्थ–ख० । ३. हरणे पटु प्र–ख० । ४. संस्थितवशिन्याद्याः–क० । ५. परशिवः–क० । ६. तेन योगः–ख० । ७. कात्मतया–ख० । ८. जीवतापा–ख० । ९. तद्वतीम्–क० । १०. मति विद्या–क० । ११. ज्ञानमा–ख० । १२. इति वचनप्रति–ख० । १३. ज्ञेय–ख० नास्ति । १४. परशिव–ख० । १५. इत्यभियुक्तोक्त्या–ख० । १६. त्रिपुराणां सिद्धिमुक्ती–ख० । १७. परम–ख० नास्ति । १८ शिवलक्षणां–ख० नास्ति । १९. लक्षणया–ख० ।

(से०) सप्तमावरणवासनामाह—(निरुद्धेत्यादि)। प्राणापानयोर्निरोधेनान्यतरस्मिन्नन्यतरस्य संघट्टः, "अपाने जुह्वति प्राणं प्राणेऽपानं तथा परे" इति गीतावचने प्रसिद्धेः। तेन स्फुरितौ कार्योन्मुखतयोच्छूनौ ग्रन्थी ऊर्ध्वाधःस्थितग्रन्थिद्वयं यस्य तादृशान्मूलाधारचक्रादुत्पन्ना इति शेषः। हृदयान्तरे संवित्तिर्ज्ञानं यस्य तत्। मनसैव ज्ञेयं न तु चक्षुरादिबाह्येन्द्रियगम्यमिति यावत्। अत एव शून्यमिव सूक्ष्मतममित्यर्थः। ईदृशं पुर्यष्टकम्—

कर्मेन्द्रियाणि खलु पञ्च तथा पराणि
बुद्धीन्द्रियाणि मन आदि चतुष्टयं च।
प्राणादिपञ्चकमथो वियदादिकञ्च
कामश्च कर्म च तमः पुनरष्टमीयुः॥

इति श्लोके परिगणितस्थूलपुर्यष्टकसमानजातीयम्। तदात्मना स्वरूपेणोपलक्षिताः। बीजरूपा बिन्दुविश्लिष्टाः स्वरकला अकारादिस्वरषोडशकम्। [ताभिः] स्पृष्टाश्च ते वर्गाश्च कचटतपयसाख्याः। एवमष्टानां सबिन्दुकानां वर्गाणामनुसारतस्त(द)नन्तरोच्चारिताः। सूक्ष्मत्वादेव रहस्ययोगिनीपदवाच्या वशिन्याद्याः संसारात्मकरोगहारके चक्रे संस्थिताः। ईश्वरीं रोगहरणसमर्थां चक्रेश्वरीम्। अहन्तेदन्तयोरैक्यबुद्धिः शुद्धविद्या, तस्या अपि विशुद्धिश्चिन्मात्रे विलापनरूपा, यया तां भुक्तिसिद्धिं चकारात् खेचरीमुद्रां च पूजयेत्। वीरवन्दित इति सप्तमी वा सम्बुद्धिर्वा। स्पष्टमन्यत्॥ १६०–१६४॥

**शक्तित्रयात्मिका देवि चिद्धामप्रसराः[1] पराः।**
**संवर्ताग्निकलारूपाः परमातिरहस्यकाः॥१५९॥**
**पूर्णापूर्णस्वरूपायाः सिद्धेर्हेतुः[2] सुरेश्वरि।**
**सर्वसिद्धिमयाख्ये तु चक्रे त्वायुधभूषिताः[3]॥१६०॥**
**स्थिताः कामेश्वरीपूर्वाश्चतस्रः पीठदेवताः।**
**[4]आयुधास्त्वतिरक्ताभाः स्वायुधोज्ज्वलमस्तकाः॥१६१॥**

---

१. प्रसराः शिवाः—ख०से०। २. हेतुमयेश्वरि ?—क०। ३. भूषिते—ख०से०। ४. आयुधा अपि—ख० से०।

वरदाभयहस्ताश्च पूज्या [1]व्रतफलप्रदाः ।
त्वदीयाश्च मदीयाश्च पुंस्त्रीवश्यविधायिनः ॥१६२॥
त्वगसृङ्मांसमेदोऽस्थि[2]शुक्लानां च महेश्वरि ।
द्वितीयस्वरसंयुक्ता एते बाणास्त्वदीयकाः ॥१६३॥
वामादीनां पुराणां तु जननी त्रिपुराम्बिका ।
परस्वातन्त्र्यरूपत्वादिच्छासिद्धिर्महेश्वरि ॥१६४॥
एताः सर्वोपचारेण पूजयेत्तु वरानने ।

(दी०) अष्टमचक्रपूजां सवासनामाह–शक्तित्रयात्मिका इति । शक्तित्रयात्मिका इच्छाज्ञानक्रियात्मिकाः । [3]चिद्धामप्रसराः [4]चिदः संविदः अम्बिकाख्याया[5] धाम्नां किरणानां अंशानां वामाज्येष्ठारौद्र्यात्मिकानाम् [6]ओड्डीशपष्ठीश[7]मित्रेशाख्यानां प्रसराः स्पन्दभूताः, [[8]सर्वावरणप्रधानभूतत्वात् ] । संवर्ताग्निकलारूपाः संवर्ताग्निः विश्वघस्मरः [9]परमशिवस्तस्य कला हकारस्तद्रूपास्तदात्मिकाः शान्ताशक्त्यवयवभूतत्वात् । परमातिरहस्यकाः परमाः सर्वावरणदेवताभ्यो[10]ऽतिरहस्यका मनोबुद्ध्यहङ्काररूपोपाधित्रय[11]स्फुरत्परचिदाधाररूपत्वादत्यन्तगोपनीयाः । पूर्णापूर्णस्वरूपायाः पूर्णा[12] परशिवसमावेशरूपत्वात्, [[13]पूर्णस्वरूपा विश्वविषयत्वात्तादृशायाः सिद्धेरुभयात्मिकायाः ] सर्वस्य क्षित्यादिशिवान्तस्य [14]परशिवविश्रान्तिलक्षणायाः सिद्धेर्जीवन्मुक्ति[15]हेतुतया । सर्वसिद्धिमयाख्ये निरुक्तसर्वसिद्धिमय[16]नाम्नि । आयुधभूषिताः[17] कामेश्वरीकामेश्वरयो[18]रायुधैः ।

---

१. ध्यातृफ–ख० से० । २. मेदोऽस्थिमज्जार्णान्ताः सुरेश्वरि–ख० से० । ३. विद्धाम–ख० । ४. विदः–ख० । ५. अम्बिकाख्यादिधाम्नां–ख० । ६. उड्डीश–ख० । ७. मित्रोश–ख० । ८. कंसान्तर्गतं–ख० नास्ति । ९. परशिवोऽस्वरस्तस्य–ख० । १०. देवताभ्यः सर्वाभरणप्रधानरूपत्वाद् अतिर–ख० । ११. परिस्फुरत्प–ख० । १२. पूर्णपरशिव–ख० । १३. कंसान्तर्गतस्थले 'पूर्णस्वरूपायाः पूर्णत्वं मनुविश्वविषया सिद्धिस्तादृश्याः सिद्धेर्हेतुस्तदात्मिकायाः'–ख० । १४. परमशिव–ख० । १५. मुक्तेर्हेतु–ख० । १६. सर्वसिद्धिमयानन्दे–ख० । १७. भूषिते–ख० । १८. आयुधैः–ख० नास्ति ।

दी० शरचापपाशाङ्कुशैरष्टभिर्मिथुनीकृतैः ।
पश्चिमोत्तरपौरस्त्यदक्षिणाशाक्रमेण तु ॥

इत्यादिचतुःशतीशास्त्रोक्तरीत्याऽलङ्कृताश्च[1] । आयुधानां [[2]कामेश्वरकामेश्वर्योश्चरणान्तःपातित्वं सिद्धम् ] । चक्रेऽष्टमे स्थिताः कामेश्वरीपूर्वाः 'कामेश्वरीमग्रकोणे' इति[3] चतुःशतीशास्त्रो[4]क्तरीत्या चतस्रः पीठदेवताः पीठानि 'कापूजाद्यो इति क्रमात्' इति पूर्वोक्तानि मनोबुद्धयहङ्कारचित्तलक्षणानि तेषु सङ्क्रान्ता देवताः परप्रकाशावयवभूतनामाज्येष्ठारौद्रयम्बिकामयमित्रेश[5]षष्ठीश[6]ओड्डीश चर्यानाथशिवा[7]ङ्कस्थास्तद्विमर्शशक्त्यंशभूतेच्छाज्ञानक्रियाशान्तामयकामेश्वरीवज्रेश्वरीभगमालिनी[8]श्रीमहात्रिपुरसुन्दर्यश्चतस्र इति, नवमचक्रदेवतया[9] सह सङ्कलनात् । अष्टमचक्रे तु तिस्र एव कामेश्वर्याद्याः सायुधाः ।

आयुधदेवतानां ध्यानमाह—आयुधा इति । आयुधा आयुध[10]देवताः, छान्दसत्वात्पुल्लिङ्ग[11]प्रयोगः । स्वायुधोज्ज्वलमस्तकाः स्वाधिष्ठिताऽऽयुधपरिकलित[12]मस्तकाः[13] ।

महापद्मवनान्तस्थां कारणानन्दविग्रहाम् ।
मदङ्कोपाश्रयां देवीमिच्छाकामफलप्रदाम् ॥
भवतीम्—

इति पूर्वोक्तरीत्या महापद्मवनान्तस्थानाश्रितेश्वरस्य विश्वगुरोर्ममाङ्कस्थाया अनाश्रितकलायास्तव सम्बन्धिनो बाणधनुःपाशाङ्कुशाः पुंवश्यविधायिनः, तादृशस्य[14] मम सम्बन्धिनो बाणधनुःपाशाङ्कुशाः स्त्रीवश्यविधायिन इत्यर्थः । तदुक्तं [15]चतुःशतीशास्त्रे—

मादनैर्मदनो भूत्वा पाशाङ्कुशधनुःशरैः ।
क्षोभयेत् स्वर्गभूलोकपातालतलयोषितः ॥

---

१. अलङ्कृते आ–ख० । २. कंसान्तर्गतस्थाने 'कामेश्वर्याश्चरणान्तःपातित्वं सिद्धम्'–ख० । ३. इत्यादि चतु–ख० । ४. शास्त्रोक्ताश्चतस्रः–ख० । ५. मित्रीश–ख० । ६. वोड्डीश–ख० । ७. वाङ्कस्थास्तद्द्वितयशक्त्यवयभू–ख० । ८. श्री–ख० नास्ति । ९. देवतायाः–क० । १०. आयुधाधिदे–ख० । ११. पुल्लिङ्गाः खा–क० । १२, परिकल्पित–ख० । १३. 'मस्तकाः' इत्यस्याग्रे 'शिरसः' इत्यधिकम्–क० । १४. तादृशश्च–ख० । १५. चतुःशति–क० ।

तथैव शाक्तैर्देवेशि ! त्रिपुरीकृतविग्रहः । टी०
क्षोभयेद् देवगन्धर्वसिद्धविद्याधरानपि ॥ इति ।

[1]स्पष्टम् ॥ १५९-१६२ ॥

[2]चतुःशतीशास्त्रेऽनुद्धृतत्वाच्छक्तिबाणात्मबीजान्युद्धरति—त्वगसृगिति । श्रीकण्ठादिन्यासपरिपाट्या त्वगादीनां पञ्चानां धातूनां ये वर्णाः पञ्च, एते द्वितीयस्वरसंयुक्ताः बाणाः । आकारो द्वितीयः स्वरः, सामर्थ्याद् बिन्दुरपि [3]लभ्यते । त्वदीयकाः [[4]बाणास्त्वत्सम्बन्धिबाणबीजानि]। तत्र यकारस्त्वगात्मकः, रेफोऽसृगात्मकः, लकारो मांसात्मकः, वकारो मेदस्वरूपः [ [5]अस्थिशब्दोपरिस्थितेन शुक्रात्मकेन स्वकारेणान्वेति ]। [6]चतुःशत्यामप्यनुद्धृतानां कामेश्वरबाणबीजानाम् ।

आदौ पादावरेण्याख्यां [7]संयुजेन्नलरक्रये ।

इति स्वच्छन्दसङ्ग्रहोद्धृतत्वादागमान्तरेषु प्रसिद्धत्वान्नात्रोद्धारः क्रियते ॥ १६३ ॥

वामादीनामिति । वामादीनां वामाज्येष्ठारौद्र्याख्यानां [8]मित्रेशादिरूपाणामिच्छाज्ञानक्रिया[9]त्मकविमर्शशक्त्यंशकामेश्वर्याद्यधिष्ठितत्वात्[10] पुर[11]शब्दवाच्यत्वम्, तेषां त्रिपुराणां जननी समष्टिरूपत्वादम्बिकाशक्तिरेव[12] त्रिपुराम्बिका निरुक्ता चक्रेश्वरीति[13] शेषः ।

स्वेच्छयैव जगत्सर्वं निगिरत्युद्गिरत्यपि ।

इत्याज्ञावतारोक्तरीत्या [14]परशिवस्य विश्वसर्जनसंहारलक्षणस्वातन्त्र्यलक्षणेच्छा[15]सिद्धि[16]रेतच्चक्रार्चकस्य सिद्ध्यति । अतः[17] सेयमिच्छासिद्धिः[18] अस्मिन् चक्रे स्थितेत्यर्थः । एता आयुधदेवताः कामेश्वर्याद्याश्चक्रेश्वरीसिद्धियुताः सर्वोपचारैर्गन्धादिभिरुपचारैः पूजयेत् ॥

१. स्पष्टमन्यत्–ख० । २. पूर्वं चतुःशतीशास्त्रेऽनुद्धृतत्वाच्छक्ति–ख० । ३. लक्ष्यते–ख० । ४. कंसान्तर्गतस्थले 'तव धनुषि बाणबीजानि'–ख० । ५. कंसान्तर्गतस्थले 'अस्थिमज्जार्णान्तशब्दोऽस्थिमज्जार्णोपरिस्थितं शुक्रात्मकं लक्षयति–ख० । ६. चतुःशतीशास्त्रेऽप्यनुक्तानां–ख० । ७. रक्तयोर्नीलरक्तयोरित्यादिना स्वच्छ–ख० । ८. मित्रीशा–ख० । ९. मय–ख० । १०. धिष्ठानत्वात्–ख० । ११. पुत्र–क० । १२. शक्तेरेतत्त्रिपु–ख० । १३. चक्रेशीति–ख० । १४. परस्य शिवस्य–ख० । १५ शक्ति–ख० । १६. रेतदर्चकस्य–ख० । १७. अतः–ख० नास्ति । १८. शक्तिः–ख० ।

(से०)अष्टमावरणवासनामाह—शान्तीत्यादि। त्रिकोणवासनावसरे तिस्रस्तिस्रः शक्तयो या वर्णितास्तदात्मकाः कामेश्वर्यादयस्तिस्रो देवताश्चैतन्यमरीचिप्रसररूपत्वादेव परमा उत्कृष्टाश्च ता अतिरहस्यरूपाश्च, संवर्तः प्रलयः कल्पस्तत्कालिकाग्निज्वालातुलया ध्यातव्याः। पूर्णपूर्णेति वीप्सयात्यन्तपूर्णोच्यते। तादृशी सिद्धिर्जीवन्मुक्तिस्तां प्रति तिस्रः समुदिता हेतुः। अत एव तदाधारचक्रस्य सर्वसिद्धिप्रदसंज्ञा। आयुधानां पार्थक्येनावरणान्तरत्वशङ्कामपाकुर्वन्नाह—आयुधेति। पीठेति। कामरूपपूर्णगिरिजालन्धरपीठाधिष्ठात्र्य इत्यर्थः। "अष्टाचक्रा नवद्वारा" इति श्रुतौ बिन्दुचक्रस्य त्रिकोणचक्र एवान्तर्भावमभिप्रेत्य चक्राष्टकत्वकथनमिति ध्वननाय प्रधानदेवतया सह चतस्र इत्युक्तम्। तिस्र इत्येव तु तदर्थ इति तु प्राञ्चः। आयुधा अपीत्यत्र वा चतस्र इत्यस्यान्वयः। आयुधशक्तयश्चतस्रोऽपि स्वस्वायुधं हस्ताभ्यां शिरसि धृत्वा स्थिताः। आयुधशब्दादाचारार्थे "क्विबन्तादप्रत्ययात्" इति सूत्रेणाकारः प्रत्ययस्ततष्टाप्। पुंलिङ्गश्छान्दसोऽयं शब्द इति तु प्राञ्चः। वस्तुतस्तु अष्टमावरणेऽपि ओड्यानपीठाधिष्ठात्री प्रधानदेवतापि पूजनीयेति द्योतनाय चतस्रः पीठदेवता इत्युक्तम्। तथा च कल्पसूत्रम्—"त्रिकोणे वाक्कामशक्तिसमस्तपूर्वाः कामेश्वरीवज्रेश्वरीभगमालिनीमहादेव्यो बिन्दौ चतुर्थी तिसृणामासामभेदाथ मूलदेव्याः पूजा कामेश्वर्यादिचतुर्थी नित्यानां षोडशी योगिनीचक्रदेवीनां नवमी बिन्दुचक्रस्था चेत्येकैव, न तत्र मन्त्रदेवताभेदः कार्यस्तन्महादेव्या एव चतुर्षु स्थानेषु विशेषार्चनमावर्तते" इति। त्वदीयाः पुंवश्यं मदीयाः स्त्रीवश्यं विदधते। स्त्रीशब्दस्य पूर्वमप्रयोगादेव न समासान्तप्रत्ययः। देवीबाणबीजान्युद्धरति—त्वगिति। त्वग् यकारः, यकाराधिकारे "त्वग्वाली व्यापको वायुः" इति कोशात्। असृग् रेफः, "रो रक्तः क्रोधनो रेफः" इति कोशात्। मांसं लकारः, तदधिकारे "पिनाकी मांससंज्ञकः" इति कोशात्। मेदो वकारः, "वो मेदो वरुणः सूक्ष्मः" इति कोशात्। अस्थिमज्जार्णवो(यो)रन्तश्चरमः शुक्रवर्णः सकारः पञ्चम इत्यर्थः, शषसाधिकारेषु सौख्यनामा कुमारोऽस्थि, सुश्रीरूष्मा वृषो मज्जा, दक्षपादो भृगुः शुक्रमिति कोशेभ्यः। द्वितीयस्वरस्त्रिपुराचक्रेश्वरीमन्त्रे द्वितीयो वर्णः। मातृकाक्रमे चेद् बिन्दुसंयुक्ता इति शेषः। आयुधान्तरबीजोद्धारस्तु चतुर्थपटल एव कृतः। वामाज्येष्ठारौद्र्य एव पुरत्रयं तदम्बिका चक्रेश्वरी। अत्यन्तं स्वातन्त्र्यमेवेच्छासिद्धिः। तुशब्दाद् बीजमुद्रापि ॥ १६५–१७० ॥

सर्वानन्दमये देवि परब्रह्मात्मके परे ॥१६५॥
चक्रे संवित्तिरूपा च महात्रिपुरसुन्दरी ।
स्वैराचारेण सम्पूज्या त्वहन्तेदन्तयोः समा ॥१६६॥
महाकामकलारूपा पीठविद्यादिसिद्धिदा ।
महामुद्रामयी देवी पूज्या पञ्चदशात्मिका ॥१६७॥
तत्तत्तिथिमयी[1] नित्या नवमी भैरवी परा ।
प्रतिचक्रं स[2]मुद्रास्तु चक्रसङ्केत[3]चोदिताः ॥१६८॥

(दी०) नवमचक्रे[4] पूजां सवासनामाह—सर्वानन्दमये इति। "आनन्दो ब्रह्मेति व्यजानात्" इति[5], "एतस्यैवानन्दस्याऽन्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुत्युक्तरीत्या[6] सर्वानन्दसमष्टिभूतपरमानन्दमयत्वात् परब्रह्मात्मके। अत एव[7] परे विश्वोत्तीर्णे [8]परमशिवस्पन्दमयत्वाच्चक्रे नवमे संवित्तिरूपा।

स्वसंवित्तिस्त्रिपुरा देवी लौहित्यं तद्विमर्शनम् ।

इत्यभियुक्त[9]वचनोक्तरीत्या वेदकवेद्ययोरहन्तेदन्तयोः समा मध्यस्था संवित्तिर्महात्रिपुरसुन्दरी पूर्वोक्त[10]निर्वचना। महाकामकलारूपा [11]प्रकाशविमर्शसामरस्यमहाबिन्दुत्रयहार्धकला [12]महाकामकला तद्रूपा। "बिन्दुं सङ्कल्प्य [13]वक्त्रे च" इत्यादिचतुःशतीशास्त्रोक्तरीत्या निजेच्छारूपैरिन्द्रियप्राणनैर्द्रव्यैः परिस्फुरत्परमानुसन्धानलक्षणेन स्वैराचारेण संविद्देवता भावनीयेत्यर्थः।

प्राप्तिसिद्धिमाह—पीठविद्येति । "कापूजाश्रो इति क्रमात्" इति पूर्वोक्ताः पीठाश्चत्वारः । विद्या वाग्भवकामराजशक्ति[14]तुरीयबीजा-

---

१. सम्पूज्या परमेशानि तत्तत्तिथिमयी परा—ख० । २. तु—ख० । ३. कोदिताः—क० । ४. नवमचक्रपूजां—ख० । ५. इति—क० नास्ति । ६. श्रुत्युक्त्या—ख० । ७. अत एव—क० नास्ति । ८. परशिवानन्दमय—ख० । ९. अभियुक्तोक्त—ख० । १०. पूर्वोक्ता निर्वचना—क० । ११. व्याससमासमयवि—क० । १२. महाकामकला—क० नास्ति । १३. वक्त्रे च—क० नास्ति । १४. तुर्य—ख० ।

दी० त्मिकाः। आदिशब्दाद्देवताः कामेश्वर्याद्याश्चतस्रः तेषां [1]तुरीयातीत-पद[2]परशिवविश्रान्तिलक्षणां सिद्धिं ददातीति प्रापयतीति प्राप्तिसिद्धिः। महामुद्रामयी महामुद्रा सर्वविद्यासमष्टिभूतत्वाद्योनिमुद्रा तन्मयी पूज्येत्यर्थः। पञ्चदशात्मिका पञ्चदशाक्षर्या विद्याया वाच्यभूता पञ्चदश-भूतगुणात्मिका ॥ १६४–१६७ ॥

तत्तत्तिथिमयीति। तत्तत्तिथिमयी प्रतिपदादिपञ्चदशतिथि-रूपा। नित्या निजसुखमयनित्यनिरुपमाकारा। 'नवमी भैरवी परा मूलविद्या तथा ख्याता" इति पूर्वोक्तरीत्या मूलविद्या[3]रूपनवमचक्रे-श्वरी विद्या षोडशकलात्मिका मूलदेवी नवमचक्रेश्वरी [4]पूज्येत्यर्थः।

प्रतिचक्रमिति। प्रतिचक्रं त्रैलोक्यमोहनादिष्वेकस्मिन् चक्रे। चक्रसङ्केते[5] चोदिता [6]योनिमुद्रास्तत्तच्चक्रेषु पूज्या इति योज्यम् ॥१६८॥

(से०) नवमावरणवासनामाह—(सर्वेत्यादि)। सर्वानन्दमयनामकं बिन्दुचक्रं परब्रह्मरूपमेव। तत्र सा परापररहस्ययोगिन्यपि संवित्तिरूपैव, परन्तु न वृत्त्यात्मकज्ञानरूपा, किन्तु सर्ववृत्तिष्वनुगता वृत्तेर्वृत्तिप्रागभावस्य वृत्तिध्वंसस्य च साक्षिणी वृत्त्योः सन्धौ चानुभूयमानेति ध्वनयन्नाह अहन्तेति। वेदकविषयिणी वृत्तिरहन्ता। वेद्यविषयिणी त्विदन्ता,

यज्ज्ञानमहमो ज्ञानं यज्ज्ञानमिदमस्तथा।
तयोरपि च यज्ज्ञानं [तज्ज्ञानं] विद्धि मे वपुः ॥

इति परशिवोक्तेः। स्वैराचारेण कर्मकाण्डोक्तनिर्बन्धनिर्मुक्तेनाचारेण, परशिवनिष्ठमहास्वातन्त्र्यानुभवेन चेत्यर्थः, "अगणनं कस्यापि" इति कल्पसूत्रात्। महाकामकलारूपत्वं तु प्रागुक्तम्। पीठविद्यादिसिद्धिः प्राप्तिसिद्धिः, कामरूपादिपीठाधिपत्यवाग्भवादिविद्यादिर(धिप)त्यकामेश्वर्यादिदेवतात्मकत्वप्राप्तिरूपत्वात्। महामुद्रा योनिमुद्रा। कुलार्णवे पराप्रासादप्रकरणस्थे "वनमालां नभोमुद्रां महामुद्रामनुक्रमात्" इति वचने महामुद्रापदस्यान्तःप्रवेशिताङ्गुष्ठसंहता-

१. तुर्याती–ख०। २. पद–क० नास्ति। ३. मूलविद्यामुच्चार्य नवमचक्रेश्वरीविद्यया षोड–ख०। ४. सम्पूज्येत्यर्थः–ख०। ५. सङ्केतकोदिताः–क०। ६. 'योनिमुद्राः' इत्यत्र 'योनिप्राचुर्यतः सैषा सर्वसंक्षोभिका पुनः' इत्यादिना चक्रसङ्केते चक्रे विहिताः सर्वमुद्राः सर्वसंक्षोभिण्याद्याः–ख०।

ञ्जलिपरत्वेन सांप्रदायिकैर्व्याख्यानेऽप्यत्र प्राचीनैर्योनिमुद्रापरत्वेन व्याख्यानात्। से०
पञ्चदशात्मिका अक्षरपञ्चदशात्मिका कामेश्वर्यादितिथिनित्यारूपा वा। जायते वर्धत इत्यादिकागामिदशापञ्चकरूपा वा। अस्तीति दशायाः स्वाभाविकत्वादनुक्तिः। तत्तत्तिथिमयी प्रतिपदादितिथिस्वरूपा। नित्या सादनामककलारूपा। अनवमीति छेदेन सर्वोत्तमा। नवमीति छेदेन नवचक्रेश्वरीणां मध्ये चरमा। भैरवी सर्वेषामपि भयङ्करी, "भीषाऽस्माद्वातः पवते" इत्यादिश्रुतेः। परापश्यन्त्यादित्रयातीता। पूज्येत्यन्वयः। नवसु चक्रेषु पूजनीयत्वेनोक्तानां मुद्रादेवीनां वासनास्तु चक्रसङ्केत एव कथिता इत्यर्थः॥ १७१-१७४॥

**नित्यक्लिन्नादिकाश्चैव काम्यकर्मानुसारतः।**
**चतुरस्रान्तराले वा त्रिकोणे वा यजेत् सुधीः॥१६९॥**

(दी०) नित्यक्लिन्नेति। कामेश्वरीभगमालिन्योरावरणान्तःपातित्वात्तयोर्मध्ये त्रिकोणाग्रवामकोणयोः स्थितिरुक्ता। शिष्टाः—

नित्यक्लिन्ना तथा नित्या भेरुण्डा वह्निवासिनी।
महाविद्येश्वरी दूती त्वरिता कुलसुन्दरी॥
नित्या नीलपताका च विजया सर्वमङ्गला।
ज्वालामालिनी चित्रा च—

इति चतुःशतीशास्त्रोक्तास्त्रयोदश नित्यास्त्रिकोणे वा श्रीचक्रमध्यत्रिकोणे वा चतुरस्रान्तराले वा षोडशदलचतुरस्रान्तराले वा। काम्यकर्मानुसारतो वश्यादिकाम्यकर्मानुरूपवर्णध्यानपुष्पादिभिः। सुधीस्तत्तत्काम्यकर्म[1]विधानविषयज्ञो यजेत्[2]॥ १६९॥

(से०) (नित्येत्यादि)। नित्याक्लिन्ना तृतीया तिथिनित्या। आदिना भेरुण्डादिपरिग्रहः। चकारात् कामेश्वरीभगमालिनीवज्रेश्वरीणाम्, तासामेव त्रिकोणे पूजाप्रकरणे निर्दिष्टत्वात्। ततश्च या तिथिनित्यापूजा पूर्वमुक्ता तस्या यथा प्रधानदेवतायाः प्राथमिकपूजोत्तरमवसरस्तथा द्वितीयवारपूजोत्तरं कालोऽपि वैकल्पिक इति द्योतनायेह पुनस्तत्कीर्तनम। करशुद्धिं पुनश्चैवेत्यादाविव पुनरादिशब्दाभावात्तु न द्विः पूजनं नित्यानां तत्तद्द्विःपाठस्य क्रमद्वैविध्यार्थकत्वेनोपक्षीणत्वाद् अनन्यपरपुनःश्रवणरूपाभ्यासस्याभावान्न कर्मभेदः। प्राञ्चस्तु—कामेश्वरीभगमालिन्योः पूर्वं पूजितत्वादवशिष्टानां त्रयोदशनित्यानामेवेदं पार्थ-

---

१. कर्मानुविधान—ख०। २. जयेत्—ख० नास्ति।

से० क्येन पूजान्तरमित्याहुः। तन्न, वज्रेश्वर्या अपि पूजितत्वेन द्वादशानामेव पूजापत्तेः, कामेश्वर्यादित्रयस्य नामैक्येऽपि मन्त्रभेदेन देवताभेदस्यावश्यम्भावाच्च। तृतीयचक्रेश्वर्यास्त्रिपुरसुन्दरीनामधेयकत्वेऽपि मन्त्रवैलक्षण्येन मूलदेवताया भेदस्यैव सिद्धान्तसिद्धत्वात्। अत एव कल्पसूत्रे–"तन्महादेव्या एव चतुर्षु स्थानेषु विशेषार्चनमावर्तते" इत्युक्तं न पञ्चस्विति। न च तिथिनित्यात्मककामेश्वर्यादीनां तन्त्रभेदेन मन्त्रभेददर्शनेऽपि कथं न भेद इति वाच्यम्, अवैकल्पिकमन्त्रभेदस्यैव देवताभेदव्याप्यत्वात्, तयोर्मन्त्रयोः शाखान्तरन्यायेन विकल्पितत्वात्। एतेन कामेश्वर्यादित्रयस्य तिथिनित्यातो ध्यानभेदोऽपि सङ्गच्छते। काम्यकर्मानुसारत इति तु पूर्वमेव व्याख्यातम्। प्राञ्चस्तु—तत्रत्यं काम्यकर्मपदं नित्यकर्मपरत्वेन व्याचक्षाणा इहत्यं तु वश्यादिकामनानुरूपवर्णध्यानपुष्पादिभिरिति व्याचक्षते। तत्र वैषम्यं त एव जानते। चतुरस्रान्तराले चतुरस्ररेखाद्वयमध्यवीथ्याम् "साणिमाद्यष्टकं समात्रष्टकं भवति" इति श्रुतौ प्रथमपटले पूजाप्रकरणे चरमपटले वासनाप्रकरणे च रेखाद्वयपक्षस्यैवाश्रितत्वेन वीथ्यन्तराभावेन विनिगमनाविरहस्यानाशङ्क्यत्वात्, एकरेखापक्षरेखात्रयपक्षयोरप्येकत्र क्लृप्तन्यायेनैकपुरोडाशायां बहुपुरोडाशायामिव चान्तरालनिर्णयस्य सम्भवात्। भूगृहषोडशारयोर्मध्यपरत्वेनान्तरालपदं प्राञ्चो व्याख्यन्। तन्मन्दम्, षोडशारस्यानुपातत्वात्। वस्तुतस्तु—चक्रलेखनार्थपरिगृहीतत्रिहस्तभूमौ बिन्दुप्रभृतिवृत्तत्रयान्तलेखनोत्तरमभितः किञ्चिदूनाधिकैकादशाङ्गुलात्मको भूभागोऽवशिष्यते। तस्मिन्नेकरेखात्मकभूपुरपक्षे सा रेखा परिगृहीतभूमेरन्तभागे लेख्या, अन्यथा तावतः परिग्रहस्य वैयर्थ्यापत्तेः। ततश्चानेकरेखापक्षे रेखे तत्तदन्तरेव लेख्ये संपद्येते न बहिः। अत एव पर्यन्तरेखादिक्रमेणैव प्रथमद्वितीयादिव्यवहारश्चक्रन्यासे सङ्गच्छते। तथा च प्रकृतेऽन्तरालपदेन प्रथमोपस्थितत्वादाद्यरेखान्तर्भागे परामृष्टे सत्येकरेखात्मकभूगृहाभिप्रायेण प्राचां व्याख्यापि साध्व्येवेति ध्येयम्॥ १७५॥

**[1]अलिना पिशितैर्गन्धैर्धूपैराराध्य देवताः।**
**चक्रपूजां विधायेत्थं कुलदीपं निवेदयेत्॥१७०॥**
**अन्तर्बहिर्भासमानं स्वप्रकाशोज्ज्वलं प्रिये।**
**पुष्पाञ्जलिं ततः कृत्वा जपं कुर्यात् समाहितः॥१७१॥**

1. न्धैःपेतैर्लिंगनाशिभधूपै-से०।

(दी०) चक्रपूजामुपसंहरन् कुलदीपनिवेदनमाह—अलिनेति। अलिना हेतुना। [1]पिशितैर्मांसैः। गन्धधूपशब्दाः स्पष्टार्थाः। देवताः त्रैलोक्यमोहनादिबैन्दवान्तनवचक्रगताः। अलिपिशितगन्धधूपदीपैराराध्य पूर्वोक्तरीत्या चक्रपूजां विधाय कुलदीपं कुलं षट्त्रिंशत्तत्त्वसमुदायरूपं शरीरं तत्र भवं[2] दीपम्।

ततो हृदयपद्मान्तः स्फुरन्तीं संविदीं[3] कलाम्।

इत्यभियुक्त[4]वचनोक्तरीत्या हृदयान्तर्भासमानं संवित्कलारूपं दीपम्। [5]इन्द्रियद्वारा बहिरर्थेषु तद्रूपेण भासमानम्[6]। अत एव स्वप्रकाशोज्ज्वलं तत्र प्रमाणनिरपेक्षप्रतीतिकं निर्वाणरहितं [7]तत्कुलदीपं निवेदयेत्। पुनः प्रत्यङ्मुखतया तेनैव द्वारेण अन्तः स्वसंविद्विश्रान्तिस्तन्निवेदनं नाम।

सयम्येन्द्रियसञ्चारं प्रोच्चरेन्नादमान्तरम्।
एष एव जपः प्रोक्तो न तु बाह्यजपो जपः॥

इति प्रामाणिकवचनोक्तरीत्या समाहितो[8] नियतेन्द्रियो नादरूपमन्त्रोच्चारण[9]लक्षणं जपं कुर्यात्। शिष्टं स्पष्टम्॥ १७०-१७१॥

(से०) (न्धैपितैरित्यादि)। षट्सप्ततितमश्लोकस्य प्रथमश्चरणो व्याकुलाक्षरः। तत्रालिः प्रथमः। स्पष्टमन्यत्। शुद्ध्या हेतुं गृहीत्वा प्रथमपटलेऽस्मदुक्तरीत्या तर्पयेदित्यर्थः। अ[त्र] गन्धपदस्य बहुवचनान्तत्वाद् द्रव्यविशेषपरता। स चोपचारे करणत्वात्तृतीयान्तत्वेन निर्दिष्टः। ते[न] च तत्करणोपचारस्यैव निरूढलक्षणयोपस्थित्या तदाद्युत्कर्षविधिः। न चैवं सति नैवेद्यादिभिरर्चयेदित्यावरणप्राक्कालिकविधीनैं( धौ नै )वेद्यान्तपदस्य वैयर्थ्यापत्तिः। तालवृत्तान्तै (?) रित्येव वक्तुमुचितत्वादिति वाच्यम्, वैयर्थ्यापत्त्यैव गन्धाद्युपचाराणामावरणार्चनात् पूर्वपरभेदेन द्विःसमर्पणस्य कल्पनात्। अत एव ज्ञानार्णव आवरणेभ्यः पूर्वं स्मर्यते—"उपचारैः षोडशभिः संपूज्य परदेवताम्" इति। आवरणानन्तरमपि पुनः स्मर्यते—"उपचारैः समभ्यर्च्य गन्धपुष्पाक्षतादिभिः"

---

१. पिशितगन्ध–ख०। २. भवं–ख० नास्ति। ३. संविदम्–ख०। ४. अभियुक्तोक्त–ख०। ५. येन्द्रियद्वारा–क०। ६. भासमानं–ख० नास्ति। ७. च–ख०। ८. समाहितेन्द्रियो–ख०। ९. लक्षणं–ख० नास्ति।

से० इति। धूपैरिति तु पूर्ववदेव धूपाद्युपचाराणां समुच्चितोत्कर्षबोधनार्थम्। तेनावरणोत्तरं गन्धादिकान् वा पुनः समर्पयेद् धूपादिकानेव वेत्यर्थः। तथा चावरणान्ते कल्पसूत्रम्—"पूर्ववद् धूपदीपमुद्रातर्पणनैवेद्यादि दत्त्वा" इति। अत्रादिपदेन ताम्बूलादेश्चतुःषष्टिबहिर्भूतस्य परिग्रहः। चक्रपूजापदवाच्यमेतावदेवेति ध्वनयंस्तदुत्तराङ्गं विधत्ते—चक्रेति। प्रज्वालितकुलद्रव्यात्मको दीपः कुलदीपः। कुलद्रव्यमात्रकरणकत्वस्य समासावगतनैरपेक्षस्य रथन्तरसामेति वेदे (?) उदकाशना इति लोकेऽपि क्लृप्तत्वात्। तद्वासनां विधत्ते—अन्तर्बहिरिति। तथा च मन्त्रलिङ्गम्—

अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभो।
(?) त्रिधा दीपं निवेदयेत्॥ इति।

इत्थमितिपदेन चक्रपूजाप्रकरणसमाप्तिध्वननाज्जपस्य तत्प्रकरणे पाठाभावज्ञापनेन पुष्पाञ्जलिं ततः कृत्वेति तु केवलं कालार्थ एव संयोगो नाङ्गाङ्गिभाव इति ध्वननद्वारा जपस्य प्राधान्यमित्यपि सूचितम्। अत एव जपेतिकर्तव्यतासमाप्तौ फलसंयोगोऽपि स्मर्यते—

एवं चिन्तयमानस्य जपकाले तु पार्वति।
सिद्धयः सकलास्तूर्णं सिध्यन्ति त्वत्प्रसादतः॥ इति।

यत्तु तदनन्तरं पुनरपि पूजाङ्गानां परामर्शो न जपस्य (तत्) सन्दंशान्तःपातेन तदङ्गत्वमप्यस्तीति द्योतनैकफलकम्। तेनार्चनाभावे स्वतन्त्रस्यापि जपस्यार्चनकरणे तदङ्गत्वमिति फलितोऽर्थः। तेन "बहिरन्तस्थमुभयमवेष्टिसववत्" इति शाण्डिल्यसूत्रोक्तन्यायेन जपस्य द्विविधः प्रयोग इति सिद्धम्॥१७६-१७७॥

**कूटत्रये महादेवि कुण्डलीत्रितयेऽपि च।**
**चक्राणां पूर्वपूर्वेषां नादरूपेण याजिताम्[1]॥१७२॥**
**तेषु प्राणाग्निमायार्णकलाबिन्द्वर्धचन्द्रिकाः[2]।**
**रोधिनीनादनादान्ताः [3]शक्तिव्यापिकलान्विताः॥१७३॥**
**समना चोन्मना चेति द्वादशान्ते स्थिताः प्रिये।**
**मूलकुण्डलिनीरूपे मध्यमे च ततः पुनः॥१७४॥**

१. योजनम्-ख० से०। २. चन्द्रकाः-ख० से०। ३. शक्तिव्यापिकयान्विताः-ख० से०।

सृष्ट्युन्मुखे च विश्वस्य स्थितिरूपे महेश्वरि ।
केवलं नादरूपेण उत्तरोत्तरयोजितम्[1] ॥१७५॥
शबलाकारके देवि तृतीये द्वादशी कला ।

(दी०) जपप्रकारमाह—कूटत्रये इति । कूटत्रये कूटानां वाग्भवकामराजशक्तिबीजाख्यानां त्रये कुण्डलीत्रितयेऽपि च । कुण्डलीनां त्रितयम् ।

आधारं हृदयं बिन्दुस्थानं च परिकीर्तितम् ।

इति स्वच्छन्दसङ्ग्रहोक्तेषु[2] आधारहृदयभ्रूमध्येषु स्थितानां बीजत्रयशिखर[3]चरवर्तिकामकलान्तर्गतसपरार्धकलारूपाणां वह्निसूर्यसोमकुण्डलिनीनां[4] त्रये चक्राणां पूर्वपूर्वाणाम्[5] "अकुले त्रिपुरसंज्ञे च" इत्यत्रोक्ताऽकुलादिबिन्द्वन्तस्थानेषु नवसु स्थितानां त्रैलोक्यमोहनादिनवचक्राणामेकैकस्मिन् बीजे[6] कुण्डलिन्यां च त्रिशस्त्रिशो विभज्य योजितानां नादरूपेण [7]योजितं त्रैलोक्यमोहनादि[8]चक्रत्रयस्याधारस्थवह्निकुण्ड[9]लीस्थितवाग्भवशिखरवर्तिकामकलान्तर्गतहार्धकलारूपवह्निकुण्डलिन्युत्थानोदित[10]हृद्गतकामराजबीजपर्यन्तव्यापिनादमयताभावनं वाग्भवबीजजपः । सर्वसौभाग्यदायकादिचक्रस्य हृदयस्थसूर्यमण्डलस्थितकामराजशिखरवर्त्तिकामकलान्तर्गतहार्धकलारूपसूर्यकुण्डलिन्युत्थानोदितबिन्दुस्थानगतशक्तिबीजपर्यन्तव्यापिनादमयताभावनं कामराजजपः । सर्वरोगहरादिचक्रत्रयस्य [11]बिन्दुमण्डलान्तर्गतशक्तिबीजशिखरवर्तिहार्धकलारूपसोमकुण्डलिन्युत्थानोदितब्रह्मरन्ध्रावधि [illegible] स्थानीलग्नसमनासीमपर्यन्तव्यापिनादेन सहोन्मन्यां लयभावनं शक्तिबीज[12]जप इत्यर्थः । तदुक्तमभियुक्तैः—

पिण्डो [13]वाचकविस्तरस्य महतः [14]संस्कारशेषस्थिति-
र्नादोऽसौ तव देवि ! मूर्ध्नि समनासीमानमुल्लङ्घयन् ।

---

१. योजनम्—ख० से० । २. स्वच्छन्दसंग्रहोक्तरीत्या—क० । ३. चर—ख० नास्ति । ४. कुण्डलीनां—ख० । ५. पूर्वपूर्वेषां—ख० । ६. बीजे—क० नास्ति । ७. योजनं—ख० । ८. नवचक्रस्थादि—ख० । ९. मण्डल—ख० । १०. हृत्स्थ—ख० । ११. बिन्दुस्थानेन्दुमण्डलान्तः—ख० । १२. शक्तिबीजोच्चारः—ख० । १३. वाक्पद—ख० । १४. संस्कारदोषा स्थितिः—ख० ।

दी० घण्टाकाण इव क्रमेण विरमन्नन्त्यामणीयस्तमा[1]-
[2]माजिघ्रन् परचिद्दशामनुपमां मूर्तिं [3]पुराणीमुमे ! ॥
इत्यत्रैवोक्तम् ॥ १७२ ॥

ननु–

दीपाकारोऽर्धमात्रश्च ललाटे [4]वृत्तमिष्यते ।

इत्यादित्रिष्वपि बीजेषु उन्मनीपर्यन्तमुच्चारः किमिति नोक्तः ? प्राणादीनामुन्मन्यन्तानां [5]द्वादशांशानां सर्वत्र साधारण्येन वक्तुं शक्यत्वादित्यत आह–तेष्विति । तेषु त्रिष्वपि बीजेषु प्राणो हकारः, अग्नौ रेफः, मायार्णा ईकारः, स एव कला । तदुक्तं कामकलाविलासे–

बिन्दुरहङ्कारात्मा रविरेतन्मिथुनसमरसाकारः ।

कामः कमनीयतया कला च दहनेन्दुविग्रहौ बिन्दू ॥ इति ।

बिन्द्वादय उन्मन्यन्ताः पूर्वोक्तलक्षणाः । एते प्राणादय उन्मन्यन्ता [6]द्वादशान्ते स्थिताः । मूलकुण्डलिनीरूपे वाग्भवबीजे ।

या मात्रा [7]त्रपुसीलता तनुलसत्तन्तुस्थितिस्पर्धिनी
वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम् ।
शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमां
[8]ज्ञात्वेत्थं न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः ॥

इति लघुस्तोत्रोक्तरीत्या विश्वस्य सृष्ट्युन्मुखे मध्यमे कामराजबीजे विश्वस्य स्थितिरूपे संहारसृष्ट्योर्मध्यस्थितत्वात् केवलं नादरूपेण नादाद्युन्मन्यन्तावयवोच्चारवर्जनादमात्ररूपेणोत्तरोत्तर[9]योजिते उच्चारक्रियाविशेषण वाग्भवबीज[10]शिखरवर्तिनं नादं हृद्गतकामराजबीजपर्यन्तमुच्चरेत् । कामराजशिखरवर्तिनं नादं बिन्दुस्थानगतशक्तिबीजपर्यन्तमुच्चरेदित्यर्थः । शबलाकारके एतद्बीजद्वयनादद्वययोगान्मिश्ररूपे तृतीये शक्तिबीजे द्वादशी [11]कलोन्मना स्थितेत्यनुषङ्गः । तेन प्राणादयो द्वादश-

१. यस्तनी–ख० । २. मां–ख० । ३. पुराणीं मम–ख० । ४. वृत्त इष्यते–क० । ५. 'द्वादश' इत्यधिकं–क० । ६. द्वादश–क० । ७. त्रपुशीकिता–ख० । ८. एष पादः ख० नास्ति । ९. योजनं–ख० । १०. बीज–क० नास्ति । ११. कलोन्मनी–ख० ।

कला अपि तृतीयबीजशिखरे स्थिता उच्चार्या[1] इति लभ्यते। कोऽर्थः? दी० यद्यपि [ [2]वाग्भवकामराजशक्तिबीजत्रयाणामप्यन्ते प्राणाग्निमाया-बिन्द्वर्धचन्द्ररोधिनीनादनादान्तशक्तिव्यापिकाः समनोन्मनाख्या द्वादश कला वक्तुं शक्यन्ते ], [3]वाग्भवकामराजबीजयोः सृष्टिस्थितिरूपत्वान्न विश्वातीतोन्मनापर्यन्तमुच्चारः। अतो न विरोध इत्यर्थः॥

(से०) निगदादिभेदेन जपत्रैविध्यं पञ्चमे पटले प्रतिपादितम्। तेषु निगदोपांशुजपावपेक्ष्य मानसस्यैवोत्तमतायास्तत्रैव प्रतिपादनात्तदितिकर्तव्यतामेव विस्तरेणोपदिशति—( कूटेत्यादि )। आद्यं सहस्रारं त्रिपुनामकं मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतं विशुद्धि लम्बिकाग्रं भ्रूमध्यञ्चेति नवसु स्थानेषु त्रैलोक्यमोहनादिसर्वानन्दमयान्तानि नव चक्राणि क्रमेण वर्तन्त इति तु चक्रसङ्केते सकलभावनाकथनावसरे प्रतिपादितम्। तेषु त्रीणि त्रीणि चक्राण्येकैकं कूटमित्येवंरीत्या नवचक्राणां कूटत्रयस्य चाभेदात्तत्तत्स्थानेष्वेव तत्तत्कूटं विभावनीयम्। ततश्चाकुलचक्रस्य मूलमारभ्य मूलमाधारस्याग्रपर्यन्तमूर्ध्वोर्ध्वं ककाराद्यक्षरपञ्चकं भूपुरषोडशदलाष्टदलैर्यथाभागमभिन्नं वह्निसमानवर्णं विभाव्यम्। तदग्रे हि या वह्निकुण्डलिनी तिष्ठति तस्याश्च वाग्भवीयहृल्लेखान्त्यकामकलायाश्चाभेदश्चिन्त्यः, तयोरेकस्थानपातित्वात्। एतदीयबिन्द्वर्धचन्द्रादिसूक्ष्माक्षरनवकं तु केवलनादरूपत्वात् कामराजकूटान्तर्गताक्षरषट्कशरीरघटकनादेन सहाभिन्नं विभावयेत्। कामराजाक्षराणि तु स्वाधिष्ठानमूलमारभ्यानाहताग्रपर्यन्तमूर्ध्वोर्ध्वं चतुर्दशारबहिर्दशारान्तर्दशारैर्यथाभागमभिन्नानि सूर्यसमानवर्णानि प्रथमकूटीयवह्निवर्णनादशबलितानि विभावनीयानि। हृदयाग्रे हि या सूर्यकुण्डलिनी तिष्ठति तस्याश्च कामराजकूटीयहृल्लेखास्थकामकलायाश्चाभेदं चिन्तयेत्, तयोरप्येकस्थानपातित्वात्। तदीयबिन्द्वादिनवकं तु पूर्ववदुत्तरकूटशरीरघटकनादेन सहाभिन्नं चिन्तनीयम्। ततः शक्तिकूटाक्षराणि चत्वारि शशिसमानवर्णानि पूर्वपूर्वतरकूटीयसूर्यवह्निवर्णनादाभ्यां शबलिततराणि विशुद्धिमूलमारभ्य भ्रूमध्याग्रान्तमूर्ध्वोर्ध्वमष्टकोणत्रिकोणबिन्दुचक्रैर्यथाभागमभिन्नानि चिन्तनीयानि। आज्ञाग्रे हि या सोमकुण्डलिनी तिष्ठति तस्याश्च शक्तिकूटीयहृल्लेखास्थकामकलायाश्चैक-

---

१. उच्चार्या–ख० नास्ति। २. कंसान्तर्गतं नास्ति–ख०। ३. 'प्राणादय उन्मन्यन्तास्तथाऽपि तयोः' इत्यधिकं–ख०।

से० स्थाननिपातित्वादभेदमनुसन्दध्यात् । एतदीयबिन्द्वादिनवकं तु पार्थक्येन ललाटमध्यप्रदेशमारभ्योपर्युपरि नवसु स्थानेषु सकलनिष्कलभावनोक्तप्रकारेण समाहिततयानुसन्दधीतेति समुदायार्थः । प्रथमद्वितीयकूटयोः सृष्टिस्थितिरूपत्वेन तत्रोत्तरोत्तरसंहाररूपस्य बिन्द्वादिनवकस्यापह्नवस्तृतीयकूटस्य संहाररूपत्वेन तत्र तस्य स्पष्टं विभावनमिति रहस्यम् । अक्षरार्थो यथा—कूटत्रये वाग्भवादि-बीजत्रये, कुण्डलीत्रितये तत्तच्चरमेकारे, ईकाराधिकारे "वैष्णवी बैन्दवी जिह्वा" इति कोषात् अत्र जिह्वापदस्य कुण्डलिनीपर्यायमात्रोपलक्षण-त्वात् । तत्तदीकारघटकहार्धकलापरं कुण्डलीपदमिति तु प्राञ्चः । चक्राणां त्रैलोक्यमोहनादीनां पूर्वपूर्वेषाम् । सृष्टिस्थितिलयानाख्यास्त्वि(ख्यानां त्वि)ति शेषः । नादरूपेण योजनं तत्तत्कूटीयनादतादात्म्यं त्रिचक्रगतम् । प्राथमिक-चक्रत्रयं सृष्टिचक्रनामकं वाग्भवकूटसम्बन्धिनादाभिन्नमित्यादिरर्थः । चक्र-पदमेव चावृत्त्या मूलाधारहृदयाज्ञास्थिति(त)कुण्डलिनीवाचकम् । बहुवचनात् कपिञ्जलन्यायेन त्रित्वलाभः । एताश्च कुण्डलिन्य आधारादिष्वेव सन्तीति स्वच्छन्दतन्त्रे—"तत्राधारश्च हृद्बिन्दुस्थानञ्च परिकीर्तितम्" इति । अत्र बिन्दुस्थानपदं भ्रूमध्यपरमिति तु प्राचीनैरेव व्याख्यातम् । यद्यपि ग्रहन्यास-प्रकरणे बिन्दुस्थाने सुधासूतिमिति श्लोकस्थबिन्दुस्थानपदस्य ललाटमध्यपरत्वेन तैरेव व्याख्यातत्वादिहापि तथैव व्याख्यातुं युक्तम्, प्रत्युत ललाटमध्य एव सोमकुण्डलिन्या अङ्गीकारे तृतीयकूटान्त्यसपरार्धकलाया अपि तन्मते तत्रैव विभाव्यत्वेन सामानाधिकरण्यादभेदविभावनानुगुण्यात्, तथापि प्रथमद्वितीय-कूटान्त्यसपरार्धकलयोस्तन्मते स्वाधिष्ठानविशुद्ध्योरापतन्त्योराधारहृदयस्थाभ्यां कुण्डलिनीभ्यां सह वैयधिकरण्यस्यावश्यम्भावादेकांशेन सामानाधिकरण्यलाभोऽ-प्यप्रयोजक इति तेषामाशयः । ततश्च चक्राणां कुण्डलिनीनां कुण्डलीत्रितये योजनमित्यन्वयः । कुण्डलीत्रितय इत्येकेनैव पदेन हार्धकलानां कुण्डलिनीनां च परामर्शादभेदविभावनलाभ इति प्राञ्चः ।

न च—"दीपाकारोऽर्धमात्रश्च ललाटे वृत्त इष्यते" इति वचनाल्ललाट-स्यैव बिन्दुस्थानत्वं युक्तमिति वाच्यम्, भ्रूमध्यस्योक्तरीत्या बिन्दुचक्रस्थान-त्वेन कुचन्दनेन शाक्तानां भ्रूमध्ये बिन्दुरिष्यत इति तिलकविधिना च तस्यापि बिन्दुस्थानत्वात् । तेषु कूटानां मध्ये प्राणो हकारः, हकाराधिकारे "[न]कुलीशो निशा प्राणः" इति कोशात् । अग्नी रेफः । मायार्णकला हृल्लेखा-क्षरस्थ ईकारः, "कला तुरीया भेरुण्डा" इतीकाराधिकारे कोशात् । मायार्ण-

पदेनैवेकारः । स एव कलेति तु प्राञ्चः । बिन्द्वाद्युन्मनान्तानां नवानां स्वरूपाणि चक्रसङ्केत एव व्याख्यातानि । उन्मना चेति । वर्तेत इति शेषः । तेषु प्राणाद्युन्मन्यन्तेषु । एतान(?)द्वादशान्ते स्थिता ललाटमध्यादूर्ध्वभागे स्थितत्वेन वर्णिताः । बिन्द्वादिनवकर्मात यावत् । तेषां विश्वस्य सृष्ट्युन्मुखे सृष्टिचक्रात्मकभूगृहादिचक्रत्रयाग्रे मूलकुण्डलिनीरूपे मूलाधारस्थकुण्डलिन्यभिन्नवाग्भवान्त्यस्वरोपरि स्थितानां विश्वस्य स्थितिरूपे मध्यमे च स्थितिचक्रात्मकमन्वस्रादिचक्रत्रयान्ते मध्यमसूर्यकुण्डलिन्यभिन्नमध्यमकूटान्त्यस्वरोपरि च पुनः श्रुतानां केवलं तत्तदाकारादिविभावनमन्तरेणोत्तरोत्तराभ्यां द्वितीयतृतीयकूटाभ्यां क्रमेण योजनमभेदं च । शवलाकारके वह्निसूर्यसोमवर्णानां मेल[ने]न चित्रितस्वरूपे तृतीये कूटे । द्वादशीकलोन्मनोन्मन्यन्तनवकम् । एतानि चेति शेषः । एवं त्रयाणां कर्मणां भावयन्नित्युत्तरश्लोकस्थेन शत्रन्तेनान्वयः । प्राञ्चस्तु द्वादशान्त इत्यत्र द्वादशेति च्छित्वा हकारादयो द्वादश प्रतिकूटमन्ते स्थिता इति व्याचक्षते । तन्न, यतो बिन्द्वादिनवकमात्रवाचकपदान्तरभावेन द्वादशानामपि नादरूपेणोत्तरोत्तरयोजनापत्त्या तुरीयकूज(ट)जप एव पर्यवसानं स्यात् । न च तद् भवतामपीष्टम् ॥१७८-१८१॥

**शून्यषट्कं [1]तथा देवि ह्यवस्थापञ्चकं पुनः ॥१७६॥**
**विषुवं[2] सप्तरूपं च भावयन् मनसा जपेत् ।**
**अग्न्यादि[3]द्वादशान्तेषु त्रींस्त्रीन् त्यक्त्वा[4] वरानने॥१७७॥**
**शून्यत्रयं विजानीयादेकैकान्तरतः[5] प्रिये ।**
**(शून्यत्रयात् परे स्थाने महाशून्यं विभावयेत्)**

(दी०) जपकाले [6]भाव्यानाह—शून्यषट्कमिति । एतानि विद्याचयवेषु भाव्यानि ।

शिखिपिच्छ[7]चित्ररूपैर्मण्डलैः शून्यपञ्चकम्[8] ।
ध्यायतोऽनुत्तरे [9]शून्ये रूपं[10] व्योमतनुर्भवेत् ॥

१. सुरेशानि–ख० से० । २. विषुवत्–ख० से० । ३. द्वादशांशेषु–ख० । ४. त्यक्ता–ख० । ५. एकैकान्तरितं–क० से० । ६. भावनामाह–ख० । ७. पक्ष–ख० । ८. षट्ककम्–ख० । ९. शून्यं–ख० । १०. परं–ख० ।

दी० इति विज्ञानभैरवभट्टारकोक्तरीत्या शून्यषट्कस्य रूपं ज्ञेयम्। अवस्थापञ्चकं जाग्रत्स्वप्नसुषुप्तितुर्यातीतात्मकम्। एषां जाग्रदादीनां स्वरूपं वक्ष्यति [ [1]त्रिपुवं सत्यरूपं च वक्ष्यति ]।

शून्यादीनां[2] स्थानानि स्वरूपाणि च क्रमेणाह—अग्न्यादीति। [3]एकैकश्च द्वयोर्द्वयोरन्तर इत्यर्थः। अग्न्यादि अग्निः रेफः, तदादीन् [4]त्रीन् त्रीन् षट् त्यक्त्वा शून्यत्रयं षट् शून्यानि विजानीयात्। कोऽर्थः? हकारमायाक्षरयोर्मध्ये रेफः[5]। मायार्धचन्द्रयोर्मध्ये बिन्दुः[6]। अर्धचन्द्रनादयोर्मध्ये रोधिनी[7]। नादशक्त्योर्मध्ये नादान्तः[8]। शक्तिसमनयोर्मध्ये व्यापिका[9]। समनोर्ध्वे चोन्मना[10] इति षट् त्यक्त्वा। तत्र रेफबिन्दुरोधिनी[11]नादान्तव्यापिकास्थानेषु पञ्चसु 'शिखिपक्षचित्ररूपैः' इत्यादिपूर्वोक्तरीत्या बर्हिबर्हकगतचन्द्रक[12]सदृशरूपाणि पञ्चशून्यानि भावनीया[13]नीत्यर्थः। षष्ठोन्मनायाः[14] स्थाने [[15]'पञ्चव्योमतनुर्भवेत्' इति विज्ञानभैरवभट्टारकोक्तरीत्यैव व्योमतनुशून्यं ज्ञेयमित्यन्यश्च विशेषः। शून्यत्रयात् परे स्थाने]। महाशून्यं निराकारं[16] भावयेदित्यर्थः[17]॥

(से०) ( शून्येत्यादि )। मयूरपिच्छस्थचन्द्रकतुल्यानि पञ्च शून्यानि निराकारमेकं शून्यमित्येवं सम्प्रदायलब्धानि षट् शून्यानि। जाग्रत्स्वप्नसुषुप्तितुर्यतुर्यातीताख्याः पञ्चावस्थाः। प्राणो मन्त्रो नाडी प्रशान्तं शक्तिः कालस्तत्त्वं चेति वक्ष्यमाणलक्षणानि सप्त विषुवन्ति। चकारान्नवचक्राणि पूर्वोक्तानि, मनसा भावयंस्तच्चिन्तनसमकालं जपेत्, उक्तरीत्या मनसाक्षराणि विभावयेदित्यर्थः॥ १८२॥

क्रमेण शून्याद्यष्टादशकं विवृणोति—(अग्नीत्यादि)। तृतीयहृल्लेखास्थहकारमारभ्योन्मन्यन्ताक्षराणि महाबिन्दुरेक इति त्रयोदशानां स्थानानां मध्ये

---

१. कंसान्तर्गतं ख० नास्ति। २. शून्यानां—ख०। ३. एकश्च एकश्च—ख०। ४. त्रींस्त्रीन् षट्—ख०। ५. रेफं—ख०। ६. बिन्दुं—ख०। ७. रोधिनीं—ख०। ८. नादान्तं—ख०। ९. व्यापिकां—ख०। १०. उन्मनीं—ख०। ११. 'नाद' इत्यधिकं—क०। १२. चन्द्रिका—क०। १३. भाव्या—ख०। १४. षष्ठोन्मनास्थाने तु—ख०। १५. कंसान्तर्गतं क० नास्ति। १६ निराकारं—ख० नास्ति। १७. विभावयेदिति—ख०।

हकार ईकारोऽर्धचन्द्रः शक्तिर्महाबिन्दुस्तदूर्ध्वञ्चेति षट्सु स्थानेषु षट् शून्यानि से॰ चिन्तयेदित्यक्षरस्वारस्यलब्धः समुदितार्थः । यथा हकारादीमि पूर्वोक्त-स्थानान्यनुवर्तनेनानूद्य तेष्वेकैकान्तरितमितिपदेन हकारमारभ्य विषम-स्थानेषु समस्थानपरित्यागे म[हा]शून्यस्थानविधिः । अनेन विधिना सप्त-मादिविषमेष्वपि तत्प्राप्तावग्न्यादीत्यादिना तदपवादः । अग्नी रेफः । तमारभ्य गणनायां द्वादशो महाबिन्दुः । एतेषु स्थानेषु त्रयं त्रयं परित्यज्यैकैकं शून्यं जानीयात् । अर्धचन्द्रशक्तिमहाबिन्दुषु त्रीणि शून्यानि विद्यादित्यर्थः । अस्य विधेः प्राप्त्या[प्ता]प्राप्तविवेकेन शक्तिर्म(म)हाबिन्दो(न्द्वो)रेव पर्य-वसानम् । एकैकान्तरितविधेरेव वा हकारेकारयोरेव पर्यवसानम् । शून्य-त्रयात् परे महाबिन्दुतोऽप्यूर्ध्वं महाशून्यं निराकारमित्यर्थः । वस्तुतस्तु— अस्मिन् पक्षे रोधिन्याद्यष्टमान्तेष्वित्येवोक्त्वा शून्यद्वयं विजानीयादिति कुतो नोक्तमिति चोद्यमवतरति, तस्मादन्यथा व्याख्येयम् । शून्यत्रयं पूर्ववत् । एकैकान्तरितमित्यप्यग्न्यादिस्थानोद्देशेनैव न पुनः प्राणाद्युद्देशेन, तदनु-वृत्तौ मानाभावात् । महाशून्यस्य षष्ठस्य पार्थक्येन निर्देशबलादेव विधिः शून्यद्वयपर एव । एकैकान्तरितं द्वयमिति पाठोपलम्भे तु न कोऽपि विवादः । ततश्च रेफबिन्द्वर्धचन्द्रशक्तिमहाबिन्दुतदूर्ध्वस्थानेषु षट् शून्यानि भवन्ति । अथवोत्तरत्र "वह्निं मायां च कालञ्च चेतनामर्धचन्द्रकम्" इत्यनेन तुर्यस्वर-बिन्दोर्मध्ये कालस्य स्थानं पृथगेव गणयिष्यते, तत उन्मन्येव द्वादशी । एतत्पक्षे महाबिन्दावेव महाशून्यं युक्तमुपपद्यते । तेन रेफकालबिन्दुनादान्तोन्मना-महाबिन्दुषु षट् शून्यानीति सिद्धम् । प्राञ्चस्तु—रेफमारभ्याद्वादशान्ताद्रेफो बिन्दुरोधिनी नादान्तो व्यापिकोन्मनेति त्रीन् पुनस्त्रीनेवं षट् त्यक्त्वा शून्यत्रयं शून्यषट्कं जानीयात् । तच्चैकैकान्तरितमेकश्चैकश्चेति द्वयं द्वयोर्द्वयोर्मध्यस्थ-मित्यर्थः । तेन हकारेकारयोर्मध्ये रेफस्तत्स्थान एकं शून्यमित्यादिक्रमेण रेफ-बिन्द्वादिस्थानषट्के शून्यानि भवन्ति । शून्यत्रयाच्छून्यषट्कस्य मध्ये परे चरम उन्मनास्थाने षष्ठं महाशून्यं गगनात्मकं भावयेत् । तेनार्थादन्येषां चन्द्रक-तुल्यता । तदुक्तं विज्ञानभैरवभट्टारकैः—

शिखिपक्षैश्चित्ररूपैर्मण्डलैः शून्यपञ्चकम् ।
ध्यायतोऽनुत्तरे शून्यं परं व्योमतनुर्भवेत् ॥

से० इतीति व्याचक्षते । तदिदमतीवासुन्दरम्, अग्नित आरभ्य उन्मनाया द्वादशत्वाभावात् सप्तम्या द्वितीयार्थे लक्षणाया अनुशासनविरुद्धत्वाच्च, एकैकेति वीप्साप्राये पठितस्य त्रींस्त्रीनित्यस्य भिन्नपदत्वायोगाच्च, षस्यं सार्ग (पणां स्थानं) विधाय पुनस्तेष्वेव पट्सु शून्यस्थानविधानस्य सन्दर्भविरुद्धत्वाच्च। पृथिव्यादिषु नवसु विभून् परित्यज्य मूर्तत्वं ज्ञेयमित्युक्ते विभुष्वेव मूर्तत्वमित्यभानात् । न गिरा गिरेति ब्रूयादैरं कृत्वांद्गेयमितिवच्छून्यानामग्न्यादिस्थानापत्तिरित्युक्तौ गिरापदानुच्चारणवद्रेफाद्यविभावनापत्तेः । अग्न्यादिद्वादशान्तेष्विति सप्तम्या तेषामेव शून्याधिकरणत्वमित्युक्तौ तु त्रींस्त्रीनित्येतत्सामानाधिकरण्येन तदीयव्याख्याया विरोधः । त्रींस्त्रीनित्येतस्य विशेष्यत्वेन हकारादीनित्येतस्याध्याहारापत्तिश्च, त्रित्रित्यागकीर्तनवैयर्थ्यञ्च। किञ्च, त्रयपदस्य पट्कपरत्वेऽत्यन्ताप्रसिद्धलक्षणापत्तिः । शून्यत्रयपदस्यावृत्तौ तु स एव द्विवारदोषः। एकश्चैकश्चेति व्याख्याने सरूपाणामित्येकशेषापत्तिः। एकैकव्यवधानार्थकत्वेन सामञ्जस्येऽन्तरपदस्य मध्यार्थकत्वमाश्रित्य तथा व्याख्यानस्य सुतरामयोगः। प्राथमिकेषु पञ्चसु द्विद्विमध्यस्थत्वेऽपि षष्ठस्याक्षरद्वयमध्यस्थत्वायोगश्च। तदर्थं द्वादशपदस्य महाबिन्दुपरत्वोक्तौ तु रेफादिमहाबिन्द्वन्तेषु द्वयोर्द्वयोर्मध्य एकैकं शून्यमिति पर्यवसानादीकारबिन्द्वादिक्रमेण महाबिन्दावेव षष्ठशून्यनिवेशापत्त्या तदापतादवस्थ्यम् । रेफमारभ्य निवेशे प्रथमशून्यस्य परिगणितद्वादशान्यतमद्वयसम्पुटीकरणाभावतादवस्थ्यम् । तदर्थमग्नेरादिर्हकार इति व्याख्यायां प्रभृत्यर्थकादिपदान्तराभावः। महाबिन्दोस्तदा त्रयोदशत्वेन द्वादशपदविरोधश्च। द्वादशस्यान्त इति व्याख्याने चरमावधिवाचकान्तपदान्तराभावः । हकारमहाबिन्दोरेवोपादाने बहुवचनविरोधश्च। एवं शून्यत्रयादिति दिग्योगलक्षणपञ्चम्या निर्धारणषष्ठ्यर्थकत्वमप्यनुशासनविरुद्धमेवेत्यास्तां तावत् ॥ १८३–१८४ ॥

**प्रबोध[1]करणस्याऽथ जागरत्वेन भावनम् ॥१७८॥**
**वह्नौ देवि महाजाग्रदवस्था त्विन्द्रियद्वयैः ।**
**आन्तरैः करणैरेव [2]स्वप्नमायावबोधकः ॥१७९॥**

---

१. करणस्यार्थजाग–ख० । २. स्वप्नो मायावबोधनः–ख० ।

गलदेशे [1]सुषुप्तिस्तु लीनपूर्वस्य वेदनम् ।
अन्तःकरणवृत्तीनां लयतो विषयस्य तु ॥१८०॥
पूर्वार्णानां विलोमेन भ्रूमध्ये बिन्दुसंस्थिता ।
तुर्यरूपं तथा[2] चात्र वृत्तार्धादेस्तु सङ्ग्रहः ॥१८१॥
चैतन्यव्यक्तिहेतोस्तु नादरूपस्य वेदनम् ।
तुर्यातीतं सुखस्थानं नादान्तादिस्थितं प्रिये ॥१८१॥
अत्रैव जपकाले तु पञ्चावस्थाः स्मरेद् बुधः ।

(दी०)इदानीमवस्थापञ्चकभावनां क्रमेण [3]विवक्षन्नादौ जागरितावस्था-भावनामाह—प्रबोधेति । इन्द्रियद्वयैः [4]ज्ञानकर्मेन्द्रियद्वयैः दशेन्द्रियैः । जाग्रद्व्यवहारो[5] जागरणं प्रबोधो जागर इत्युच्यते, तत्करणस्य प्रकाशस्य जागरत्वेन भावनम् । अतः प्रकाश[6]वाचके वह्नौ तार्तीयबीजशिखर[7]-वर्तिनि रेफे महाजाग्रदवस्था सर्वकालिकनिद्राक्षयलक्षणा परप्रबोध-दशा भावनीयेत्यर्थः ।

स्वप्नभावनामाह—आन्तरैरिति । बाह्येन्द्रिय[8]रहितैरान्तरैः करणै-र्मनोबुद्ध्यहङ्कारचित्ताख्यैरेव व्यवहारः प्रमातृस्वप्नः समाख्यया [9]तार्तीयबीजस्थेन चतुर्थस्वरेण अवगतबोधनस्तद्वाच्य इत्यर्थः । गलदेशे [10]स्वप्नस्य स्थानम् ।

सुषुप्तिभावनामाह—सुषुप्तिस्त्विति । 'स्वप्ने विद्यमानानामन्तः-करणवृत्तीनां लयतः सर्वेन्द्रियोपरतिः सुषुप्तिः' इति लक्षणम् । अतो हि[11] लीनपूर्वस्य [12]देहाद्यादिषु क्रोडीकृतस्य लीनस्यैव[13] स्वात्मनो वेदनं प्रकाशनं भवति । 'सुखमहमस्वाप्सम्' इति पश्चात्सुखमयं स्वात्मरूपं

---

१. सुषुप्ते तु—क० । २. तस्य—ख० से० । ३. वक्ष्यति आ—क० । ४. ज्ञान-कर्मेन्द्रियैर्दशभिः—ख० । ५. प्रमातुर्व्यवहारो—ख० । ६. प्रकाशके—ख० । ७. शिखर—ख० नास्ति । ८. विरतै—ख० । ९. तार्तीयस्थानव—ख० । १०. स्वप्नस्थानम्—ख० । ११. 'हि' इत्यधिकं—ख० । १२. देहादिषु—ख० । १३. लीनस्थितस्यात्मनो—ख० ।

दी० परामृश्यते सेयं[1] सुषुप्तिः। विषयस्य तु विषयं तार्तीयं बीजं विश्वव्यापिस्थानत्वात्। तस्य पूर्वार्णानां बिन्दुपूर्वस्थितानां वर्णानां विलोमेन नाशेन। "मायाबीजं महेशानि मादनं शक्रसंयुतम्। इन्द्रबीजं केवलं तु" इत्यादि "संहारक्रमयोगेन शक्तिबीजं समुद्धरेत्" इत्यन्तेन [2]चतुःशतीशास्त्रे संहारक्रमोद्धृतानां शक्तिबीजवर्णानां विलोमक्रमेण परिपाट्या भ्रूमध्ये बिन्दुसंस्थिता भ्रूमध्यस्थानस्थितहृल्लेखोर्ध्वबिन्दौ स्थिता भावनीयेत्यर्थः।

तुरीयभावनामाह—तुर्यरूपमिति। चैतन्यस्य संविदो व्यक्तेः परामर्शस्य हेतोः। नादरूपस्य पूर्वोक्तलक्षणनादरूपस्य। वेदनमभिव्यक्तिस्तुरीयरूपम्। तस्य तुरीयरूपस्य। अत्र[3] तार्तीयबीजे वृत्तार्धादेः, वृत्तार्धं अर्धचन्द्रः, आदि[4]शब्देन रोधिनीनादौ [5]गृह्येते तेषां संग्रहः। तार्तीयबीजशिखरवर्त्यर्धचन्द्ररोधिनीनादेषु स्वात्मचैतन्याभिव्यक्तिकारण[6]नादकलनात्मकं तुरीयं तुर्यं भावनीयमित्यर्थः।

तुर्यातीतभावनामाह—तुर्यातीतमिति। तुरीयातीतम् "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह", "आनन्दं ब्रह्मणो विद्वान्" इत्युपनिषदुक्तरीत्या[7] मनो[8]वागतीतपरमा[9]नन्दस्वरूपम्। सुखस्थानं नादान्तादिस्थितं [10]विलोमसुखस्थाने स्थितं नादान्तशक्तिव्यापिकासमनोन्मनासु स्थितं तुरीयातीतं भावनीयमित्यर्थः। अत्रैव शक्तिबीज एव पञ्चावस्था जागरिताद्याः पूर्वोक्ता जपकाले स्मरेद् बुधः। पञ्चावस्थानुसन्धानपुरःसरं विद्याजपकारणावस्थानिपुणः[11]।

(से०) अथावस्थापञ्चकस्य लक्षणैर्वाचकाक्षरैस्तैस्था( स्तत्स्था )नैश्च सह भावनामाह—( प्रबोधेत्यादि )। अथ शून्यषट्कविभावनकथनान्तरमवस्थाविभावनं कथ्यत इति भावः। न पुनरनेन विभावनयोरानन्तर्यमुच्यते, तयोस्तत्तदक्षरविभावनसमकालं व्यवस्थितक्रमत्वेन क्रमान्तरानपेक्षणात्। इन्द्रियद्वयैर्ज्ञानेन्द्रियकर्मेन्द्रिययोरेकैकयोर्युगलानि पञ्च तैर्दशभिरिति यावत्। एतैर्यत्प्रबोध-

---

१. सेयं सुषुप्तिः—ख० नास्ति। २. चतुःशतीशास्त्रोक्तरीत्या—ख०। ३. अत्र—क० नास्ति। ४. शब्दात्—ख०। ५. गृह्यते—ख०। ६. ...नादात्मकं तुरीयरूपं—क०। ७. क्रमेण—ख०। ८. मनो—ख० नास्ति। ९. परानन्द—ख०। १०. विलोमसुखस्थाने स्थितं—ख० नास्ति। ११. जपकरणावधानानि—ख०।

करणं प्रबोधो ज्ञानेन्द्रियाणां व्यापारः, करणं कर्म, तच्च कर्मेन्द्रियाणां व्यापारः । से० उभयेषां स्वस्वविषयाभिमुख्यमिति यावत् । तस्य जागरत्वेन जागरपदवाच्यत्वेन भावनं पण्डितपामरसाधारणो व्यवहारोऽस्तीति शेषः । प्रकृते तु सैव जाग्रदवस्था महती चिन्तनीया सर्वकालनिद्राक्षयरूपा वह्नौ प्रकृतत्वात्तार्तीयरेफे तद्बोध्या, तत्स्थान एव च विभाव्येत्यर्थः । प्राञ्चस्तु—दशभिरिन्द्रियैः प्रमातुर्व्यवहार एव प्रबोधः । स एव जागरस्तस्य करणं हेतुभूतः प्रकाशस्तस्य जागरत्वेन विभावनं रेफे कार्यमिति व्याचक्षते । आन्तरैः करणैरन्तःकरणचतुष्केण । एवकारेण पूर्वोक्तबहिरिन्द्रियनिवृत्तिः । प्रबोधकरणस्येत्यनुवर्तते, अन्तःकरणस्य ज्ञानकर्मेन्द्रियोभयरूपत्वात् । तेन मनोमात्रजन्यप्रबोधकर्मणोः स्वप्न इति भावनमस्ति । स च मायावबोधनस्तार्तीयेकारबोध्यः । अथापि गलदेश एव सा स्वप्नावस्था चिन्तनीया । अन्तःकरणवृत्तीनां यावान् विषयस्तस्य सर्वस्यापि लयो हि "सुषुप्तिकाले सकले विलीने" इत्यादिश्रुतिषु सिद्धः । अत एव वृत्तीनामपि स्वविषयत्वादेव लयः । वृत्तिलये सति सूक्ष्मरूपेण विद्यमानमप्यन्तःकरणं लीनप्रायमेव । तस्मिन् विशेषणे लीने सति तद्विशिष्ट आत्मापि तथैव । ततश्चात्र लीनपूर्वे इत्यत्र पूर्वपदेन विशेषणीभूतमन्तः(करणं) पूर्वत्वोपचारात् । तथा च लीनपूर्वो गलितान्तःकरणो यः स्व आत्मा तस्य वेदनमाविद्यकवृत्तिविषयता, सैव सुषुप्तिरित्युच्यत इत्यर्थः, सुषुप्तौ हि सुखमज्ञानमहं चेत्येतत्त्रितयमात्रविषयिकास्तिस्रोऽविद्यावृत्तयः सन्तीति [illegible]त्वात् । तासां च परस्परमवच्छेद्यावच्छेदकभावनाङ्गीकारादहमज्ञोऽहं सुखीति प्रत्ययस्य न सुषुप्तिकाले आपत्तिरिति तदाशयविदः । सा च सुषुप्त्यवस्था बिन्दौ स्वनिष्ठवाच्यतानिरूपितवाचकतासम्बन्धेन संस्थितापि भ्रूमध्य एव चिन्तनीया भ्रूमध्ये बिन्दौ च संस्थितेति वा योजना । स च बिन्दुस्तृतीयकूटस्थ एवेति द्योतनायाह—पूर्वार्णानां विलोमेनेति । पूर्वमुख( दृधृ )ता अर्णाः पूर्वार्णा इति मध्यमपदलोपी समासः । निर्धारणे षष्ठी । पूर्वचतुःशत्यां हि कादिविद्यातृतीयकूटमात्रं प्रातिलोम्येनोद्धृतम् । ततश्च विलोमेन पूर्वोद्धृतवर्णानां मध्ये यो बिन्दुस्तत्र संस्थितेत्यर्थः । प्राञ्चस्तु—विषयशब्देन विश्वव्याप्तिवाचिना तादृशव्याप्तिमत्तृतीयकूटमुच्यते । तस्य यो बिन्दुस्ततः पूर्वे ये वर्णाश्चत्वारस्तेषां विलोमेनानुलोम्येनेति यावत्, विलोमेनैवोद्धृतानां पुनर्विलोमत्वकथनेनानुलोम्य एव पर्यवसानात् । ईदृशानुलोम्यक्रमेण तृतीयकूटस्य यद्द्वे स्थानं लम्बिकाग्रमक्षरत्रयस्य भ्रूमध्यञ्च हृल्लेखाया-

से० स्तत्रत्यायास्तस्या ऊर्ध्वो यो बिन्दुर्ललाटस्थानीयस्तत्र भावनीया सुषुप्तिरिति लापयन्ति। तत्क्लिष्टं बहुतराध्याहारकलितं भ्रूमध्यपदवैयर्थ्यापादकञ्च। विषयशब्दो हि विषॢ व्याप्ताविति धातोर्निष्पन्न इति तु भ्रममात्रम्, षिञ्बन्धन इति धातोः पचाद्यचि व्युपसृष्टत्वे "परिनिविभ्यः सेवसितसयः" इत्यादिना षत्वे तन्निष्पत्तेः। तुर्यावस्था नाम चैतन्याभिव्यक्तिहेतुर्यो नादस्तस्यानुसन्धानात्मिका दशा। सा बिन्द्वर्धचन्द्ररोधिनीनादेषु भावनीया। वृत्तञ्चार्धञ्चादिर्यस्य चतुष्कस्य तद्वृत्तार्धादि तस्य तुर्यस्य च संग्रहः सम्बन्धो वाच्यवाचकभाव आधाराधेयभावश्चेत्यर्थः। नादान्तादेरुत्तरत्र परामर्शानुसारादिह चतुष्कलाभः। प्राञ्चस्तु—वृत्तस्यार्धमर्धचन्द्रः। तदादित्रिष्वेव तुर्या भावनीयेत्याहुः; तन्न, अर्धचन्द्रस्य वृत्तापेक्षया काल[त] आकारतश्च समांशार्धरूपतयार्धपदस्य पूर्वनिपातापत्तेः। बिन्दोः पूर्वत्रैवान्वय इति पक्षे त्वादौ तदर्धे रोधिन्यामित्यादाविवानन्यगतिकत्वात् स्वीकार्यम्। नादानुसन्धानमन्तरेणैव के[व]लसुखरूपतया स्थानं तुर्यातीतदशा। सा नादान्तादिपञ्चके वाच्यत्वादिना स्थिता भावनीया। एवंरीत्याऽत्रैव तृतीयकूटे एव पञ्चावस्थाश्चिन्तयेदित्यर्थः ॥१८५-१८९॥

योगः प्राणात्ममनसां विषुवं प्राणसंज्ञितम्[१] ॥१८२॥
आधारोत्थितनादे तु लीनं बुद्ध्या[२]त्मरूपकम्।
संयोगेन वियोगेन मन्त्रार्णानां महेश्वरि ॥१८३॥
अनहताद्याधारान्तं नादात्मत्वविचिन्तनम्।
[३]नादसंस्पर्शनात्तस्य नाडीविषुवमुच्यते ॥१८४॥
द्वादशग्रन्थिभेदेन वर्णानामन्तरे[४] प्रिये!।

(दी०) इदानीं सप्तविषुवभावनां [५]विवक्षन्नादौ प्राणविषुवभावनामाह—योग इति। प्राणस्य [६]हकारात्मनो वाय्वा[७]त्मनो यष्टुर्मनसश्च संयोगः प्राणविषुवमित्युच्यते। तदुक्तं [८]शैवतन्त्रे—"शिष्यात्मप्राणमनसां संयोगं[९] प्राणकं विदुः" इति। ॥१७३-१८२॥

---

१. प्राणसंज्ञकम्—ख० से०। २. बुद्धा—ख० से०। ३. विषुवन्नादसंस्पर्शात्—से०। ४. वर्णानाञ्चान्तरे—से०। ५. वक्ष्यन्नादौ—क०। ६. ककारात्मनो—ख। ७. वायोः आत्मनो—ख०। ८. स्वैरतन्त्रे—ख०। ९. संयोगः—क०।

मन्त्रविषुवभावनामाह—आधारोत्थितेति । आधारान्मूलाधारादुत्थितेन वायुना सम्भूते[1] नादे [2]विद्याशिखरवर्तिन्यात्मरूपकमात्मनो यद्रूपं संविदात्मकमानन्दैकरसीभूतं विद्यामन्त्रार्णानां वाग्भवकामराजशक्तिबीजानां वियोगेन [3]ध्यानरूपेण संयोगेन [4]समष्टिरूपेण [5]तुरीयबीजेन अनाहताद्याधारान्तमनाहतं हृदयस्थानम् आधाराणां सर्वेषामन्तस्थानं ब्रह्मरन्ध्रम् [6]अन्तशब्देनोच्चरितमनाहताद्याधारान्तान्तमिति यावत् । नादात्मत्वविचिन्तने नादस्य यष्टुरूपत्वविभावनं विषुवं मन्त्रसंज्ञि[7]तमिति शेषः । कोऽर्थः ? मूलाधारस्थितवाग्भवशिखरवर्तिनं नादं हृदयपर्यन्तमुच्चार्य तत्र स्वयं लीनो भूत्वा [8]स्वात्मनस्तन्मयतानुसन्धानं मन्त्रविषुवमित्यर्थः । तदुक्तं शैवतन्त्रे—

> आत्मना नादमध्ये तु लयं सञ्चार्य[9] तत्त्वतः ।
> अकारो[10]कारवर्णादिसंयोगेन वियोगतः ॥
> हृदयादि[11] बिलान्तं च विषुवं मन्त्रसंज्ञकम् । इति ।

नाडीविषुवभावनामाह—नादसंस्पर्शेति । वर्णाद् बीजत्रयशिखरवर्तिनो[12] नादस्य कामकलाक्षराद् द्वादशग्रन्थिभेदेन मूलादिषट्चक्रद्वादशग्रन्थीन् भित्त्वा तेन नाड्यन्तरे सुषुम्नामध्यमार्गे[13] नादसंस्पर्शात् त्रिबीजशिखरवर्तिनो नादस्य मूलादि[14] ब्रह्मरन्ध्रान्तमुच्चारतः संस्पर्शान्नाडीविषुवमुच्यते । तदुक्तं शैवतन्त्रे—

> [15]मूलमन्त्रत्रिशूलेन भित्त्वा ग्रन्थीननुक्रमात् ।
> नादनाडीसमायोगान्नाडीविषुवभावनम् ॥ इति ।

---

१. सम्भूते—क० नास्ति । २. 'विद्याशिखर' इत्यारभ्य 'विद्यामन्त्रार्णानां' इत्यन्तस्य ग्रन्थस्य स्थाने 'बिन्द्वादिषु वर्त्तिन्यात्मनो यष्टु' रूपं संविदात्मकं लीनं नादेनैकरसीभूतं बुद्ध्वा मन्त्रार्णानां—ख० । ३. ध्यासरूपेण—ख० । ४. समष्टिरूपेण—ख० नास्ति । ५. तुर्यबीजेन च—ख० । ६. तत्पर्यन्तं । अत्रान्तशब्दस्तन्त्रेणोच्चारितः—ख० । ७. संज्ञमिति—ख० । ८. स्वात्ममयस्त—क० । ९. सञ्चिन्त्य पञ्चमः—ख० । १०. अकाराकारवर्णादि—ख० । ११. हृदयादिनान्तान्तम् हृदयादोरिनान्तान्तं—ख० । १२. शिखरवर्तिकामकला—ख० । १३. मार्गेण—ख० । १४. मूलाद् ब्र—ख० । १५. स्थूल—ख० ।

(से०) अथ विषुवसप्तकं सलक्षणमाह—(योगेत्यादि)। विषुवशब्दस्तकारान्तोऽकारान्तश्च, मत्वर्थीयाधिकारे "अन्येभ्योऽपि दृश्यते" इति सूत्रेण विषुशब्दाद्व-प्रत्ययमतुपोर्विकल्पेन विधानात्, "समरात्रिन्दिवे काले विषुवद्विषुवञ्च तत्" इत्यमिपुराणाच्च। समाभ्यामुभाभ्यां तृतीयस्य व्याप्तिर्हि विषुशब्दस्य प्रवृत्तिनिमित्तम्। अत एव गवामयनेऽपि पूर्वोत्तरपक्षाभ्यामशीत्युत्तरशताहस्वरूपाभ्यां सन्दष्टस्याह्नो विषुवत्संज्ञा सङ्गच्छते। साम्यानादरेण व्याप्तिमन्मात्रार्थकं वा विषुवपदम्। प्रकृतेऽपि तादृशधर्मवत्त्वादेव परस्परसमपरिमाणस्य सम्बन्धः प्राणविषुवम्। त्रयाणामपि हृदयमेव स्थानं प्रसिद्धत्वान्नोक्तम्। तत्रैव विषुवप्रकरणेऽपि शिष्यात्मानं विचिन्तयेदिति। तदुभयत्र शिष्यपदं साधकमात्रपरम्, स्वात्मन्येतमेव तु तदर्थः। केचित्तु भावनास्थानस्य मूलानुक्तत्वेन न्यूनतां मन्यमानाः प्राणशब्दः ककारात्मकवायुपर इति व्याचक्षते। तन्न, ककारस्य त्रैविध्येन भावनास्थले त्रिकोटिकविकल्पापत्तेः, तस्य वाय्वात्मकत्वाभावाच्च। न च ककारस्तु प्रभञ्जन इति वचनात्तथात्वमिति मन्तव्यम्, तत्रत्यककारस्य कामकलाक्षरपरतायाः पूर्वं प्रतिपादनात्। न च कामकलयैव सरा(?)भेदश्चिन्त्यतामिति वाच्यम्, तस्याश्चतुष्ट्वेन चतुष्कोटिकविकल्पापत्तेः। आत्मनो हृदयस्थत्वात्तत्सामा[illegible]य द्वितीयकूटस्थकामकलयैवाभेदविभावनमिति चेत्, तर्हि घट्ट(घट)कुट्यामेव प्रभातं सम्पन्नमिति कृतं प्राणपदस्य निरर्थिकया लक्षणया। शिष्यात्म[illegible]त्यत्र शिष्यपदस्य त्रिष्वप्यन्वयस्य भासन(?)तत्स्वारस्यविरुद्धश्च। वस्तुतस्तु मूलाधारे ब्रह्मेति प्रसिद्धस्य रवस्य वायुकुण्डलीसंयोगात्तद्व्युत्पत्तिः। स एव रवो नाभिपर्यन्तमागत्य पवनेन मनसा च युज्यते। स एव च हृदयमागतः पवनेन बुद्ध्या च संयुज्यते। अतः स एव स्थानत्रये परापश्यन्तीमध्यमेति नामत्रयं क्रमेण भजत इति तु सौभाग्यभास्करे वर्णितमस्माभिः। इदमेव च प्राणविषुवपदवाच्यमिति स्थानत्रये मिलित्वैका भावनेति ज्ञेयम्। तेनात्मशब्दोऽत्र बुद्धिपरो द्रष्टव्यः। मूलाधारादुत्थितो नादः षट्चक्राणामुभयतो विद्यमानं ग्रन्थिद्वयद्वयं भिन्दन् सुषुम्णानाडीमध्यमार्गेण ब्रह्मरन्ध्रपर्यन्तं यातीति स्थितिः। स च नादो वाग्भवकूटीयो द्वितीयतृतीयकूटाक्षरेषु प्रविशंस्तदभिन्न एवेति। अक्षरद्वयसन्धौ तु तेभ्यो भिन्नोऽपि भवति। यथान्तःकरणवृत्तिपरम्परयामनुप्रविष्टा चित्तत्तद्रूपैव भासते, वृत्तिद्वयसन्धौ तु ताभ्यां भिन्नैव भासत इति ब्रह्मविदामनुभवः। यथा वा मणिमालान्तः-

प्रविष्टं सूत्रं मणिगर्भेषु भिन्नं न भासते, मणिद्वयसन्धिषु तु पृथग्भासते। से० इयांस्तु विशेषः—सूत्रस्य मणिभ्योऽत्यन्तं भेदात्तद्गर्भेऽपि भेदेनैवावस्थितिः। नादस्य त्वक्षरगर्भे तदभेदेन, अक्षराणामपि नादपरिणामरूपत्वात्। तदिदं मन्त्रार्णानां संयोगेन वियोगेनेत्यनेन प्रतिपादितम्। अत्र मन्त्रपदेन योग्यतया द्वितीयतृतीयकूटे एव परामृश्येते न प्रथमम्। प्राञ्चस्तु—संयोगपदं कूटत्रय-समष्टिरूपतुर्यबीजपरम्, वियोगपदञ्च व्यष्टिरूपबीजत्रयपरमिति व्याचख्युः। तदयुक्तमिति स्पष्टम्। तादृशं नादं वाग्भवान्त्यस्थानमारभ्य हृदयस्थं कामराज-कूटान्त्याक्षरपर्यन्तमुद्गतं विभाव्य तस्मिन् स्वजीवात्मनो लयं विचिन्त्य ततः कवलितजीवात्मानं नादमूर्ध्वमुद्गमय्य ब्रह्मरन्ध्रान्तं प्राप्तं विचिन्तयेत्। तदिदं मन्त्रविषुवमुच्यते। अत्रानाहताद्याधारान्तमित्यत्राधाराणां मूलाधारा-द्याज्ञान्तानामन्तं चरमं ब्रह्मरन्ध्रं तदभिव्याप्येत्यभिविध्यर्थकस्याङः प्रश्लेषेण व्याख्येयम्, "हृदयाद् ब्रह्मरन्ध्रान्तं विषुवन्मन्त्रसंज्ञकम्" इति तन्त्रान्तरानुसारात्। आधारान्तान्तमिति वक्तव्येऽन्तपदमेकमेव तन्त्रेण प्रयुक्तं द्विरन्वयितव्यमिति प्राचामुक्तिस्तु नादर्तव्या। विषुवन्नादेत्यत्रादन्तस्तकारान्तो वा पदच्छेदः। अथैतादृशस्य नादस्य द्वादशग्रन्थिभेदनपूर्वकं योऽयं सुषुम्णानाडीप्रवेशः स एव नाडीविषुवमुच्यते। अत्र वर्णादिति पदं बीजत्रयशिखरवर्तिकामकलाक्षरार्थ-कत्वेन प्राचीनैर्व्याख्यातम्। वाग्भवान्तिमादीकारादित्येव तु युक्तम्। ल्यब्लोपे पञ्चमी। ईकारमारभ्येत्यर्थः॥ १९०-१९२॥

नादयोगः प्रशान्तं [1]तु प्रशान्तेन्द्रियगोचरः ॥१८५॥
वह्निं मायां[2] कलां चैव चतनामर्धचन्द्रकः ।
रोधिनीनादनादान्तान् शक्तौ लीनान् विभावयेत् ॥१८६॥
विषुवं शक्तिसंज्ञं तु तदूर्ध्वं नादचिन्तनः ।
तदूर्ध्वं कालविषुवमुन्मनान्तं महेश्वरि ॥१८७॥
मुनिचन्द्राऽष्टदशभिस्त्रुटिभिर्नादवदनः ।
चतन्यरूपं [illegible] विषुवं तत्त्वसंज्ञितम्[3] ॥१८८॥
परं स्थानं महादेवि निसर्गानन्द[illegible] ।

1. प्रशान्तस्तथ—ख० से०। 2. मायां च कालं च—ख० से०। 3. संज्ञकम्—ख० से०।

(दी०) प्रशान्तविषुवभावनामाह—नादयोग इति। वह्निं रेफं माया-मीकारं [1]कलां तन्मध्यवर्तिसपरार्धकलां[2] रेखारूपां चेतनां[3] बिन्दु-चैतन्यस्य संस्कारः, वेदनरूपत्वात्। तदुक्तं परापञ्चाशिकायाम्—

"बिन्दुर्वेद्यस्य संस्कारो विमर्शः[4] सर्ग इत्यहम्" इति।

अर्धचन्द्ररोधिनीनादनादान्तांश्च[5] पूर्वोक्तलक्षणायां[6] शक्तौ[7] लीनान् विभावयेत्। यतोऽयं नादो[8] यष्टुस्तदतीतशक्तिलयलक्षणः, अतः प्रशान्तेन्द्रियगोचरं सकलेन्द्रियातीतविषये तत्प्रशान्ते विषुव-मित्यनुषङ्गः। तदुक्तं शैवतन्त्रे—

अकारोकारवर्णौ च मकारो[9] बिन्दुरेव च।
नादनादान्त[10]संज्ञे तु त्यक्त्वा ब्रह्मादिभिः क्रमात्॥
सप्तमे शक्तिमध्ये तु शिष्यात्मानं विचिन्तयेत्।
प्रशान्तं तद्विजानीयात् प्रशान्तेन्द्रियगोचरम्॥ इति।
॥ १८३-१८६ ॥

शक्तिकाल[11]विषुवभावनामाह—विषुवमिति। तदूर्ध्वं शक्तेरूर्ध्वं[12] समनान्तं नादस्य विचिन्तनं शक्तिविषुवं तदूर्ध्वं समनाया अप्यूर्ध्वम्। "नाऽत्र कालकलाभानम्" इति स्वच्छन्दसङ्ग्रहोक्त-रीत्या कालातीतोन्मनान्तं नादस्य विचिन्तनं कालविषुवम्। [13]तदुक्तं शैवतन्त्रे—

शक्तिमध्यगतो नादः समनान्तं प्रसर्पति।
तच्छक्तिविषुवं प्रोक्तमुन्मन्यां कालसंज्ञितम्॥ इति ॥१८७॥

ननु कियता कालेन नादस्तत्त्वं वेदयतीत्याह—मुनीति।

स्वस्थे नरे सुखासीने यावत् स्पन्दति लोचनम्।
तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः॥
तत्परस्य [14]प्रशान्तस्तु त्रुटिरित्यभिधीयते।

---

१. कालं—ख०। २. कलासम्बन्धिरेखारूपं—ख०। ३. चेतनाबिन्दुर्वेद्यस्य—ख०। ४. विसर्गश्च (स्य) महत्यसौ—ख०। ५. नादान्ताः—ख०। ६. लक्षणाः—ख०। ७. शक्तौ लीनान् विभावयेत्—ख० नास्ति। ८. प्रशान्तो नादयोगो—ख०। ९. मकारं बिन्दुमेव च—ख०। १०. शक्ती च—ख०। ११. विषुवयोर्मा—क०। १२. शक्तेरूर्ध्वं—ख० नास्ति। १३. तदुक्तं—क० नास्ति। १४. शतांशस्तु—ख०।

इति तन्त्रान्तरोक्तरीत्या निमेषस्य त्रिसहस्रतमो भागस्त्रुटिः । टी० मुनयः सप्त, चन्द्र एकः, अष्ट दश सख्ये प्रसिद्धे । तेन हकाराद्युन्मन्यन्तानां विद्यावयवानां [1]सप्तदशाधिकाष्टोत्तरदशसहस्रत्रुटिभिरुच्चारे 'अकुले विषुसंज्ञे च' इत्युक्तरीत्या कृते सति नादस्यान्ते तत्त्वस्य वेदनमित्यर्थः ।

तत्त्वविषुवभावनामाह—चैतन्येति । [2]अनन्तरोक्तरीत्या चैतन्यस्य स्वात्मतत्त्वस्य व्यक्तेः प्रकाशस्य हेतुस्तत्त्वविषुवम् । कोऽर्थः? उन्मनोर्ध्वेऽनन्तरोक्तसंख्यावत्त्रुटिभिर्नादलयात् स्वात्मानुसन्धानं तत्त्वविषुवमित्यर्थः । तदुक्तं शैवतन्त्रे—

स्वाधिकारे परे धाम्नि विषुवं तत्त्वसंज्ञकम् । इति ॥ १८८ ॥

परं स्थानमिति । परं शून्यषट्कावस्थापञ्चकसप्तविषुवकोलाहलातीतं स्थानं विश्वविश्रान्तिभूमित्वात् । सर्वविषयानन्दसमष्टिभूतः परमानन्दो निसर्गानन्दः । अत एवाऽनित्याऽशुचि[3]क्लेशदुर्भगभेद[4]प्रदेशपञ्चकपरिपन्थी पराकारणपरत्वात् परमानन्दलक्षणपरमप्रेमास्पदपर[5]सुन्दरपरमशिवरूपं निसर्गानन्दसुन्दरम् ।

(से०)(नादेत्यादि) । नादयोगो नाडीसम्बद्धो नादो यस्मात् कारणाच्छक्तौ प्रशान्तो लीनो भवति तत्तस्मात् कारणादिदं प्रशान्तविषुवमित्युच्यते । शक्तौ नादस्य लयकथनादेव तत्पूर्वतत्स्वर्ण(?)नतिक्रम्य तावत्पर्यन्तमलीनो भावनीय इत्यर्थलब्धेरेवार्थं (?) तुर्यस्वरबिन्द्वोर्मध्ये स्थलान्तरं चिन्तनीयमिति द्योतनाय तत्साहित्येन तानि स्थानानि गणयति—वह्निमिति । वह्नी रेफः, मायेकारः, कालो लघुप्रपलतरो (?) मकारः । "महाकालो यमोऽन्तकः" इति कोशसत्त्वेऽपि महापदत्यागेन कालपदमात्रप्रयोगान्मकारश्रुतिमात्रमिह गृह्यत इति मन्तव्यम् । कालशब्दः कलापर इति तु प्राञ्चः । एतत्पक्षे कलाशब्दात् स्वार्थे तद्धितो वाच्यः, परन्तु स स्वच्छन्दतन्त्रविरुद्धः, "मकारं बिन्दुमेव च" इत्युक्तेः । चेतनानुस्वारः, "अक्रूरश्चेतना नादः" इति कोशात् । अर्धचन्द्रादयो व्याख्यातचराः, एता(न)नुक्रम्येति शेषः । तदिदं प्रशान्तविषुवं प्रशान्तेन्द्रियाणां नियमितेन्द्रियाणां गोचरो विषयः । तरलकरणानामसुलभ

१. सप्तदशाधिकाष्टशतोत्तर–ख० । ४. अनन्तरोक्तरीत्या–ख० नास्ति ।
३. क्लेश–ख० नास्ति । ४. भेदप्रपञ्चपरि–ख० । ५. सुन्दरपरम–ख० नास्ति ।

से० इति भावः। गोचरपदे क्लीबत्वमार्षम्। अथ लीयमानस्य दीपादेः सूक्ष्मीभूय पुनः स्थूलीभावदर्शनात्तदनुसारेण शक्तौ लीनस्य नादस्य पुनरुज्जीवनेन व्यापिकामुत्क्रम्य समनायां लयचिन्तनं शक्तिविषुवम्। ततः पुनरुज्जीव्यो-न्मन्यां लयः कालविषुवम्।

शक्तिमध्यगतो नादः समनान्तं प्रसर्पति।
तच्छक्तिविषुवं प्रोक्तमुन्मन्यां कालसंज्ञितम्॥

इति स्वैरतन्त्रात्। अथायमेव नादो यद्यविच्छिन्नतया सार्धनिमेषत्रयोत्तरं सप्तदशाधिकशतत्रयत्रुटिपरिमितकालपर्यन्तमुच्चरितश्चेत्तदन्ते चैतन्याभिव्यक्ति-र्भवति। तदिदं तत्त्वविषुवम्, तत्त्वव्याप्तिकारित्वात्। मुनयः सप्त। चन्द्र एकः। तेन दशसहस्राण्यष्टौ शतानि सप्तदश च त्रुटयो भवन्ति। त्रुटीनां सहस्रत्रयमेको निमेषः। तदुक्तम्—

स्वस्थे नरे समासीने यावत् स्पन्दति लोचनम्।
तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः॥
तत्परस्य शतांशस्तु त्रुटिरित्यभिधीयते। इति।

एवं नव चक्राणि षट्शून्यानि पञ्चावस्थाः सप्त विषुवन्तीत्येतत्सप्त-विंशतिपू(कृ)तकोलाहलातीतं तु परं स्थानं स्वाभाविकानन्दसुन्दर-मित्यर्थः॥ १९३–१९६॥

**एवं चिन्तयमानस्य जपकालेषु[1] पार्वति॥१८९॥**
**सिद्धयः सकलास्तूर्णं सिद्ध्यन्ति त्वत्प्रसादतः।**
**एवं कृत्वा जपं देव्या वामहस्ते निवेदयेत्॥१९०॥**
**अनामाङ्गुष्ठयोगेन तर्पयेच्चक्रदेवताः।**
**[2]मद्यं मांसं तथा मत्स्यं देव्यास्तु[3] विनिवेदयेत्॥१९१॥**
**कौलाचार[4]समायुक्तैर्वीरैस्तु सह पूजयेत्।**

(दी०) पूर्वोक्तभावनायाः फलमाह—एवमिति। एवं पूर्वोक्तप्रकारेण जपकाले[5] तु "आज्ञान्तं सकलं प्रोक्तम्" इत्यादिपूर्वोक्तरीत्या। सकलसकल-निष्कलकेवलनिष्कलरूपास्त्रिविधास्तेषां कालाः 'दीपाकारोऽर्धमात्रश्च"

1. जपकाले तु—क० से०। २. स्यं संथा थं म मांत म—से०। ३. देव्यै तु—ख० से०। ४. कौलिकाचारसंयुक्तै—ख०। ५. जपकालेषु जपः—ख०।

इत्यादिना पूर्वोक्तविद्यावयवानामुच्चारणकालास्तेषु। शून्यषट्कादिकं दी० चिन्तयमानस्य सकलाः सिद्धयोऽणिमाद्याः पूर्वोक्तास्त्वत्प्रसादात्[1] सिद्ध्यन्ति। प्रकाशात्मनो मम विमर्शशक्तौ त्वयि प्रसन्नायाम्

तत्र तत्राक्षमार्गेण चैतन्यं व्यज्यते प्रभोः।

इति विज्ञानभैरवभट्टारकोक्तरीत्या सर्वप्रत्ययमय[2]तामुपगतायां तव प्रसादात् स्वायत्ता भवन्तीत्यर्थः।

एवमिति। एवमुक्तभावनापुरःसरणं जपमुक्तलक्षणं कृत्वा प्रकाशविमर्शसामरस्यरूपाया वामहस्ते विश्वकवलीकारपरे विमर्शमये निवेदयेत्॥ १८९-१९०॥

पूजाविधिमुक्त्वा तर्पणविधिमाह—अनामाङ्गुष्ठेति। अनामा शक्तिः, अङ्गुष्ठः शिवः, तयोर्योगेन मेलनेन, शिवशक्तिमेलनमुद्रयेत्यर्थः। चक्रदेवताश्चतुरस्रादिबैन्दवान्तनवचक्रनिवासिनीः प्रकाशविमर्शसमरसीभूतास्तर्पयेदित्यर्थः[3]।

[4]प्रदानैस्तर्पणैः सम्यग्विशुद्धैरमृतात्मभिः।
महाहन्ता करोमीदं विश्वं [5]हव्यपुरःसरम्॥

इत्यभियुक्तवचनोक्तरीत्या परस्मिन लये[6] भावयेदित्यर्थः।

तर्पणसाधनानि वस्तून्याह—मद्यमिति। शिवशक्तिमेलनमुद्रया समस्तमद्यस्य मांसस्य मत्स्यस्य[7] च निवेदनमेव तर्पणमिति भावः॥१९१॥

[8]समयस्थैरेव सह पूजयेदित्याह—कौलाचारेति। कुलमुक्तलक्षणं हेय[9]तया ज्ञेयं येषां[10] ते कौला दक्षिणादिस्रोतःसु दीक्षिताः तेषाम् आचारः।

गुरुभक्तिश्च शान्तिश्च पूजा श्रद्धा क्षमा धृतिः।

इत्यादिस्वच्छन्दसङ्ग्रहादिशास्त्रेषु[11] विहिताः, तद्युक्तैर्वीरैः।

---

१. त्वत्प्रसादतः–ख०। २. मध्यमतामुपगतायाः–क०। ३. तर्पयेदित्यर्थः–ख० नास्ति। ४. नैदाबै–ख०। ५. हव्यवपुर्द्धरम्–ख०। ६. क्रयं–ख०। ७. मीनस्य–क०। ८. समयस्थेनैव–ख०। ९. तथा–ख०। १०. यैस्ते कौलिकाः–ख०। ११. शास्त्रे–ख०।

दी० अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः ।
परात्रमपरो भुङ्क्ते स्वभावमशिवापहम् ॥

इति परापञ्चाशिकोक्तरीत्या भेदप्रतीतिसाधनस्य[1] इदन्तारिपोरहमि [2]समराङ्गणे [3]प्रलयप्रतिपादनपरा वीराः, तैः सह पूजयेत् ।

तन्त्राचारपरिभ्रष्टैः प्रपञ्चव्रतशालिभिः ।
पशुभिः क्षुद्रकर्मस्थैर्न कुर्याद् द्रव्यमेलनम्[4] ॥

इत्यादिवचनसिद्धैः सह न पूजयेदित्यर्थः ।

(से०) एतच्चिन्तनस्य क्रत्वर्थत्वेऽपि पुरुषार्थतामप्याह—( एवमित्यादि ) । स्पष्टम् ॥ १९७ ॥

जपविधिमुपसंहरन् कतिचिद्गुणविधीनाह—( एवमित्यादि ) । "गुह्यातिगुह्यगोप्त्री त्वम्" इति मन्त्रार्थानुसन्धानपूर्वकं जलप्रक्षेपो जपनिवेदनम् । तदुद्दिश्याधिकरणविधिः । तर्पणोद्देशेन तत्त्वमुद्राविधिः । निवेदनोद्देशेन व्याकुलाक्षरपादेन प्रथमादिपर्यायविरचितगोपलक्षणम् । पादुकाचारसमयाचारोभयपरवीरसाहित्यविधिना कौलाचारपरिभ्रष्टसाहित्यपरिसंख्या ॥१९८–१९९॥

[5]पुष्यभेन तु वारे च सौरे च परमेश्वरि ॥१६२॥
गुरोर्दिने स्वनक्षत्रे चतुर्दश्यष्टमीषु च ।
चक्रपूजां विशेषेण योगिनीनां समाचरेत् ॥१९३॥
[6]चतुःषष्टियुताः कोट्यो योगिनीनां महौजसाम् ।
चक्रमेतत् समाश्रित्य संस्थिता वीरवन्दिते ॥१९४॥
अष्टाष्टकं तु कर्तव्यं वित्तशाठ्यविवर्जितम् ।
त्वमेव तासां रूपेण क्रीडसे विश्वमोहिनी ॥१९५॥

(दी०)ननु कस्मिन्नक्षत्रे कस्मिन् वारे कस्मिन् वा दिने पूजा[7] कार्येत्यत आह—पुष्यभेनेति ।

नित्यं सम्पूजयेद्देवीं सासनां सावृतिं क्रमात् ।

१. सारस्य–ख० । २. रणाङ्गणे–ख० । ३. प्रलयप्रतिपादनपरैः–ख० । ४. मोजनम्–ख० । ५. नित्यं पुष्यदिने वारे–ख०से० । ६. चतुःषष्टिर्यतः–ख० से० । ७. पूजेयं–क० ।

इति स्वच्छन्द[1]सङ्ग्रहादिशास्त्रेषु यद्यपि[2] प्रतिदिनं पूजा विहिता, दी० तथापि [3]पुष्यभेन पुष्यनक्षत्रेण सह सौरे वारे [4]गुरोरुदयऽयाप्त्यो-र्दिने स्वनक्षत्रे च चतुर्दश्यष्टमीषु तिथिषु च[5] चक्रपूजां चतुरस्रादि-बैन्दवान्तचक्रगतानां देवतानां पूजां विशेषेण समाचरेत्। [6]नित्यपूजा-वन्न भवति, किन्तु नैमित्तिकतया [7]अष्टाष्टकादियोगिनीगणप्रीणन-पुरःसरं पूजयेदित्यर्थः॥ १९२–१९३॥

ननु[8] चक्रेऽष्टाष्टकपूजनं कथं सङ्गच्छते इति शङ्कामपनुदन् विशेषपूजामेव विवृणोति–चतुःषष्टीति। त्रैलोक्यमोहनचक्रनिवासिनीनां ब्राह्म्यादीनामंशभूता अक्षोभ्याद्याश्चतुःषष्टियोगिन्यः, तासां प्रत्येक-मंशभूतानां [9]कोटिसङ्ख्याकानां महौजसां महाप्रभावशालिनीनां योगिनीनामुक्तलक्षणानां मिलित्वा[10] चतुःषष्टिकोट्या यतश्चक्रमेतत् समाश्रित्य संस्थिताः। [11]मध्ये भूगृहस्ततः। मध्यभूगृहोदितचतुःषष्टि-योगिनीनां समष्टिभूतानामक्षोभ्यादीनाम्। [12]अष्टाष्टकम् अष्टकाना-मष्टकम्। वित्तशाठ्यविवर्जितं स्वस्ववित्त[13]वञ्चनाहीनं यथा भवति तथा कर्तव्यम्। अत्र[14] कृतिर्नाम पूजनक्रियायोगोऽभिप्रेतः।

ननु तासां पूजने किमायातं ममेत्यत आह–त्वमेवेति। प्रकाशा-त्मनो विश्वबोधकस्य [15]ममांशभूता विमर्शरूपिणी। त्वमेव बैन्दव-चक्रगता विश्वमोहिनी संसारित्वोपपादनकारिणी। तासां ब्राह्म्यादीना-मक्षोभ्यादीनां च रूपेण क्रीडसे,

एका सती भगवती परमार्थतोऽपि
संदृश्यसे बहुविधा ननु नर्तकीव।

इत्यभियुक्तोक्तरीत्या तत्तद्रूपेण परिणमसे। अतस्त्वत्सदृशभूत-योगिनीयजनेन त्वमेव प्रीणासीत्यर्थः॥ १९४–१९५॥

---

१. स्वच्छन्द–क० नास्ति। २. यद्यपि–ख० नास्ति। ३. पुष्पदिने–ख०। ४. गुरूदय–ख०। ५. च–ख० नास्ति। ६. नित्यपूजा तु भवति–ख०। ७. अष्टाष्टकादियोगिनीनाम्–ख०। ८. 'ननु' इत्यारभ्य 'चतुःषष्टीति' इत्यन्तं–ख० नास्ति। ९. कोटिकोटिसं–ख०। १०. इत्युक्तत्वात्–ख०। ११. मध्यमभू-गृहान्तश्चतुःषष्टिकोटियोगिनीसमष्टिभूतानां–ख०। १२. अष्टाष्टकं–ख० नास्ति। १३. विभव–ख०। १४. अत्र कृतिर्नाम–ख० नास्ति। १५. मम–ख० नास्ति।

(से०) एवं नित्यपूजां विधाय नैमित्तिकार्चनान्याह—(नित्यमित्यादि)। कुलार्णवे नैमित्तिकार्चनानि यद्यपि भूयांसि विहितानि सन्ति, तथापि तेष्वत्यन्तमावश्यकान्येतावन्ति। गुरोर्दिने नाथस्य जन्मदिने व्याप्तिदिने च स्वस्य जन्मनक्षत्रे। चतुर्दश्यष्टमीष्विति बहुवचनात् पक्षद्वयेऽपि। विशेषेण नित्यपूजामपेक्ष्य योगिनीवीराधिक्यभक्ष्यभोज्याद्याधिक्यादिना विशेषद्रव्येण वेत्यर्थः। तेन नित्यपूजायां विशेषद्रव्यालाभेऽपि प्रतिनिधिना निर्वाहः सूचितः। उक्तञ्च कल्पसूत्रे—"मपञ्चकालाभेऽपि नित्यक्रमप्रत्यवमृष्टिः" इति। चतुःषष्टिरिति। नवानां चक्राणां मध्ये प्रतिचक्रमित्यर्थः। सम्भूय पञ्चार्बुदानि षट्कोट्यः षष्टिर्लक्षा योगिनीनां भवन्ति। अष्टाष्टकं नाम मिथुनभोजनात्मकः कर्मविशेषः। असिताङ्गभैरवादयो मङ्गलनाथादयश्चेत्यप्यष्टौ। अनयोरेकस्मिन्नष्टक एकैकस्मान्मिथुनादष्टावष्टौ कन्या उत्पन्नाः। अन्यस्मिंस्तु पुमांसः। तासां तेषाञ्च परस्परविवाह(हा)देकैकमिथुनयुगलांशभूतान्यष्टावष्टौ मिथुनानि सम्पन्नानि। सम्भूय चतुःषष्टिः। तेषां नामानि सहस्राक्षरीमन्त्रे तदीयन्यासादिषु च तन्त्रे प्रसिद्धानि। तानि च मिथुनानि शिवशक्तिरूपाण्येव महाचतुःषष्टिकोटियोगिनीगणसमष्टिरूपाण्यपि। अत एतद्भोजनमात्रं यथाविभवमवश्यं कारणीयम्, तद्भोजनेतिकर्तव्यता कुलार्णवे नैमित्तिकपटले द्रष्टव्या। तुशब्देन तत्रैवोक्तानां श्रीकण्ठाद्येकपञ्चाशन्मिथुनभोजनादीनामिच्छादित्रिशक्तिभोजनान्तानां ब्रह्माण्डपुराणाद्युक्तसहस्रभोजनत्रिशतभोजनादिकर्मणां चानावश्यकता ध्वनिता। मध्यमभूगृहे चतुःषष्टिमिथुनानां पूजनमष्टाष्टकमुच्यत इति तु प्राचां भ्रम एव। वित्तशाठ्यविवर्जितमिति स्वारस्यविरुद्धञ्च ॥ २००-२०२ ॥

अज्ञात्वा तु कुलाचारमयष्ट्वा गुरुपादुकाम्।
योऽस्मिन् शास्त्रे प्रवर्तेत तं त्वं [1]पीडयसि ध्रुवम् ॥१९६॥
एवं ज्ञात्वा वरारोहे कौलाचारपरः सदा।
आवयोः शबलाकारं मद्यं[2] तत्र निवेद्य च ॥१९७॥
त्वत्प्रधा[3][illegible]व परिभावयेत्।

---

१. पीडयसे—क० से०। २. हृक्जं तत्र—ख०, ये च वे वं द त नि म—से०। ३. त्वत्प्रया प्र—ख० से०।

त्वामिच्छाविग्रहां देवीं गुरुरूपां विभावयेत् ॥१९८॥
[1]त्वन्मयस्य गुरोः शेषं निवेद्यात्मनि योजयेत् ।

(दी०) ननु व्युत्पत्तिबलेन[2] वा आगमार्थमवगम्य तत्तत्तन्त्रान्तरे[3] पूजनादिषु प्रवृत्तिः स्यात्, किं गुरूपदेशेनेत्याशङ्क्याह—अज्ञात्वेति ।

स्वप्रकाशशिवमूर्तिरेकिका तद्विमर्शतनुरेकिका तयोः ।
सामरस्यवपुरिष्यते परा पादुका परशिवात्मनो गुरोः ॥

इत्यस्मद्गुरूक्तरीत्या [4]गुरोः ।

अविदित्वा कुलाचारं कुलं कौलिकदर्शनम ।

अत्राधारः[5] स्वच्छन्दसङ्ग्रहादिशास्त्रे विहितः । तं गुरुमुखादविज्ञाय योऽस्मिन् शास्त्रे प्रवर्तेत । अस्मिन् शास्त्रे पूर्वोक्तपरमहितपरदेवता-यजनपरमार्थसाधकः[6] तदुक्तार्थाचरणपरो भवेत् । तं [7]चुम्बकमाचकं साधकमांसमज्जादिशोषणादिरूपेण पीडयसि गृह्णासि, ध्रुवं नात्र शङ्का । अतो गुरुमुखादेव [8]अखिलमप्यवगम्य अस्मिन् शास्त्रे प्रवर्तितव्यम्, अन्यथा निष्फलं स्यादित्यर्थः ॥ १९६ ॥

एवं ज्ञात्वेति । वरारोहे! "वरारोहा मत्तकाशिन्युत्तमा वर-वर्णिनी" इति निघण्टुः । अत[9] एवमुक्तप्रकारेण ज्ञात्वा गुरुमुखादेव । कौलाचारपरः, कौलिकाः पूर्वोक्तलक्षणाः, तेषां विहिताः स्वच्छन्द-सङ्ग्रहादिशास्त्रेष्वाचाराः सदा तदनुष्ठानपरः । आवयोः प्रकाश-विमर्शात्मनोः शवलाकारम् ।

सुरा शक्तिः शिवो मांसमानन्दो मोक्ष उच्यते ।

इत्यभियुक्तवचनोक्तरीत्या सामरस्यापादानरूपं तत्पूर्वोक्तरीत्या शोधितममृतीकृतं [10]मद्यं मांसं निवेद्याऽऽवयो[11]र्नियोज्यम् । [12]त्वत्प्रथा-प्रसराकारः । तव विमर्शशक्तेः प्रथा[13] स्पन्दः, तत्प्रसराः तदुद्भूताः[14],

१. शेषं गुरोर्निवेद्याऽपि पश्चादात्मनि योजयेत्—ख०सं० । २. बलादेव—ख० । ३. तत्तत्तन्त्रान्तरेषु—ख० । ४. त्रिधामगुरोः—ख० । ५. तन्त्राचारं—क० । ६. साधके प्रवर्तेत तदुक्तार्थाकरणविचरणपरो भवेत्—ख० । ७. चुम्बकं साधका-धमं त्वं डाकिनीक्रूरयोगिनीरूपेण—क० । ८. अखिलागमार्थानव—ख० । ९. अतः—ख० नास्ति । १०. मद्यं मांसं—ख० नास्ति । ११. आवयोरिवैव यो—ख० । १२. त्वत्प्रथाप्र—ख० । १३. प्रथा—ख० । १४. तद्भूता—ख० ।

दी० आकारा यासामावरणदेवतानां [1]तास्तथोक्ताः, त्वामेव त्वदन्यतो न [2]पृथग्भूताः परिभावयेत्।

मूलोद्भवं शक्तिचक्रं यतस्तन्मयतां गतम्।
[3]तस्मिन्नेवाऽव्यये धाम्नि विलीनं परिभावयेत्॥

[4]इत्यभियुक्तवचनोक्तरीत्या विमर्शशक्तेर्विलासभूताकारा यास्ता आवरणदेवतास्तत्रैव विलीना भावयेदित्यर्थः।

त्वामिति। देवीं [5]विश्वरूपिणीं विश्वानुजिघृक्षया [6] गृहीतलीलाविग्रहाम्, [7]इच्छाविग्रहामित्यर्थः। त्वामेव गुरुरूपां विभावयेत्। त्वन्मयस्य[8] त्वद्रूपस्य गुरोस्तद्धृतं निवेद्य शेषं देवतागुरुनिवेदितशेष[9]मात्मनि योजयेद् यावत्साधकस्ताभ्यां समरसीभवति, तावच्छेषं स्वयमुपभुञ्जीतेत्यर्थः।

(से०)शास्त्रोपसंहारं नान्तरीयकतया ध्वनयन्ननधीयानं दण्डयति—(अज्ञात्वेत्यादि)। कल्पसूत्रे व्यवहारदेशसाम्येत्यारभ्य परं च शास्त्रानुशिष्टा इत्यन्तेन ग्रन्थेनोक्त आचारः कुलाचारः। गुरुपादुकामयष्ट्वेत्यत्र संज्ञापूर्वकविधेरनित्यत्वान्न सम्प्रसारणम्। गुरुप्रसादमन्तरेणैव चौर्यादिना विज्ञायेत्यर्थः। प्रासङ्गिकं समाप्य पूजाकृत्यशेषमुपदिशति—आवयोः शबलाकारं शिवशक्तिसामरस्यरूपम्। अत्रैकः पादो व्याकुलाक्षरः। शबलपदेनैव शुद्धेलाभः, द्वितीयस्यैव शिवरूपा(प)[ताया]स्तन्त्रे कथनात्। त्वत्प्रथाप्रसर एवाकारो यासां ता अणिमादिदेवतास्त्वय्येव परिभावयेत्। तास्तेजोरूपमात्रविग्रहा विभाव्य श्रीमूलदेव्याः शरीरे प्रविष्टाश्चिन्तयेत्। ततस्त्वां स्वेच्छया गृहीतवपुषं मूलदेवीं स्वगुरुरूपां ब्रह्मरन्ध्रस्थितनाथरूपेण परिणतां चिन्तयेत्। ततो विशेषार्घ्यपात्रेऽवशिष्टं द्रव्यं प्रत्यक्षाय ब्रह्मरन्ध्रस्थिताय वा गुरवे निवेद्य तदुच्छिष्टं स्वात्मनि जुहुयात्॥२०३-२०६॥

---

१. तास्तथाविधास्त्वमेव–ख०। २. पृथग्याताः–ख०। ३. तस्मिन् परेऽव्यये–ख०। ४. इत्यभियुक्तोक्त्या–ख०। ५. विमर्शरूपिणीं–ख०। ६. विश्वानुजिघृक्षागृही–ख०। ७. इच्छाविग्रहां–क० नास्ति। ८. त्वन्मयस्य–ख० नास्ति। ९. शेषं–क० नास्ति।

योगिनीनां महादेवि ! बटुकायात्मरूपिणे ॥१९९॥
क्षेत्राणां पतये मह्यं बलिं कुर्वीत हेतुना ।
नित्यं पिबन्[1] वमन् खादन् स्वेच्छाचारपरः स्वयम् ॥२००॥
अहन्तेदन्तयोरैक्यं भावयन् विहरेत् सुखम् ।
एतत्ते कथितं सर्वं सङ्केतत्रयमुत्तमम् ॥२०१॥

(दी०)बलिनिवेदनमाह—योगिनीनामिति । योगिनीनां पूर्वोक्तरीत्या मातृमानमेयमरीचीनामात्मरूपिणे परमा[2]नन्दस्पन्दरूपिणे बटुकाय । क्षेत्राणां पतये क्षेत्राणि शरीराणि तेषां पतिर्जीवात्मा [3]तस्मै । मह्यं मदहन्ताविष्टाय । हेतुना मद्येन सद्वितीयेन । बलिं कुर्वीत ।

श्वासद्वयनिरोधेन [4]कुण्डलीत्रयमेलनात् ।
यज्जीवशिवयोरैक्यं तेनासावान्तरो बलिः ॥

इत्यस्मद्गुरूक्तरीत्या सद्वितीयमद्य[5]स्वीकारेण उल्लसिते मनसि । अत [6]एव प्राणापानयोः सञ्चारे शान्ते निरस्ते [7]त्रित्वलक्षणे भेदे शिवोऽहमस्मीति स्वान्तरो बलिरित्यर्थः ।

ततः स्वैराचारपरो भूयादित्याह—नित्यमिति । नित्यं प्रत्यहं पिबन् देवतागुरुनिवेदितशेषं हेतुं खादन् तच्छेषं[8] खाद्यं वमन् द्वयमपीति सामर्थ्याल्लभ्यम् । स्वेच्छाचारपरः,

यत्र यत्र मनस्तुष्टिर्मनस्तत्रैव धारयेत् ।
तत्र तत्र परानन्दस्वरूपं सम्प्रकाशते ॥

इति विज्ञानभैरवभट्टारकोक्तरीत्या स्वस्य यत्र यत्रेच्छा जायते [9]तत्तदेव शास्त्रविहितम्[10], यत्र यत्रेच्छा न जायते तत्तदेव[11] शास्त्रनिषिद्ध[12]मपि[13] वर्तते। अतः स्वेच्छानुकूलरूप[14]पदार्थाननुभवेत्[15] । प्रतिकूल-

१. पिबन्नृत्यन्वमन्खादन्–ख०, दन्यं म ब न्खा न्म व पि–से०। २. परमात्मस्वरूपिणे–ख० । ३. अस्मै–ख० । ४. कुण्डलिनीत्र–ख० । ५. मद्यस्वीकरणोल्लसिते–ख० । ६. स्वत –ख० । ७. त्रितत्त्वलक्षणे–ख० । ८. तच्छेषं–क० नास्ति । ९. तत्र तत्र–क० । १०. निषिद्धम्–क० । ११. तत्र तत्र–क० । १२. विहितम्–क० । १३. अपि वर्तते–ख० नास्ति । १४. रूप–ख० नास्ति । १५. अनुभावयेत्–ख० ।

दी० पदार्थान् परित्यजेदित्यर्थः । अहन्तेदन्तयोरैक्यं भावयन्। अहन्ता ज्ञातृधर्मः, इदन्ता ज्ञेयधर्मः, तयोरैक्यम् ।

यत्र यत्र मिलिता मरीचय-
[1]स्तत्र तत्र विभुरेव जृम्भते ।

इत्यादिपूर्वप्रतिपादितरीत्या ज्ञातृज्ञेयचैतन्ययोः समरसीकरणलक्षणं ज्ञानं[2] तदेवाहमिति भावयन् सुखं विहरेत्। परिपूर्णज्ञानानन्दो भवेदित्यर्थः। तदुक्तं विज्ञानभैरवभट्टारकैः—

जग्धिपानकृतोल्लासरसानन्दविजृम्भणात् ।
भावयेद्भरितावस्थां महानन्दस्ततो भवेत् ।। इति ।

परमप्रकृतमुपसंहरति—एतदिति । स्पष्टम् ।। १९७–२०१ ।।

(से०) (योगिनीत्यादि)। तन्त्रान्तरे गणपत्यादिकुरुकुल्लादिबलय उक्ताः, तेष्वावश्यका योगिनीबटुकक्षेत्रपालबलय इत्यर्थः। कल्पसूत्रे तु सर्वभूतबलिरेक एवोक्तः। हेतुनेत्यनेन बलिपात्रासादनमाक्षिप्यते, विशेषार्घ्यस्य निःशेषीकरणात्। वस्तुतस्तु पाठक्रमबाधेनार्थक्रमादादौ बलिदानं ततो हविःशेषप्रतिपत्तिः। तेन कल्पसूत्रैकवाक्यतापि सम्पद्यते ।। २०७ ।।

( दण्ड्यमित्यादि ) । व्याकुलाक्षरोऽत्र प्रथमश्चरणः । पूजाबहिःकालेऽप्यनवरतं स्वस्य जगतश्चाभेदं विभावयन्नेव लौकिकवैदिकव्यवहारेषु संसरेत् । तेन बाह्यसन्तापानाक्रमणात् सुखैकरूप एवावतिष्ठते ।।२०८।।

**गोपनीयं प्रयत्नेन [3]स्वगुह्यमिव सुव्रते ।**
**चुम्बके[4] ज्ञानलुब्धे च[5] न प्रकाश्यं त्वयानघे ।।२०२।।**
**अन्यायेन न दातव्यं नास्तिकानां महेश्वरि ।**
**एवं त्वयाऽहमाज्ञप्तो मदिच्छारूपया प्रभो ।।२०३।।**

(दी०) सर्वज्ञानोत्तमत्वादत्यन्तगोपनीयमित्याह—गोपनीयमिति । यथा स्वगुह्यं योनिं परपुरुषेभ्यो गोपयसि[6] प्रयत्नेन, तथा [7]एतदपि स्वतन्त्रमनर्हेभ्यो गोपनीयमित्यर्थः।

---

१. एष पादो नास्ति—ख० । २. ज्ञानम्—क० । ३. स्वयोनि—क० । ४. चम्बुके—क० । ५. वा—ख० । ६. गोपनीयम्—क० । ७. इदमपि—ख० ।

ननु [1]केऽनर्हा येभ्यो गोपनीयमित्यत आह—चुम्बके इति। [2]भक्ति-हीनोऽनेकत्राऽऽसक्तस्तत्तत्तन्त्रान्तरेषु[3] [4]विद्यामात्रपाठाच्चुम्बकः। ज्ञानलुब्धो विद्यासाधारण्यात् काव्यनाटकादिविद्यावदत्रापि ज्ञानं सम्पाद्यमिति मन्वानः, तयोर्द्वयोरपीदं[5] रहस्यं त्वया न प्रकटीकरणीयमित्यर्थः॥ २०२॥

[6]विध्यतिक्रमादन्यायेन न करणीयमित्याह–अन्यायेनेति। विध्यतिक्रम एवाऽन्यायः। 'नास्ति परलोकः' इति ये [7]मन्यन्ते [8]चुम्बका बौद्धादयः, ते नास्तिकाः।

नन्वत्र को विधिरित्यत आह—एवमिति। प्रभो! [9]जगत्प्रवृत्ति-नियमनप्रभावशालिनि। अत एव—

शक्त्या [10]हीने शिवे शून्ये[11] नाम धाम न विद्यते।

इति चतुःशतीशास्त्रोक्तरीत्या त्वया विनाऽहं किमपि कर्तुं [12]न शक्तः, वक्तुं न समर्थः। तद् सदिच्छारूपया ममाऽखिलेश्वरस्याऽखिलागम-शास्त्रवक्तुरिच्छारूपया [13]विवक्षारूपया अनाश्रितकलया आज्ञप्तः प्रेरितः[14]। ज्ञानमेवमुक्तलक्षणं प्रोक्तवानस्मि। [15]ततस्त्वदाज्ञैव विधिरित्यर्थः॥ २०३॥

(से०) शास्त्रोक्तमर्थमनुपलक्षणपूर्वकं गोपायति—(एतदित्यादि)। गोपनीयं परशिष्येभ्य इति शेषः, परपुरुषेभ्य एव गोपनीयेन गुह्यनोपमितत्वात्। स्वशिष्येष्वपि कतिचित्परिसङ्ख्यष्टे—चुम्बक इति। श्रीविद्यामूलमात्रजपपरस्तदीयकर्मजालज्ञानरहस्यज्ञानजालयोरनासक्तश्चुम्बकस्तदनुष्ठानरतिहीनः। शास्त्रान्तरज्ञानसाधारण्येनैतच्छास्त्रीयपाण्डित्यमात्रेच्छुर्ज्ञानलुब्धस्तयोः प्रदर्शनीयमपि न, किमुत न देयमिति वक्तव्यम्। न चैवं सति "ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं श्रयेत्" इति विधेरननुष्ठानलक्षणमप्रामाण्यमापद्येतेति वाच्यम्,

१. केनानर्हेभ्यो–क०। २. भक्तिहीनोऽन्यत्रासक्तः–ख०। ३. तत्तत्तन्त्रवरेषु–ख०। ४. विद्यामात्रसाधो चम्बुकः–क०। ५. इदं–क० नास्ति। ६. विध्यतिक्रमणादन्यायो न करणीय इत्यत आह–ख०। ७. मन्वते–ख०। ८. ते चम्बुका–ख० नास्ति। ९. जगत्प्रकृतिविवृत्तिनियमप्र–ख०। १०. विना–ख०। ११. सूक्ष्मे–ख०। १२. न शक्तः–ख० नास्ति। १३. विवक्षारूपया–ख० नास्ति। १४. प्रोषितः–ख०। १५. ततस्त्वदाज्ञैव विधिरित्यर्थः–ख० नास्ति।

से० कुरुक्षेत्रे प्रतिग्रहनिषेधस्य तत्र दानविधेश्च परस्परोपमर्दकत्वेऽपि निषेधमतिक्रम्य प्रवृत्तं ब्राह्मणं गृहीत्वा दानविधीनां प्रामाण्योपपादनवदिहापि तत्सम्भवात्, तत्रत्यज्ञानलुब्धपदस्य सानुष्ठानज्ञानलुब्धपरत्वाद्वा। यस्त्वनुतिष्ठासति जिज्ञासति च तस्मै सच्छिष्यायाप्यन्यायेन गुरूपसदनदीक्षानियमस्वाध्यायाध्ययनपरिपालनादिक्रमोल्लङ्घनेन न देयम्, नास्ति परलोक इति बुद्धिमतां तु सुतरां न देयमित्यर्थः ॥ २०९–२१० ॥

[1]अज्ञानेन तु यो दद्यात् स परेतो भविष्यति ।
सङ्केतं यो [2]विजानाति योगिनीनां भवेत्प्रियः ॥२०४॥
सर्वेप्सितफलावाप्तिः सर्वकामफलाश्रयः ।
यतोऽपि दृश्यते देवि! कथं[3] विद्वान्न चिन्तयेत् ॥२०५॥

(दी०)[4]अतस्तदतिक्रमे महदनिष्टं स्यादित्याह—अज्ञानेनेति। अतस्त्वदाज्ञाविधिमुल्लङ्घ्य चुम्बकादिभ्यो य एतज्ज्ञानं दद्यात् स परेतो भविष्यति।

एतत्परिज्ञानफलमाह—सङ्केतमिति। एतत् सङ्केतत्रयं गुरुमुखादेव यो विजानाति स योगिनीनाम्, योगः परमशिवसमवायः, तद्वत्यः परमचिन्मरीचिभूताः शक्तयः, तासां प्रियः परमशिवः, तस्याऽनन्तशक्ति[5]मत्त्वात्। तदुक्तं तन्त्रान्तरे—

"शक्तयोऽस्य जगत्सर्वं शक्तिमांस्तु महेश्वरः" इति।

परमशिव[6] एव भवेदित्यर्थः ॥ २०४ ॥

ननु परशिवतादात्म्यवपुषा पुरुषार्थः किमित्यत आह—सर्वेप्सितेति। यतः सर्वेषां जनानां काम्यानां[7] काम्यमानानां फलानामाश्रयः परमशिवः। अतः [8]सर्वेप्सितफलावाप्तिः सर्वेषां यानीप्सितानि स्पृहणीयानि फलानि तेषां प्राप्तिः परमशिवतादात्म्य[9]परिज्ञानाद्भवति, स एव परमपुरुषार्थ इत्यर्थः।

---

१. इदं पद्यार्धं–ख०से०नास्ति। २. योऽभिजा–ख०से०। ३. कथञ्चिन्न विचिन्तयेत्–ख०से०। ४. 'अत' इत्यारभ्य 'अज्ञानेनेति' इत्यन्तो ग्रन्थः ख० नास्ति। ५. शक्तित्वात्–ख०। ६. 'परमशिव' इत्यारभ्य 'सर्वेप्सितेति' इत्यन्तं–ख० नास्ति। ७. काम्यानां–क० नास्ति। ८. सर्वेप्सितफलावाप्तिः–ख० नास्ति। ९. तादात्म्य–क० नास्ति।

ननु स कुत्र दृश्यत इत्यत आह्—यतोऽपीति । यतोऽपि यत्र क्वापि दी० बहिरन्तर्वा मनः प्रसरति, तत्र [1]तदनुभवरूपेण स एव दृश्यते, तस्य सर्वगतत्वात् । तदुक्तं विज्ञानभैरवभट्टारकैः—

यत्र यत्र मनो याति बाह्ये [2]वाऽभ्यन्तरे प्रिये ।
तत्र तत्र शिवावस्था [3]व्यापकत्वात् प्रकाश्यते ॥ इति,
तत्र तत्राक्षमार्गेण चैतन्यं व्यज्यते प्रभोः । इति [4]च ।

ननु कथं तथा दृश्यत इत्यत आह्—कथं[5] विद्वानिति । सत्यं दृश्यते तथा न पश्यति "न मां पश्यति कश्चन" इत्युपनिषदुक्तरीत्या—

प्रत्यक्षगोचरं देवं लोकं [6]चाधिप्रमाथिनम् ।
दृष्ट्वा स्मृति[7]शिरः सान्द्रमनुक्रोशति दुःखितः ॥

इति तन्त्रान्तरोक्तरीत्या दृश्यमानमप्युपदेशहीना न पश्यन्ति । "निष्कलत्वं शिवे [8]बुद्ध्वा" इति निष्कल[9]परशिवतादात्म्यापरोक्षानुभवशाली गुरुकटाक्षवीक्षणात् त्रुटित[10]समस्तपाशजालः परिस्फुरत्परमशिवाहन्ताविज्ञान इदं [11]कथं चिन्तयेदिति तत्सर्वत्र समभावं कथञ्चिन्न पश्येदित्यर्थः ॥ २०५ ॥

[12]शिवेनाऽतिरहस्यत्वादविस्पष्टतयोदितम् ।
त्वद्रूपं नाथवचनाद् विवृतं[13] नो क्षमस्व तत् ॥

इति श्रीमत्परमयोगीन्द्रपुण्यानन्दनाथशिष्याऽ-
मृतानन्दनाथयोगिप्रवरविरचितायां
योगिनीहृदयदीपिकायां पूजा-
सङ्केतः समाप्तोऽयं
तृतीयः ॥

॥ समाप्तश्चायं ग्रन्थः ॥

—:❀:—

१. एतदनु—क० । २. चाऽभ्यन्तरेऽपि च—ख० । ३. व्यापकः स्यात् क यास्यसि—ख० । ४. च—ख० नास्ति । ५. कथञ्चिन्न विचिन्तयेत्—ख० । ६. चातिप्र—ख० । ७. श्रुति—ख० । ८. बुद्ध्या—क० । ९. निष्कलत्वं परमशि—क० । १०. समस्त—ख० नास्ति । ११. कथञ्चिद्विचि—ख० । १२. शिवेनाऽम्ब रह—क० । १३. विवृतं मोक्षमुच्यते—ख० ।

(से०)एवं शास्त्रमुद्दिश्यान्ते न्यूनातिरिक्तदोषपरिजिहीर्षया स्वगुरुं स्मरति— एवं त्वयेति। प्रभौ स्वामिनि मदिच्छारूपं धृतवत्या त्वया मदाचार्ययाहं त्वच्छिष्य आजन्मोऽस्मि। प्रभुपद[मेतदेव द्योतयति]। ( सङ्केतमित्यादि )। सङ्केतत्रय-ज्ञानमार्गेण योगिनीनां दयापात्रं भवति। सर्वेप्सितफलानां प्राप्तिर्यस्य स एव ( व ) तादृशश्च भवति। शास्त्रसमाप्तिद्योतनायैतदेव विशेषणमावर्तयन्नाह— सर्वकाम्यफलाश्रय इति। एतच्छास्त्रपरमरहस्यसारं निरूप्य "भूयः स्यात् प्रोक्त-मिलनम्" इति शैवशास्त्रान्तिमसूत्रार्थमर्धेन संक्षिप्याह—यतोऽपीति। [ यतः ] सर्वत्र स्वयमेव दृश्यतेऽतः स्वापेक्षया भिन्नं किमपि न चिन्तयेदित्येतदुपासना-सारमिति सर्वं शिवम् ॥ २११–२१२ ॥

इति श्रीभास्करोन्नीते नित्याषोडशिकाम्बुधेः।
व्याख्याने सेतुबन्धाख्ये विश्रामोऽभवदष्टमः ॥

एवं द्वादशोत्तरशतद्वयश्लोकैरष्टमः पटलः। संहत्य सप्तदशोनोत्तरच-[तुःशता]। उभयोश्च[तुःशत्योर्योगेन शास्त्रस्याष्टौ शतानि सार्धत्रयोदशाधिकानि श्लोकानां भवन्ति। तत्तु गणेशग्रहनक्षत्रेत्यादिका द्वादशश्लोकी मङ्गलाचरण-रूपा तन्त्राद् बहिर्भूतेति तत्रैवोक्तम्। यतोऽत्रोत्यन्तिममर्धश्च बहिर्भूतमित्यष्ट-शतासमाख्योपपन्ना, एकश्लोकाधिक्यस्य त्यान्तरत्वात्, पञ्चाशल्लिपिभिरिति व्यवहारदर्शनात्। तच्छक्तिपञ्चकं सृष्ट्येति श्लोकस्य पूर्वोत्तरतन्त्रयोर्वारद्वयं पाठात्तयोरन्यतरस्य परिगणनाभावाभिप्रायेण वा तदुपपत्तिरित्यवधेयम्।

श्रीविश्वामित्रवंश्यः शिवभजनपरो भारती सोमपीथी
काश्यां गम्भीरराजो बुधमणिरभवद्भास्करस्तस्य सूनुः।
चैत्रे श्रीगमकोटीश्वरपुरि शिवरात्रौ शके शर्मन्नृपे
नित्याषोडश्युदन्वत्परतटगतये सेतुमेतं न्यबध्नात् ॥ १ ॥

ज्येष्ठास(त्स)तीर्थ्यात् सरहस्यमेतत्
ससम्प्रदायं समधीत्य तन्त्रम्।
तन्त्राणि चान्यानि विचार्य टीका-
मेकामकार्षीद्भुवि भास्करार्यः ॥ २ ॥

श्रुतिस्मृतिन्यायपुराणतन्त्रसूत्रागमश्रीगुरुसम्प्रदायान्।
निर्मथ्य निश्चित्य कृतापि टीका शोध्यैव सद्भिर्मयि हार्दवद्भिः ॥ ३ ॥

प्रमादो मेऽवश्यं भवति म[ति]मान्द्यादलसतः　　　सं०
पदार्थन्यायानामपि　　दुरवगाहत्वनियमात् ।
परन्त्वन्तः　सन्तः सदयहृदया नाथचरणा-
वुदारौ तस्मान्मे न खलु स्वल्पापोभयभयम् ॥ ४ ॥
अद्याप्यस्ति विपश्चितामपि महत्सन्देहकोटिद्वयं
यः श्रुत्या जगदीश्वरो निगदितः सप्तः किमप्तोऽथ सः ।
तत्रेशः प्रथमैव कोटिरिति किं निश्चायनाय स्फुटं
नाम्नैव प्रथितोऽभवत्परशिवः श्रीसप्तकोटीश्वरः ॥ ५ ॥

सा इत्येकाक्षरं जटावाचकम् ताभिः सहितः सप्तः शिवोऽसौ हरिरित्यर्थः ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणनिखिलतन्त्रस्वतन्त्र-
श्रीमद्गम्भीरराजभारतीदीक्षितसूनुना भासुरानन्दनाथदीक्षा-
भिधानेन भास्कररायेण प्रणीतो नित्याषोडशिकार्णव-
व्याख्यानात्मा सेतुबन्धः सम्पूर्णः ॥

—::*::—



# परिशिष्टम्–१

## दीपिकायामुद्धृतानां ग्रन्थानां ग्रन्थकर्तॄणां च

## अक्षरानुक्रमणी


अभियुक्त-(वचनम्) ५, ७, २६, ६९, ७३, ७४, ७८, ८१, ८६, ११६, १२१, १३१, १३२, १३४, १३७, १५६, १७२, १७४, १८२, १९३, १९५, १९६, २१४, २३७, २४७, २४८, २५०, २५१, २५७, २६४, २६५, २८०, ३०१-३०३, ३०९, ३१३, ३१५, ३३३, ३३५, ३३७, ३३८ ।

अमरः ४८, २५१

अमृतानन्दः २

अस्मद्गुरुः १९, ९१-९३, १०६, १७५, १८५, १८८, १८९, १९५, १९६, २३५, २४५, २६३, ३३७, ३३९

आगमान्तरम् २९०

आज्ञावतारः १५, ९४, २६४, ३०७

ईश्वरप्रत्यभिज्ञा ६४, ८०, ८७

उत्तरपदम् २७१

उद्धारोर्ध्वतन्त्रम् २८

उपचारोपनिषत् २७२

उपनिषत् ५१, ११७, १४८, १६९, १७९, २५०, ३२४

कामकलाविलासः १९, ३०, १०८, ११८, १६०, ३१६

क्रमोदयः २६६, २८३,

ग्रन्थान्तरम् २०१

चतुःशती(शास्त्रम्) ३, १४, ७४, ८४, ९३, ९४, १५८, १६७, १७७, २७२, २७३, २७८, २८०, २८३, २८५, २८८, २९१ २९६, २९८, २९९, ३०२, ३०३, ३०६, ३०७, ३०९, ३११ ३२४, ३४१

चिद्गगनचन्द्रिका ११, १८, ९४, १३२, १४४, १७९

ज्ञानदीपविमर्शिनी १६०

तत्त्वविमर्शिनी २३५

तन्त्रान्तरम् ४४, ६५, ९३, ९५, २४०, २५५, २६४, २९३, ३३१ ३४२, ३४३

तन्त्रावतारः १

तन्त्रावलोकः १९३

नवशतीशास्त्रम् ६३
निघण्टुः २२०, २४५, २७८, ३३७
पद्धतिः २४१, २४३, २६४, २६९
परापञ्चाशिका ७६, ८७, १३२ २८२, २८८, २८९, २९३, २९९, ३०२ ३०३, ३३०, ३३४
पातञ्जलयोग(सूत्रम्) १९६, २६६
प्रामाणिकवचनम् ६४, ९२, ११६, १७९, १८५, १८७, २५०, २६५, २७१, २८५, ३१३
भगवद्गीता ७, १०५
भूतलिप्युद्धारक्रमः २९०, २९५
मया ६१, ७८, १००, १२४, २०८
महाकविः ८७, २४५, ३००
महास्वच्छन्दम् २, ३८, ३९, १८५
महास्वच्छन्दसंग्रहः १३३
मुख्याम्नायक्रमः २६९
मुख्याम्नायरहस्यविधिः १९६, २७२
योगिनीहृदयम् १, ५
लघुस्तोत्रम् ३१६
वामकेश्वरतन्त्रम् १, ३, ९१
विज्ञानभैरवभट्टारकः ५२, १९२, १९६, १९७, २४४, २६४-२६५, २९९, ३२०, ३३३, ३३९, ३४०, ३४३
वेदरहस्यम् १२-१३
शैवतन्त्रम् ३२६, ३२७, ३३०, ३३१
श्रीचक्रन्यासः २८०
श्रीपराक्रमः २४५, २५४, २६३
श्रीपरात्रिंशिका ९३
श्रुतिः ३-४, १५, १८, ६३, ९४, १०५-१०६, ११०, ११६, १४४, १७६, १८१-१८२, १९५, २४०, २८०, २८४, ३०९
सङ्केतपद्धतिः १८, २६, ५५, ८४-८५, ९०, १०९-११० १४४, १६५, १७०, १९०, २६८, २७२, २८८
सुभगोदयवासना ६८
सौभाग्यसुभगोदयः ६१, १००, १२४, १७१
स्तोत्रावली २९३
स्मृतिः १८२
स्वच्छन्दभैरवम् १५३
स्वच्छन्दसंग्रहः ३९-४०, ४४-४५, ४८-५१, ५९, ६४, ६८, १४०-१४१, १४४, १४९-१५०, १५५, १५८-१५९, १६५, १६७, १७७, १८३-१८५, १८८, १९४, २०७, २१८, २४०-२४१, २५५-२५७, २७०, २७३, २८४, २८८, २९०, २९५, ३०२, ३०७, ३१५, ३३०, ३३३, ३३५, ३३७
हंसपरमेश्वरम् १५८

—:*:—

# परिशिष्टम्–२

## सेतुबन्धे उद्धृतानां ग्रन्थानां ग्रन्थकर्तॄणां च

## अक्षरानुक्रमणी


अग्निपुराणम् ३२८
अथर्ववेदः ३६, ३७
अनेकार्थध्वनिमञ्जरी १४६
अन्ये २८, १८०, २१३, २२१, २५०, २७६, २९८
अभियुक्ताः २१, ६५, ६७, १२८, १९३, १९४, १९७, २००
अमरः ४९, ६४, १५७, २३७, २८१
अमृतानन्दनाथः १३०, १५०
अस्माभिः १३, ४६, ६०, ९३, ११३, ११५, १४६, १६३, १७८, २१०, २११, २१७, २२६, २४१, २६१, ३२८
आत्मपुराणम् ८, ११, १४८
आत्मोपनिषद् २६
आथर्वणाः २०, २६
आम्नायरहस्यम् १९८
आर्यकृष्णः (ईश्वरकृष्णः) २८७
उत्तरचतुःशती ३, ५, ३४४
उपनिषद्‌ ६९
उपवर्षः १२८
उपासनाकाण्डविद् ३६
एकाक्षरकोषः १०३
ऐतरेय(उपनिषद्) ११३
औपनिषदाः ३६, १८१
कल्पसूत्रम् ९, २१५, २४०, २४६, २५३, २५८, २६१, २६२, २७५, ३०८, ३१०, ३१२, ३१४, ३३५, ३३८, ३४०
कल्पसूत्रकारः ३६, ३७
कादिमतम् ८
कामकलाविलासः ३०, १२८
कामकलाविलासकारः(कृत्)२९,१२९
कामकलाविलासानुयायिनः ३१
कालिकापुराणम् ६०
काश्मीराणाम् १६९
कुमारीकल्पः २५२
कुलार्णवः ९, १०, १८६, ३१०, ३३६
कूर्मपुराणम् १३
कृष्णदासः ११३
केचित् २६, ३०, ३३, ४७, ४९, ५५, १११, १४५, २०२, २०५, २०९, २११, २१३, २१६, २२१, २२२, २३९, २४९,

२६०, २६२, २७६, ३२८
कोशः १३६, १३८, १४०, १४२, १४५, १४७, १७७, १७८, २५२, ३००, ३०८, ३१८, ३३१
कौषीतकिब्राह्मणम् २२८
क्रमोत्तमपद्धति(कारः) २२१, २२६
क्रमोदयः २८६
गम्भीरराजः ३४४
गीता ११, २२८, २७४, ३०४
गोपथब्राह्मणम् ३७
गौरीयामलम् २५३
चन्द्रिका २६१
चिद्वल्ली १३०
छन्दःकौस्तुभः ६०
जैमिनिः २२८
ज्ञानार्णवः १०३, २०२, २०५, २०६, २०९, २१०, २११, २१३, २३८, २५२, २५९, २६१, २६२, २७४, २७५, ३१३
तन्त्रराजः ६९, १०२, १०३, ११३, १२७, १६३, १८१, २५३, २७५, ३००
तन्त्रसारः २३९, २६२
तन्त्रान्तरम् ४७, ४९, ५०, १४२, २०५, २१०, २११, २१६, २२१, २३८, २४३, २५३, २५८, २६१, २६७, ३२९, ३४०
तपनीयश्रुतिः ११३
तार्किकाः १८१
तैत्तिरीयप्रातिशाख्यम् १२२
तैत्तिरीयशाखा २०
दक्षिणामूर्तिसंहिता ९६, २६२
दीक्षितः १५२
द्वादशश्लोकी २७७
नन्दनः (कोशः) ३३, १६१, २९२
नव्याः २०२, २१०, २१३, २३८, २३९, २५२, २५९, २६२, २७४, २७६
नामत्रिशती १०३
निजानन्दनाथः २२१
निरुक्तम् ३
नैयायिकाः १३५
पञ्चशिखाचार्यः १४५
पद्धतिकारः २३८, २३९, २५०, २६२
पद्मपुराणम् २२९
परशिवः ३१०
परे २०२, २२१, २७६
पाणिनिशिक्षा १२८
पिङ्गलः ६०
पूर्वचतुःशती ३६, ४२, ७३, ८५, १६१, १९२, २६८, ३२५
पूर्वतन्त्रम् १५, ९६, २२३, २२६, २३७, २५२, २६८
पूर्वाचार्याः ४२
प्रत्यभिज्ञायाम् १४१
प्रपञ्चसारसंग्रहः २५८

